Published by
The Kaivalyadhāma S. M. Y. M. Samiti,
Lonavla, Dist. Poona



Printed by Mr. S. N. Chapekar, at the Ulhāsa Mudraṇālaya,
689/1/5 Sadāshiv Petha, Poona 2, Pages 1 to 162,
and
the rest by Mr. D. K. Kakanurkar, at the Prakāsha Mudraṇālaya,
395/4 Sadāshiv Peth, Poona 2.



ॐ

सोऽहम् ।

# बृहद्योगियाज्ञवल्क्यस्मृतिः

श्रीमत्परमहंसमाधवदासशिष्येण कैवल्यधामसञ्चालकेन
कुवलयानन्देन स्वामिना
तथा
तर्कसाङ्ख्यतीर्थ-धर्मपारीण-पदवीभूषितेन
कोकजे इत्युपाह्वगोपालसूनुरघुनाथशास्त्रिणा
च
संशोध्य सूचीटिप्पण्यादिभिः संयोज्य च
संपादिता ।



सा च
पुणेमण्डलान्तर्गतलोणावळेनगरस्थया
कैवल्यधामश्रीमन्माधवयोगमन्दिरसमित्या
प्रकाशिता ।

शकाब्दः १८७३ ]　　　　[ क्रिस्ताब्दः १९५१

मूल्यं रूप्यकदशकम्

## ग्रन्थाङ्गसूची



## प्रस्तावना

बहुधा श्रुतो विद्वद्भिर्बहुशश्चोद्धृतो निबन्धकारैर्बृहद्योगियाज्ञवल्क्यस्मृतिनामधेयकोऽयं ग्रन्थो न केनापि मुद्रितपूर्व इत्यपूर्वमेवेदं प्रकाशनमस्याः स्मृतेः। कैवल्यधामश्रीमन्माधवयोगमन्दिरसमितेः प्रथममेवेदं संस्कृतग्रन्थप्रकाशनमिति चापूर्वमेव। आधुनिकप्राचीनविद्यासमन्वयेन योगविद्यासंशोधनपराऽपूर्वैवेयं समितिरिति चापूर्वत्रयस्यास्य संगमोऽयं त्रिवेणीसंगम इवात्यन्तमादरणीयः सर्वेषामेव भवेदित्यत्र नास्ति संदेहलेशोऽपि।

अत्यन्तप्रसिद्ध-बहुधामुद्रित-याज्ञवल्क्यस्मृतितोऽस्याः स्मृतेर्भिन्नत्वं सर्वसंमतमेव। सुप्रसिद्धा याज्ञवल्क्यस्मृतिर्मुनीन् प्रत्युपदिष्टा। इयं तु शिष्यमुमुक्षु–जनकादिनृपवर-सहितान् मुनीनुद्दिश्य प्रोक्ता इति वैलक्षण्यमुपदेश्यानामुभयस्मृतिप्रस्तावयोः स्पष्टमेव। सर्वेऽपि निबन्धकाराः ‘ तदुक्तं याज्ञवल्क्येन ’, ‘ तदुक्तं योगियाज्ञवल्क्येन ’ इति पार्थक्येनैवैतयोः स्मृत्योः श्लोकानुदाहरन्ति। अग्रे मुद्रिताया बृहद्योगियाज्ञवल्क्यस्मृतिगतविषयानुक्रमण्याः सुप्रसिद्धयाज्ञवल्क्यस्मृतिप्रातिपादितविषयानुक्रमणिकया साकं तुलनयात्येतदेव स्मृत्योरनयोर्भिन्नत्वं स्पष्टं भविष्यति। सुप्रसिद्धायां याज्ञवल्क्यस्मृतौ आचाराध्यायः, व्यवहाराध्यायः, प्रायश्चित्ताध्यायश्चेत्यध्यायत्रयमेव विद्यते। अस्यां तु द्वादशाध्यायाः। तत्राप्यस्यां स्मृतौ व्यवहारस्य गन्धोऽपि नास्ति। प्रायश्चित्तमपि स्वल्पमेव वर्णितम्। आचारस्तु महता विस्तरेण प्रतिपादितः। तत्रापि संस्काराः, वर्णधर्माः, आश्रमधर्माश्च नास्यां स्मृतौ समुपदिष्टाः। किन्तु स्मृतावस्यां स्नानम्, तर्पणम्, पूजा, संध्या, सूर्योपस्थानम्, जप इत्यादय आह्निकान्तर्गता एव केचन विषयाः प्राणायामध्यानादयश्च योगशास्त्रीया विषयाः प्रतिपादिताः। अतश्च स्मृत्योरनयोः परस्परं विषयभेदादपि भिन्नता स्पष्टैव।

तदेवमेतयोः स्मृत्योः परस्परं भिन्नत्वेऽपि तयोः कर्ता भिन्नोऽभिन्नो वेति निश्चयेन न वक्तुं शक्यते। यतः पक्षद्वयेऽपि प्रमाणं समुपलभ्यते। एतद्ग्रन्थद्वयस्य कर्त्रोरैक्यं तु न केवलं याज्ञवल्क्य इति संज्ञया किन्तूभयोर्मिथिलास्थत्वेनापि वक्तुं सुवचम्। यथा—

मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन्। याज्ञ. १.२
मिथिलास्थं महात्मानं......याज्ञवल्क्यम्। बृया. १.१

तथैव—

योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता। याज्ञ. ३.११०

इति वचने याज्ञवल्क्यस्मृत्युपलब्धे योगशास्त्रपदेन यदीयं बृहद्योगियाज्ञवल्क्यस्मृतिरेव विवक्षिता तदा ग्रन्थद्वयमिदमेककर्तृकमित्येव सिद्धं भवति। अपरं च याज्ञवल्क्यस्मृतिस्थस्य

**स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।** याज्ञ. १.२२

एतद्वचनस्य परामर्शकम्

**स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुराऽनघ।** बृया. ७.१

एतद्वचनमस्यां स्मृतौ समुपलभ्यते। उभयत्रस्मृतावुपलभ्यमानाः केचन सर्वांशेन केचित् तु बह्वंशेन समानाः श्लोका अप्येतदेवोपोद्बलयन्ति। यथा—

**द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः।**
**हिताऽहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्॥** याज्ञ. ३.१०८;
हिता नाम हि ता नाड्यः। बृया. ९.१९३–९४

**मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः।**
**स ज्ञेयस्तं विदित्वेह पुनराजायते न तु॥**
याज्ञ. ३.१०९; बृया. ९.१९४–९५

**मोहजालमपास्येह पुरुषो दृश्यते हि यः।**
**सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः॥** याज्ञ. ३.११९;
मपास्याथ...सहस्रधा। बृया. ९.१९२–९३

**अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।**
**सितासिताः कर्बुनीलाः कपिला नीललोहिताः॥** याज्ञ. ३.१६६;
कद्रुनीलाः ... पीतलोहिताः। बृया. ९.१६७–६८

**ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।**
**ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥** याज्ञ. ३.१६७;
ते यान्ति परमां गतिम्। बृया. ९.१६८–६९

**यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम्।**
**तेन देवशरीराणि सधामानि प्रपद्यते॥** याज्ञ. ३.१६९;
यदस्य स्याद्रश्मि...मेवमवस्थितः।
तेन देवनिकायानां स्वधा......। बृया. ९.१६९–७०

**ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम्।**
**उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा॥**
याज्ञ. ३.१९८; बृया. ९.१८८–८९



**निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन्।**
**तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः॥**
याज्ञ. ३.१९९; बृया. ९.१८९–९०

**संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः।**
**द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत्॥** याज्ञ. ३.२००;
संनियम्येन्द्रियग्रामं पाषाण इव निश्चलः। बृया ९.१९०–९१

इत्यादयः श्लोका उभयत्र प्रायशः समाना एव। ततः प्रतिभाति यदेतयोरेक एव कर्ता इति। विश्वरूपाचार्यस्तु 'स्नानविधिराचार्येणान्यत्र दर्शित' इत्यादि (अधिकं तु ५३तमे पृष्ठे चतुर्थपङ्क्तिटिप्पण्यां व्यक्तम्।) प्रतिपादयन्, वीरमित्रोदयश्च 'योगियाज्ञवल्क्यवृद्धमनु ... ... स्मरणानि षट्त्रिंशत्स्मृतिकार कर्तृकाण्येव। अवस्थाभेदेन तैरेव करणात्।' (याज्ञ. वीमि. १७; वीमि. परि. १६) इति प्रतिपादयन्नेतदेवानुमोदते।

एवमेतयोः स्मृत्योरेककर्तृकत्वसाधकबहुप्रमाणसत्त्वेऽपि स्मृत्योरनयोः केषुचिद्विषयेषु परस्परविरुद्धं प्रतिपादनमेतयोरेककर्तृकत्वे शङ्कामुपजनयति। तथा हि—

**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्।** याज्ञ १.१९
**पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे।**
**ब्राह्मं दैवं तथा पैत्रं प्राजापत्यं तु सौमिकम्॥** बृया. ७.७५

इत्येवं स्मृतिद्वये विप्रदक्षिणकरस्था तीर्थसंख्या विभिन्ना दृश्यते। याज्ञवल्क्यस्मृतौ चत्वार्येव तीर्थानि प्रतिपादितानि। योगियाज्ञवल्क्येन तु पञ्चैव। विरोधस्यास्य परिहाराय विश्वरूपाचार्येण या युक्तिः प्रदर्शिता (सा त्वग्रे १५८ तमे पृष्ठे २५तमपङ्क्तौ व्यक्ता) न सा परितोषाय विदुषां प्रभविष्यतीति संभावयामः।

प्रतिदिनानुष्ठेयसंध्यासंख्याविषयेऽप्येवमेव वैमत्यं गोचरीभवति। तथा हि—

**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्।**
**संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्॥**
याज्ञ. १.२४–२५

इत्यत्र याज्ञवल्क्यस्मृतौ सायंसंध्या–प्रातःसंध्येति संध्याद्वयमेव नित्यानुष्ठेयतया समुपदिष्टमुपलभ्यते। एवमेव मनुस्मृतौ (२.१०१–१०३), आश्वलायनगृह्यसूत्रे (३.७), आपस्तम्बधर्मसूत्रे (१.११.३०.८), गौतमधर्मसूत्रादौ (११.१७) च संध्याद्वितयपक्षपातो दृश्यते। योगियाज्ञवल्क्येन च—

**संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा** । बृया. ६.२५

इत्यादौ नित्यं संध्यात्रयमुदिष्टं दृश्यते । गृहस्थानुष्ठेयप्रतिदिनस्नानसंख्यायामपि वैलक्षण्यं लक्ष्यते । तथा हि—

**स्नात्वा देवान् पितृंश्चैव तर्पयेदर्चयेत्तथा** । याज्ञ. १.१००

इत्यत्र याज्ञवल्क्येनैकमेव स्नानं गृहस्थस्योपदिष्टम् । परं योगियाज्ञवल्क्येन—

**उभे संध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः** । बृया. ६.२६

इत्येवं तस्य स्नानद्वयमुपदिष्टम् । तदिदं वैमत्यं भेदमेवैतयोः स्मृत्योर्द्रढयतीति मन्यामहे ।

परकीयनिपानस्नानप्रसंगे स्नानकर्त्रा प्रथमं निपानतः कतिपयान् मृत्पिण्डानुद्धार्यैव तादृशे निपाने स्नानं कर्तव्यमिति स्मृतिकृतामादेशः सुप्रसिद्ध एव । तत्र कति मृत्पिण्डाः स्नात्रा समुद्धर्तव्या इत्यत्र—

**पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिषु** । याज्ञ. १.१५९.

**सप्त पिण्डान् समुद्धृत्य ततः स्नानं समाचरेत्** ॥ बृया. ७.१०९

इति वचनद्वये उद्धार्यमृत्पिण्डानां पञ्चेति सप्तेति च विभिन्नैव संख्या समादिश्यत इति विभिन्नादेशदानमिदमनयोर्लक्षणीयमापतति ।

केषां गुणानां सर्वधर्मसाधनत्वमित्यस्मिन् विषयेऽपि—

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।**
**दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्** ॥ याज्ञ. १.१२२
**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।**
**दमः शमार्जवं दानं सर्वेषां धर्मसाधनम्** ॥ बृया ७.१५९

इति श्लोकद्वये किञ्चिदेव वैमत्यं दृश्यते । यद्यप्युभयत्र नवैव गुणाः प्रोक्तास्तथापि याज्ञवल्क्यस्मृतिपरिगणितदयाक्षान्तिगुणयोः स्थाने योगियाज्ञवल्क्येन शमार्जवे विनिवेशिते इति वैलक्षण्यमेव । तदेवमुभयविधं प्रमाणं विचार्य स्मृतिद्वयस्यास्य कर्ता याज्ञवल्क्याभिध एको भिन्नो वेति विचक्षणैरेव कक्षीकर्तव्यम् ।

एवं विचार्यमाणे स्मृतिद्वयस्यास्यैककर्तृकत्वेऽन्यथात्वे वैकान्तिकप्रमाणाभावेऽपि स्मृतेरस्या योगियाज्ञवल्क्यस्मृतिरिति नामधेयमुचितम् । तथापि अस्याः स्मृतेः संपादनाय परिगृहीते आदर्शपुस्तके बृहद्योगियाज्ञवल्क्यस्मृतिरित्यस्या नामधेयोपलब्धेस्तदेवास्या नाम निर्धारितम् । निबन्धकारैस्तु सर्वत्र 'तदुक्तं



योगियाज्ञवल्क्येन', 'यथाऽऽह योगियाज्ञवल्क्यः' इत्यादिरूपेण ग्रन्थकृन्नामैव सर्वत्र प्रयुज्यमानं दृश्यते । अतस्तेषु ग्रन्थस्यास्य नामधेयं न दृष्टिपथमवतरति । अन्यच्च नामनिर्धारणे प्रमाणं नोपलब्धमित्युपलब्धादर्शपुस्तकस्थमेव तदवधारितम् । अस्मिन्नाम्नि विद्यमानेन बृहदिति विशेषणेन सूचिता काचित् लघुयोगियाज्ञवल्क्यस्मृतिरासीन्नवेति शङ्कां समाधातुं नैवेदानीं वयं समर्थाः ।

अस्याः स्मृतेः प्रणेतुर्नामधेयम् 'योगयाज्ञवल्क्यः', 'योगियाज्ञवल्क्यः' इति द्विविधं निबन्धेषु विनिवेशितं दृश्यते । तथापि बाहुल्येन योगियाज्ञवल्क्य इति प्रयोगदर्शनादादर्शपुस्तके च तथैवोपलम्भात् 'योगियाज्ञवल्क्यः' इत्येव नाम स्मृतेरस्याः कर्तुर्निर्धारितमित्यवगन्तव्यम् ।

'योगयाज्ञवल्क्यसंहिता' इति नाम्ना मोहमय्यां मुद्रितम् 'योगयाज्ञवल्क्यम्' इति नामधेयेन च कुम्भकोणे मुद्रितं यदस्ति पुस्तकं तत्तु सर्वथा अत्र मुद्र्यमाणस्मृतितो भिन्नमेव । यतस्तत् याज्ञवल्क्य-गार्गीसंवादरूपेणोपलभ्यते । इयं तु स्मृतिः प्राक्प्रदर्शितप्रकारेण जनकादिराजर्षिसहितमुनिभ्यः कथिता । एवं च उपदेश्यवैलक्षण्याद् ग्रन्थभेदः स्पष्ट एव । यद्यपि मोहमयी-कुम्भकोणमुद्रिते पुस्तकेऽष्टाङ्गो योगः प्रतिपादितस्तथापि तस्य प्रामाण्ये महान् संशय एव । यतोऽस्या इव तत्पुस्तकस्थानि वचनानि न महानिबन्धेषूदधृतानि समुपलभ्यन्ते । अन्यच्च तस्मिन् गार्गी याज्ञवल्क्यपत्नीत्वेन समाम्नाता । एतच्च—

**भार्यया त्वेवमुक्तस्तु याज्ञवल्क्यस्तपोधनः** । योया. १.४३

इत्यादिभिर्वचनैस्तत्पुस्तकगतैर्व्यक्तमेव । परन्तु न तद् युक्तं प्रतिभाति । यतो हि मैत्रेयी कात्यायनी चेति भार्याद्वयमेव याज्ञवल्क्यस्य श्रुतीतिहासप्रसिद्धम् । गार्गी याज्ञवल्क्यपत्नीति न कुत्रापि श्रुतचरम् । तदेवंविधैः प्रमाणैर्यद्यपि मोहमय्यां कुम्भकोणे च मुद्रितस्य पुस्तकस्याप्रामाणिकत्वं निर्णेतुं शक्यते तथापि संक्षेपादत्र केवलं मुद्रितपूर्वात् पुस्तकादत्र मुद्र्यमाणो ग्रन्थः सर्वथा भिन्न इत्येव विदुषामग्रे समुपस्थापयामः ।

प्रागुक्तरीत्या निबन्धकारैर्बहुधा प्रमाणीकृतापीयं स्मृतिरद्यावधि न केनाऽपि मुद्रितेति विस्मयावहम् । तथैव निखिलेऽपि संसारे स्मृतेरस्याः पुस्तकद्वयमेवोपलभ्यत इत्यपरं विस्मयकारणम् । तथापि पुस्तकद्वयमेवोपलब्धं संगृह्य तयोः प्रथमम् **आ.** इति द्वितीयं च **इ.** इति संकेत्य उभयोरपि पाठभेदान् संकलय्य तारतम्येन समीचीनपाठनिर्धारणं कृत्वाऽग्रे बृहद्योगियाज्ञवल्क्यस्मृतिग्रन्थस्य मूलसंहिता समुपस्थापिता विदुषां विनोदाय । तत्राऽपि संगृहीतपुस्तकद्वयमध्ये प्रथममेवादर्शपुस्तकमिति प्रमाणीकृतम् । द्वितीयं तु न तथा समादृतम् **इ.** संज्ञकम् । पक्षपातस्य चास्य कारणं संगृहीतपुस्तकद्वयवर्णनेनैव व्यक्तं भविष्यतीत्यतः समुपलब्धपुस्तकद्वयवर्णनमेव समुचितं पश्यामः ।

तत्र प्रथमं पुण्यपत्तनस्थभाण्डारकरप्राच्यविद्यासंशोधनमन्दिरपुस्तकालये 354/of 1875-76 इति संकेतितम्। एतच्च प्रायशः शुद्धम्, ३०पत्रात्मकम् प्रतिपृष्ठे ११पङ्क्तियुतं १०″×६″ परिमिताकारं चास्ति। पुस्तकमिदं कागदे देवनागराक्षरेणाधुनिकेन लिखितं दृश्यते। अनुस्वारस्य परसवर्णमकृत्वैव च पदच्छेदं लेखनमत्र संलक्ष्यते। द्वादशाध्यायात्मकं संपूर्णं चेदं पुस्तकमिति 'आदर्शपुस्तकम्' 'आ.' इति वास्यां प्रस्तावनायामग्रे च संकेतितम्।

द्वितीयं तु ब्रिटिशम्यूझियम्-ग्रन्थालये ३४९ तमत्वेनाङ्कितम्। पुस्तकं चेदं तालपत्रलिखितं ५७मितपत्रात्मकं प्रतिपृष्ठं पञ्च पङ्क्तियुतम् ११३″×१३″ परिमिताकारं च। एतच्च मध्ये १६तमे २७तमे च पत्रे अन्ते च खण्डितत्वादपूर्णमेव। अग्रे मुद्रितस्य ग्रन्थस्य द्वादशाध्यायगत१६तमश्लोकपूर्वार्धपर्यन्तमेव ग्रन्थभागोऽत्र समुपलभ्यते। क्रिस्ताब्दीयनवमत एकादशीं शताब्दीं यावन्नेपालप्रान्ते प्रचालितेन देवनागराक्षरेण लिखितमिदमिति लिपिज्ञाः। पुरातनमप्येतत् खण्डितत्वादशुद्धिबहुलत्वाच्च न पूर्ववर्णितआ.पुस्तकवदुपयोगाय संवृत्तम्। इत्यतो यावदभिलषितमेवास्य पाठभेदा विविच्याऽग्रे प्रदर्शिताः। पुस्तकेऽस्मिन् विद्यमानमशुद्धम्—

**स व्याहृती स प्रणवा गायत्री शिरसा स्मह्ः।**
**त्रिं पठेदानतं त्प्राण प्राणायामस्स उच्यते॥**

एवं लिखितादष्टमाध्यायगतद्वितीयश्लोकादवगतं भविष्यति। एतच्च पुस्तकं इ. इति संकेतेनात्र प्रस्तावनायामग्रे च सर्वत्र व्यपदिष्टमित्येष्टव्यम्।

स्मृतेरस्या यद्यपि केवलं पुतकद्वयमेव समुपलब्धं तथापि मूलसंहितापाठनिर्धारणे नातीव परिश्रमः समापतितः। यतो ग्रन्थान्तरेषु बहुषु समुपलब्धान्यनेकशो वचनान्येतत्स्मृतिगतान्युद्धृतानि ग्रन्थकारैः। तेषां नामधेयानि सति संभवे च तत्रत्याः पाठभेदा अपि मूलसंहितापाठाऽधस्ताद्यथापङ्क्ति प्रदर्शितान्येवाऽग्रे। मूलसंहितायामग्रे स्थूलाक्षरैर्मुद्रितायां सर्वत्र प्रायश **आ.**पुस्तकमेव प्रमाणीकृतमिति वेदितव्यम्। यत्र तु सुस्पष्टमेव सदोष **आ.**पुस्तकपाठः परिदृष्टस्तत्रान्यपुस्तकदृष्टं समीचीनं पाठं मूलसंहितायां समावेश्य टिप्पण्यां प्रथमतस्तद्ग्रन्थनाम संनिवेश्यानन्तरमेवादर्शपुस्तकपाठो दर्शितः। सोऽयं द्वितीयोऽभ्युपायः पाठनिर्धारणार्थमालम्बितो वेदितव्यः। यत्र पुनर्मार्गद्वितयमप्येतदशक्यमासीत्तत्राऽनन्यगत्या आदर्शपुस्तकस्थमशुद्धमेव पाठं मूलसंहितायां संमुद्रय शुद्धः पाठः संपादककल्पितः ( ) एतादृक्कुण्डलाङ्कितस्तदग्रे एव प्रदर्शितः। तदेवं मूलसंहितायां समुचितं पाठं स्थूलाक्षरैः संमुद्रयाधस्तात् यथापङ्क्ति तत्तत्पङ्क्तिस्थलानि ग्रन्था-



न्तरगतानि यथासंभवं केवलानि पाठभेदसहितानि वा टिप्पण्यां सत्साक्षैः प्रदर्शितानि।

एवं ग्रन्थान्तरसमुपलभ्यमानस्थलपाठभेदसहिता मूलसंहिताऽग्रे प्रथमतो मुद्रिता। तदनन्तरं चादर्शपुस्तकेऽनुपलभ्यमानान्यपि तु निबन्धकारैर्योगियाज्ञवल्कीयत्वेनोद्धृतानि वचनानि पृथक् प्रथमे परिशिष्टे संगृहीतानि। तानि च १२७ संख्याकान्यग्रे मुद्रितान्येव। येषु ग्रन्थेषु वचनान्यादर्शपुस्तकस्थान्युपलभ्यन्ते तेष्वेव प्रथमपरिशिष्टनिविष्टान्यपि वचनानि सन्तीति चित्रमिव प्रतिभाति। विषये चात्रैक एव तर्कः संभवति। स यथा। कासुचित्प्राचीनतमासु एतत्स्मृतेः संहितासु उभयविधान्यपि वचनान्यभूवन्। किन्तु कालवशात् प्रथमपरिशिष्टनिर्दिष्टैर्वचनैः सह ताः संहिता अपि प्रनष्टा इति। महता परिश्रमेणाऽन्वेषणे कृते कदाचिन्द्भवेदपि समुपलब्धा तादृशी संहिता यत्रास्मत्परिगृहीतादर्शपुस्तकादभ्यधिकाः श्लोका भवेयुः। परं यावन्न तादृशं पुस्तकमुपलभ्यते तावदुपलब्धमेव प्रमाणीकृत्य प्रस्तावनायामस्यां किञ्चिदुच्यते।

तत्र प्रथमतः प्रामाण्ये स्मृतेरस्या नास्ति संदेहलेशोऽपीत्यङ्गीकरणीयमेव। यतः समुपलभ्यन्ते बहुषु शिष्टपरिगृहीतेषु ग्रन्थेष्वस्या वचनानि प्रमाणत्वेनोपन्यस्तानि। तेषु केषाञ्चन ग्रन्थानां नामधेयान्यधः कालक्रमेण प्रदर्श्यन्ते—

| ग्रन्थनाम | समयः (क्रिस्ताब्दमनुसृत्य) |
|---|---|
| **वालक्रीडा (विश्वरूपाचर्यप्रणीता)** | ८०० |
| **वाचस्पतियोगव्याख्या** | ८४१ |
| **मेधातिथिभाष्यम्** | ९०० |
| **मिताक्षरा** | ११०० |
| **अपरार्कः** | ११२५ |
| **स्मृतिचन्द्रिका** | १२०० |
| **मन्वर्थमुक्तावली** | १२५० |
| **चतुर्वर्गचिन्तामणिः** | १२६० |
| **पराशरमाधवः** | १३०० |
| **मदनपारिजातः** | १३६० |
| **वीरमित्रोदयः** | १६१० |

एतेषु प्राचीनतमः समुल्लेखोऽस्याः स्मृतेर्बालक्रीडायां विश्वरूपाचार्यविरचितायां ( अ. १ श्लो. २२ ) समुलभ्यते। तत्प्रकारश्चाग्रे ५३ तमपृष्ठस्यचतुर्थपङ्क्तिटिप्पण्या व्यक्त एव। उपरिनिर्दिष्टतालिकया ग्रन्थस्यास्य क्रिस्ताब्दीयाष्टमशताब्दीतः कथमपि नार्वाचीनत्वमिति ज्ञातं भवेत्। सोऽयमस्याः स्मृतेः समयस्यो-

चरावधिः। पूर्वावधिस्तु श्रीमदुद्योतकरस्य समय इति संभाव्यते। तथा हि अस्यां स्मृतौ—

**नैयायिकार्थमालोक्य तथा हीश्वरकारणम्।** बृया. १२.१८

इति ईश्वरकारणताप्रतिपादकस्य नैयायिकस्योल्लेखो विद्यते। स पुनर्विशेषतः कमुद्दिश्य भवेदिति विचार्यमाणे नायमुल्लेखः सूत्रभाष्ये समुद्दिशतीति न्यायशास्त्रेतिहासपरिशीलनपराणामतिरोहितमेव। यतो न्यायसूत्रे न्यायभाष्ये च ईश्वरकारणतावादो न प्रतिपादितः। प्रत्युत न्यायभाष्ये—

**निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमाविषयातीतं कः शक्त उपपादयितुम्?** न्यायभाष्यम् ४.१.२१

इति स्पष्टमेवोक्तत्वात् तत्र ईश्वरकारणताबोधकतर्कप्रतिपादनं न शक्यशङ्कम्। न्यायभाष्यमधिकृत्य प्रवर्तमानं वार्तिकं तूद्योतकरप्रणीतम्—

**कः पुनरीश्वरस्य कारणत्वे न्यायः?** न्यायवार्तिकम् ४.१.२१

इति प्रश्नमुपस्थाप्य महता विस्तरेण ईश्वरकारणत्वसाधकान् तर्कान् वर्णयति। ततश्च वार्तिककारमुद्योतकरमपरं वा तादृशमुद्दिश्यैवायमुल्लेख इति स्वीकर्तव्यमापतति। उद्योतकरसमयश्च किस्ताब्दीया षष्ठी शताब्दिरित्यङ्गीक्रियते चेदियं स्मृतिः किस्ताब्दीय६००तः ६५०पर्यन्तं योगियाज्ञवल्क्येन निबद्धा इत्यनुमीयते। महामहोपाध्यायकाणेमहोदयैः—

**The work must have been composed between 200 and 700 A. D.** ( History of Dharmashastra, Vol. I, p. 190. )

इति प्रतिपादयद्भिरस्याः समयस्तु २००तः ७००पर्यन्तमवधारितः। विशेषतोऽस्याः कालनिर्धारणे समुचितप्रमाणाभावेऽपि केवलं प्राचीनत्वमस्या वैदिकमन्त्रघटितकर्मप्राचुर्यादनुमातुं शक्यते। आर्षप्रयोगबाहुल्यादप्यस्याः प्राचीनत्वं व्यक्तं भवत्येव। ते च—

**पृच्छामहे** (१.११), **वदस्व** (१.१९), **उपास्तुः** (२.४५); **शब्दब्रह्मात्** (२.४९), **इच्छते** (२.१२७), **स्थाप्य** (२.१३९), **जायन्ति** (३.१७), **जपते** (४.५२), **विश्वासः** (४.७९), **पाव्य** (७.५१), **जिह्वौष्ठौ** (७.१४०), **भाप्य** (७.१४९), **विशते** (९.१२१), **प्रलपते** (११.८), **पठते** (११.१२), **सत्पथा** (१२.४३), **शिरस्य** (१२.४५)

इत्यादयो बहवः समुलभ्यन्ते। अपरे च विशेषाः केचनास्या स्मृतौ समुपलभ्यमाना अग्रे टिप्पण्यामेव १५०तमपृष्ठतः १६२तमपृष्ठपर्यन्तं दर्शिता इति पुनरुक्तिभयान्न तेऽत्र प्रदर्श्यन्ते।



इदानीं योगशास्त्रविषये किमस्या वैशिष्ट्यमस्तीति विवरणायाऽल्पः प्रयत्नः प्राप्तावसर इति प्रतिभाति। तेन हि अस्याः स्मृतेः कर्तुर्नामधेयस्य योगपदघटितत्वं कथमुचितमस्तीति व्यक्तं भविष्यति।

ये हि ग्रन्थाः समुपलभ्यन्त इदानीं योगशास्त्रे तेषु द्विविधा परिपाटी दृष्टचरा। तत्राद्या योगसूत्रभाष्यादिषूपलभ्यमाना पातञ्जलयोगपरिपाटिः। हठग्रन्थेषूपलभ्यमाना तु द्वितीया। अस्यां स्मृतौ पुनस्तदुभयभिन्नैव परिपाटी गोचरीभवति। तथा हि। प्रथमोक्तपरिपाटिद्वये वैदिककर्मकाण्डसंबन्धविषये औदासीन्यमेव दृश्यते। योगाभ्यासकैर्वैदिकं कर्मकाण्डमनुष्ठेयं न वेत्यत्र पातञ्जलपरिपाटीग्रन्था हठप्रदीपिकाद्यश्च हठतन्त्रग्रन्था न किमप्यादेशं ददति। अस्यां तु स्मृतौ स्पष्ट एवाऽस्मिन् विषये समुपलभ्यत आदेशः। अत्र हि स्नान-संध्या-मार्जन-तर्पण-सूर्योपस्थानादि-वैदिककर्मकलापपङ्क्तावेव प्राणायामप्रत्याहारध्यानधारणेत्यादि योगाङ्गजातमाह्निके वर्णितं दृश्यते। ततश्च वैदिककर्मकाण्डेन साकं योगाङ्गक्रियाविशेषाणां घनिष्ठसंबन्धप्रदर्शनेन इयं स्मृतिरत्रनिर्दिष्टपरिपाटिद्वयाद्भिन्नां परिपाटिं प्रकाशयतीत्यस्याः स्मृतेः प्रथमो विशेषः।

ज्ञानकर्मसमुच्चयस्य प्रकृष्टत्वेन विधानमप्यपरोऽस्या विशेषः। तथा हि। अन्ये योगग्रन्था योगक्रियातिरिक्तं सर्वं कर्मकाण्डमुपेक्षमाणा दृश्यन्ते। अस्यां तु स्मृतौ केवलं ज्ञानं न मोक्षदायकं न वा केवलं कर्म तथा। किन्तूभयमेव परस्परोपकारेण मोक्षदायकमिति पक्षः सुस्पष्टतया प्रतिपादितः। तथा हि—

**ज्ञानं प्रधानं न तु कर्महीनं**
**कर्म प्रधानं न तु बुद्धिहीनम्।**
**तस्माद् द्वयोरेव भवेत सिद्धिः**
**न ह्येकपक्षो विहगः प्रयाति॥** बृया. ९.२९

**परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम्।**
**कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः॥** बृया. ९.३४

इत्यादि।

पातञ्जलहठयोर्मध्येर्यद्यप्येषा स्मृतिः पतञ्जलिपरिगृहीतां सरणिमनुसरति तथापि क्वचित्ततोऽपि भिद्यमाना दृश्यते इति तृतीयमस्या वैशिष्ट्यम्। यथा—

**यमैश्च नियमैश्चैव आसनैः प्राणसंयमैः।**
**प्रत्याहारेण ध्यानेन धारणाभिः समाधिना॥** बृया. ९.३५

इत्यत्र यद्यपि पतञ्जलिप्रोक्त एव योगाङ्गानां क्रमः प्रदर्शितस्तथापि पतञ्जलेर्धारणाध्यानसमाधिरिति क्रमं व्यत्यस्यात्र ध्यानधारणासमाधिरिति क्रमः प्रदर्शितः।

हठविद्यायां हि नाडीनिरूपणं प्राधान्यं भजते। तत्रापि इडासुषुम्णापिङ्गलानां प्राधान्यं वरीवर्ति। एतास्वपि इडापिङ्गलयोर्मध्ये सुषुम्णास्थानमिति सर्वेषु हठतन्त्रेषु प्रसिद्धमेव। परमस्यां स्मृतौ विभिन्नैव परिभाषा समुपलभ्यते। तथा हि—

इडासुषुम्णे द्वे नाड्यौ रश्मिसंज्ञे व्यवास्थिते।
पाचिकाप्यायिके ह्येते अग्नीषोमात्मके स्मृते॥
एतौ तु पार्श्वगौ ज्ञेयौ पन्थानौ ह्यग्निहोत्रिणाम्।
देवपित्रात्मकौ ह्येतौ शाश्वतौ जगतः समौ॥
तयोर्मध्ये अमा ह्येषा यत्र संतिष्ठते शशी। बृया. ९.९६-९८

अत्र मध्यमाया नाड्या अमा इति संज्ञा संदृश्यते। हठयोगे पिङ्गलेति नाम्ना प्रसिद्धा चात्र सुषुम्णाशब्देन बोध्यते। ततश्चेदानींतनहठतन्त्रपरिभाषानिर्धारणात् पूर्वतनीयामेव परिभाषामालम्ब्येयं स्मृतिः प्रावर्तत इति चतुर्थोऽस्या विशेषः सुव्यक्तो भवति। तदेवमनेके सन्ति विशेषा ये पश्चात् प्रकाश्यमाने विस्तृते योगेतिहासप्रबन्धे यथासमयं प्रतिपादयिष्यन्ते।

स्मृतेरस्याः संपादनाय बहुविधं साहाय्यं दत्तमनेकैः। तत्र मूलभूतमादर्शपुस्तकं **भाण्डारकरप्राच्यविद्यामन्दिरसञ्चालकैः** कृपया परिशीलनाय दत्तम्। द्वितीयस्य तु इसंज्ञकस्य पुस्तकस्य छायाचित्रं **ब्रिटिशम्यूझियम्ग्रन्थालयाध्यक्षैः** प्रेषितम्। इ.पुस्तकलिपिवाचनार्थं डेक्कन–कॉलेज–रीसर्च–इन्स्टिटयूट् संस्थया किञ्चित्कालं विसृष्टा **डॉ. मो. गं. दीक्षितमहोदयाः**। डॉ. दीक्षितमहोदयैश्च महता परिश्रमेण इ.पुस्तकलिपिवाचनं कृतम्। ग्रन्थस्यास्य प्रकाशनमावश्यकं पश्यद्भिर्महामहोपाध्यायपदवीभूषितैः **पां. वा. काणेमहोदयैरसकृदुत्साहितौ** संपादकौ ग्रन्थस्यास्य प्रकाशनाय। व्याकरणरत्नकाव्यतीर्थोपाध्यलङ्कृतैः **बा. वा. भागवतमहोदयैर्मुद्रणयोग्यलिखितप्रतिनिर्माणाय** एतत्स्मृतिगतापाणिनीयपदविवेचनाय च बहूपकृतम्। मुद्रितशोधनेऽन्यप्रकारेण च **डॉ. शि. अ. शुक्लमहोदयैरनवरतं** साहाय्यं दत्तम्। सर्वैरप्येभिर्नितान्तमुपकृताः स्म इति समश्रयं विनिवेदयामः।

यच्चात्र ग्रन्थे न्यूनं तत्सर्वं

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥ बृया. ७.३४

इति वचनेनास्यामेव स्मृतावुपलब्धेन संपूर्णं भवत्विति प्रार्थयामः।

विदुषां वशंवदौ

लोणावळें, जि. पुणें
चैत्री पूर्णिमा, शकः १८७३

कुवलयानन्दश्च
रघुनाथशर्मा च

## बृहद्योगियाज्ञवल्क्यस्मृतिस्थ-

# विषयानुक्रमणी

# ग्रन्थनामसंक्षेप-चिह्नविशेष-बोधिनी

अग्नि. अग्निपुराणम्, पुण्यपत्तनस्थाऽऽनंदाश्रममुद्रितम् ।
अत्रि. अत्रिस्मृतिः, पुण्यपत्तनस्थाऽऽनंदाश्रममुद्रिता ।
अत्रिसं. अत्रिसंहिता, ,,
अथ. अथर्ववेदसंहिता
अप. अपरार्कविरचिता याज्ञवल्क्यस्मृतिटीका ।
आ. आदर्शपुस्तकम्, भाण्डारकरप्राच्यविद्यामंदिरग्रन्थालये 354/of 1875-76 इति संकेतितम् ।
आम. आचारमयूखः, भट्टनीलकण्ठविरचितः, घारपुरेसंपादितः ।
आर. आचाररत्नम्, लक्ष्मणभट्टविरचितम्, निर्णयसागरमुद्रितम् ।
आश्रौ. आश्वलायनश्रौतसूत्रम्
इ. ब्रिटिशम्यूझियमग्रन्थालये 349 इति संकेतितं पुस्तकम् ।
उ. उपनिषद्
ऋ. ऋग्वेदसंहिता
कठ. काठकोपनिषद्
काश्रौ. कात्यायनश्रौतसूत्रम्
कासं. काठकसंहिता
कुल्लू. मन्वर्थमुक्तावली कुल्लूकभट्टविरचिता ।
खिल. खिलसूक्तानि
ग. गरुडमहापुराणम्
गीता. श्रीमद्भगवद्गीता
छा. उ. छान्दोग्योपनिषद्
तैआ. तैत्तिरीयारण्यकम्
तैत्ति. उप. तैत्तिरीयोपनिषद्
तैब्रा. तैत्तिरीयब्राह्मणम्
तैसं. तैत्तिरीयसंहिता
दक्ष. दक्षस्मृतिः
दान. दानखण्डः
दीप. दीपकलिका, शूलपाणिविरचिता, घारपुरेसंपादिता ।
ध्या. ध्यानबिन्दूपनिषद्



पमा. पराशरमाधवः, माधवाचार्यविरचिता पराशरस्मृतिव्याख्या, बॉम्बेसंस्कृत-सीरीज्-मुद्रिता ।
परि. परिभाषाप्रकाशः, परिशिष्टम् वा ।
पृ. पृष्ठम्
प्राणाग्निहोत्रोप. प्राणाग्निहोत्रोपनिषद्
प्राम. प्रायश्चित्तमयूखः, घारपुरेसंपादितः ।
बृ. बृहस्पतिस्मृतिः, रंगस्वामी ऐयंगारसंकलिता ।
बृप. बृहत्पराशरसंहिता
बृया. बृहद्योगियाज्ञवल्क्यस्मृतिः
बौ. बौधायनधर्मसूत्रम्
ब्र. सू. शां. भा. ब्रह्मसूत्रशाङ्करभाष्यम्
ब्रह्मसूत्र शां. भा. ब्रह्मसूत्रशाङ्करभाष्यम्
मद. मदनपारिजातः
मदी. मंत्रार्थदीपिका (चौखंबा सं. सी.)
मनु. मनुस्मृतिः
मा. आ. माण्डूक्यकारिकायामागमप्रकरणम्
मुण्डक. मुण्डकोपनिषद्
मेधातिथिः मनुस्मृतिभाष्यम्, मेधातिथिप्रणीतम् ।
मैआ. मैत्रायणीयमारण्यकम्
मैसं. मैत्रायणीसंहिता
याज्ञ. याज्ञवल्क्यस्मृतिः
याज्ञ. वीमि. याज्ञवल्क्यटीकात्मकः वीरमित्रोदयः
योया. योगयाज्ञवल्क्यसंहिता (याज्ञवल्क्यगार्गीसंवादरूपा)
लघुशंखस्मृ. लघुशङ्खस्मृतिः
वासिष्ठस्मृ. वसिष्ठस्मृतिः
वासं. वाजसनेयिसंहिता
विश्वरूपः विश्वरूपाचार्यविरचिता याज्ञवल्क्यस्मृतिटीका
वीमि. वीरमित्रोदये आह्निकप्रकाशः
वै. वैद्यनाथीयम्, स्मृतिमुक्ताफले आह्निककाण्डम् ।
व्रत. व्रतखण्डः
शंख. शंखस्मृतिः
शतपथ. शतपथब्राह्मणम्
शान्ति. शान्तिपर्व (महाभारतीयम्)

**श्रा.** श्राद्धकाण्डम्
**सं.** संध्यावन्दनविधिः, पं. हरदेवशर्मविरचितः ।
**सम.** समयमयूखः, समयप्रकाशः वा ।
**स्मृच.** स्मृतिचन्द्रिकायामाह्निकप्रकरणम्, घारपुरेसंपादितम् ।
**स्मृत.** स्मृतितत्त्वे आह्निकतत्त्वम्
**हठ.** हठप्रदीपिका
**हठप्रटी.** हठप्रदीपिकाटीका ज्योत्स्ना ।
**हे.** हेमाद्रिविरचितः चतुर्वर्गचिन्तामणिः ।
॰॰ पत्रात्मकपुस्तकस्य निरङ्कपृष्ठद्योतकं चिह्नम्
( ) मूलसंहितायां संपादककल्पितः पाठः सर्वत्रैवंविधकुण्डलाङ्कितः ।

सूचना—ग्रन्थसंक्षेपस्पष्टीकरणमिषेणात्रानेके पाठभेदार्थमालोचिता ग्रन्थाः सूचिता एव । ततोऽप्याधिका **अमृतनादोपनिषद्, ब्रह्मविन्दूपनिषत्, मिताक्षरा, मुण्डकोपनिषत्, श्वेताश्वतरोपनिषच्चेति** पाठभेदार्थमालोचिता इति विज्ञेयम् ।

---

FOR FAVOUR OF REVIEW

अथ

# श्रीबृहद्योगियाज्ञवल्क्यस्मृतिः

## प्रथमोऽध्यायः

मिथिलास्थं महात्मानं सर्वयोगीश्वरेश्वरम् ।
५ भगवन्तं याज्ञवल्क्यं मुनिसङ्घैः समावृतम् ॥ १ ॥
जनकाद्यैर्नृपवरैः शिष्यैश्चान्यैर्मुमुक्षुभिः ।
योगसिद्धैस्तथान्यैश्च संवृतं ब्रह्मवादिभिः ॥ २ ॥
सुखासीनं मुनिवरं ध्यानयोगपरायणम् ।
सर्वसंशयच्छेत्तारं ब्रह्मकल्पं महामुनिम् ॥ ३ ॥
१० तं पृच्छन्ति महात्मानमृषयः संशितव्रताः ।
संसारतारणार्थाय गुह्यं ब्रह्म सनातनम् ॥ ४ ॥
भगवन् सर्वयोगीश ब्रूहि नः संशयो महान् ।

---

४. 'श्रीगणेशायनमः ॥' इति प्रारम्भवाक्यमाधिकम् आ.
'ओं नमो योगेश्वराय' इति प्रारम्भवाक्यमाधिकम्; सर्वयोगेश्वरेश्वरः इ.
५. भगवान् याज्ञवल्क्यस्तु मुनि... इ.
६. शिष्यैश्चैव मुमुक्षुभि: इ.
७. सिद्धैस्तथा योगे इ.
८. तत्रासीनं इ.
९. संशयछेत्तारं आ.., ब्रह्मकल्पाम्महाद्युतिम् इ.

१ यः सारः सर्ववेदानां वेदान्तानां तथैव च ॥५॥
सिद्धान्तानां च सर्वेषां स्मृतीनां च महामुने ।
चतुर्दशानां विद्यानां यस्तु सारः प्रकीर्तितः ॥६॥

आत्मज्ञानं परं यच्च यज्ज्ञात्वामृतमश्नुते ।
५ ओंकारं व्याहृतींश्चैव गायत्रीं तच्छिरस्तथा ॥७॥

प्राणायामं तथा ध्यानं संध्योपासनमेव च ।
मार्जनाभ्युक्षणे स्नानं तथैवान्तर्जलं जपम् ॥८॥

गायत्र्याश्चैव माहात्म्यं जपयज्ञप्रयोजनम् ।
उपस्थानं तथार्कस्य सारूप्यमपि चैव हि ॥९॥

१० तस्या(स्य)चान्तर्गतो ह्यात्मा कथं विज्ञायते तु सः ।
त्वं हि जानासि तत्त्वेन स्वेन योगबलेन च ॥१०॥

यजूंष्यभ्यस्यमानेन पुरस्ताद्भास्करोह्ययम् ।
साक्षाद्भगवता दृष्टस्तेन पृच्छामहे वयम् ॥११॥

आर्षं छन्दश्च मन्त्राणां दैवत्यं ब्राह्मणं तथा ।
१५ विनियोगं च मन्त्राणामोंकारादेश्च यद्विभो ॥१२॥

किमुक्तं भवतीत्येतज्ज्ञातेऽज्ञाते च किं भवेत् ।
ब्राह्मण्यं च भवेत् केन किं वा नित्यमुपास्यते ॥१३॥

किं वा सत्यं भवेद्ब्रह्म संध्या येन उपास्यते ।
कथं संमार्जनं कुर्यान्मन्त्रैर्वरुणदैवतैः ॥१४॥

२० अन्तर्जलं च कतमैः कतमैः प्राणसंयमम् ।
सूर्यस्य चाप्युपस्थानं कुर्यान्मन्त्रैः किमात्मकैः ॥१५॥

केनाक्षरेण मन्त्रेण धारणा धार्यते कथम् ।

२०. इ.; प्राणसंयमैः आ.



१ किं ध्यानं किं च वै ध्येयं किं लक्ष्यं किं स्वरूपकम् ॥१६॥
यच्चोपास्य विमुच्येत तत् परं ब्रूहि नो विभो ।
होमकाले तथाग्नौ तु मध्ये किं परिचिन्तयेत् ॥१७॥

यस्य चैवाहुतिं दद्यात् किं ते (तद्) ब्रह्म किमात्मकम् ।
५ तथान्नयज्ञकाले तु स्वदेहे चिन्तयेत् कथम् ॥१८॥

का विद्या का ह्यविद्या च किं वा निःश्रेयसं परम् ।
किमधीयीत वै विप्र एतत् सर्वं वदस्व नः ॥१९॥

एतच्छ्रुत्वा तु वचनं मुनीनां भावितात्मनाम् ।
तथा राजर्षीणां च स्वशिष्याणां तथैव च ॥२०॥

१० ब्राह्मणानां हितार्थाय सर्वयोगविदां वरः ।
आविष्कर्तुमनाः प्रश्नं विस्तरेण महामतिः ॥२१॥

भगवान् याज्ञवल्क्यस्तु प्रत्युवाच मुनींस्तदा ।
श्रूयतां संप्रवक्ष्यामि यत् सारं ज्ञानमुत्तमम् ॥२२॥

वेदान्ताभिहितं यच्च स्मृतिसिद्धान्तयोरपि ।
१५ तत् सर्वं संप्रवक्ष्यामि योगसारसमुच्चयम् ॥२३॥

येन यत् क्रियते कर्म नैत्यकं यद्द्विजातिभिः ।
ब्राह्मण्यं लभते येन ब्रह्मसायुज्यतां व्रजेत् ॥२४॥

ओंकारो व्याहृतयश्च गायत्री सशिरास्तथा ।
वैदिकं च तथा कर्म अब्लिङ्गं चाघमर्षणम् ॥२५॥

२० प्राणायामस्तथा संध्या मार्जनान्तर्जलं जपः ।
सर्वमेव हि कर्तव्यं ब्राह्मणैर्ब्रह्मचिन्तकैः ॥२६॥

४. कस्य चैवाहुतिं इ.

१ आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता ॥२७॥

अविदित्वा तु यः कुर्याद्याजनाध्यपनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पं फलं भवेत् ।
५ आपद्यते स्थाणुगर्ते स्वयं वाऽपि प्रमी(ली)यते ॥२८॥

यातयामानि च्छन्दांसि भवन्त्यल्पफलान्यपि ।
अन्तर्जलादिके जप्ये इतरेषामजानताम् ॥२९॥

नाधिकारोस्ति मन्त्राणामेवं श्रुतिनिदर्शनम् ।
अल्पमात्रं फलं तस्य होमादन्तर्जलाज्जपात् ॥३०॥

१० स्वाध्यायाद्याजनाच्चैव भवतीह न संशयः ।
यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ॥३१॥

---

१. वीमि परि. ८५, स्मृत. ३८३, ४७६, याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४७; विनियोगं आ.; छन्दो दैवतं च विनियो...आर.४*

२. ब्राह्मणेन विशेषतः वीमि. २६८. स्मृत. ३८३, ४७६, याज्ञवल्क्यवचनमिति हे. दान. १०४; ब्राह्मणेन प्रयत्नेन वेदितव्यं विपश्चिता आर. ४*

३. स्मृत. ३८५, ४७६, आर. ४*; ध्यापनादिकम् वीमि. परि. ८५; ध्ययनं जपम्, याज्ञवल्क्यवचनमिति हे. दान. १०४

४. स्मृत. ३८५, ४७६, हे. दान. १०४, व्रत. २४७, आर. ४*; होममन्यत्रयत् किञ्चित् स्मृत.४७७

५. गर्तं स्वयं चापि प्रलीयते वृप. २.५०, इ.

६. भवन्त्यफलदान्यपि वृप. २.५०;...ल्पबलान्यपि इ.

११. यश्च जानाति वीमि. परि. ८६, याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४७



१ विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्मणी ।
एकैकस्या ऋचः सोऽपि वन्द्योह्यतिथिवद्भवेत् ॥३२॥

देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ।
पूर्वोक्तेन विधानेन ऋष्यादीन् वेत्ति यो द्विजः ॥३३॥

५ अधिकारो भवेत्तस्य रहस्येषु च कर्मसु ।
मन्त्रे मन्त्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु ॥३४॥

विज्ञाते परिपूर्णं तु स्वाध्यायफलमश्नुते ।
छन्दांस्ययातयामानि भवन्ति सफलान्यपि ॥३५॥

श्रेयश्च लभते सोऽपि धर्ममायुश्च विन्दति ।
१० दिव्यं वर्षसहस्रं तु स्वस्थानमृषिभिः सह ॥३६॥

संतिष्ठते तु तैः सार्धं तत्तुल्यो वेह जायते ।
फलं चैवापवादं च एवं बुद्ध्वा विधानतः ॥३७॥

ज्ञातव्यं हि प्रयत्नेन ब्राह्मणेन विशेषतः ।
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ॥३८॥

---

१. ज्ञानकर्म च वीमि. परि. ८६, इ., याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४७

२. एकैकस्य ऋषेः सोऽपि वीमि. परि. ८६; याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४८

३. वीमि. परि. ८६

४. वीमि. परि. ८६; पूर्वोक्तेन प्रकारेण, याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४८

५. रहस्यादिषु कर्मसु वीमि. परि. ८६; अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु, याज्ञवल्क्यवचनमिति हे. दान. १०४

१२. बुध्वा आ.

१४. वीमि. परि. ८६; याज्ञवल्क्यवचनमिति हे. दान. १०४

१ मन्त्रेण तस्य तत् प्रोक्तमृषिभावस्तदार्षकम् ।
छादनाच्छन्द उद्दिष्टमाकृतेर्वाससी यथा ॥३९॥

आत्मा संछादितो देवैर्मृत्युभीतैश्च वै पुरा ।
आदित्यैर्वसुभी रुद्रैस्तेन च्छन्दांसि तानि वै ॥४०॥

५ यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ।
तदाकारं भवेत्तस्य दैवतं देवतोच्यते ॥४१॥

पुराकल्पे समुद्दिष्टा मन्त्राः कर्मार्थसिद्धये ।
अनेनेदं तु कर्तव्यं विनियोगः स उच्यते ॥४२॥

निरुक्तं यत्र मन्त्रस्य समुत्पत्तिः प्रयोजनम् ।
१० प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥४३॥

---

१. .... मृषेर्भाव वीामि. परि. ८६; याज्ञवल्क्यवचनमिति हे. दान. १०४
२. उद्दिष्टं वाससीवाथ वाऽऽ कृतेः बृप. २.४१;वाससी इव चाकृतेः वीामि. परि. ८७; वाससी इव चाकृते, याज्ञवल्क्यवचनमिति हे. दान. १०४
३. भीतैस्तु वीामि. परि. ८७; याज्ञवल्क्यवचनमिति हे.दान.१०४, व्रत. २४८
४. वीामि. परि. ८७; .... भिरुद्रैस्तेन छन्दस्तु वै श्रुतम्। आ. याज्ञल्क्यवचनामिति हे. दान. १०४
५. वीामि. परि. ८७; याज्ञवल्क्यवचनामिति हे. दान. १०४
६. वीामि. परि. ८७; देवत्वं देवतोच्यते, याज्ञवल्क्यवचनामिति हे. दान.१०४
७. समुत्पन्ना मन्त्राः कर्मार्थमेव च वीामि. परि. ८७; कर्मार्थ एव च, याज्ञवल्क्यवचनामिति हे. दान. १०४
८. वीामि. परि. ८७ स्मृत. ३८७; अनेन चेदं कर्तव्यं, याज्ञवल्क्यवचनामिति हे. दान. १०४
९. वीामि परि. ८७; निरुक्तं यस्य आ.; नैरुक्तं यच्च मन्त्रस्य विनियोग-प्रयोजनम्, याज्ञवल्क्यवचनामिति हे. दान. १०४
१०. वीामि. परि.८७; याज्ञवल्क्यवचनामिति हे. दान. १०४; ब्राह्मणः सोभिधीयते आ.; ब्राह्मणः स विधीयते इ.



१ एतत् पञ्चविधं योगं जपकाले ह्यनुसरेत् ।
होमे चान्तर्जले योगे स्वाध्याये यजने तथा ॥४४॥

इति (श्री) बृहद्योगियाज्ञवल्क्ये (मन्त्रयोगनिर्णयो नाम)
प्रथमोऽध्यायः ॥१॥

---

१. एवं पञ्च.... .... जप्यकाले वीामि. परि. ८८; एवं. ...जयार्थं गृह्यनुस्मरेत्, याज्ञवल्क्यवचनमिति हे. दान.१०४; एतत् पृचाविधं प्रोक्तं जप्यकाले आ.; जाप्यकाले अनुस्मरेत् इ.
२. याजने वीामि. परि. ८८, यागे स्वाध्याये याजने वीामि. २६८, इ., याज्ञवल्क्यवचनमिति हे. दान. १०४, व्रत. २४८
३. अत्र इ. पुस्तके अध्यायसमाप्तिद्योतकं किमपि नास्ति । कुण्डलितः ठपाः आदर्शपुस्तके नास्ति।

## द्वितीयोऽध्यायः

प्रणवाद्याः स्मृता मन्त्राश्चतुर्वर्गफलप्रदाः ।
तस्माच्च निःसृताः सर्वे प्रलीयन्ते च तत्र वै ॥१॥

मङ्गल्यः पावनो धन्यः सर्वकामप्रसाधनः ।
५ ओंकारः परमं ब्रह्म सर्वमन्त्रेषु नायकः ॥२॥

प्रजापतेर्मुखोत्पन्नस्तपःसिद्धस्य वै पुरा ।
तेनोपात्तमतस्तस्य ब्रह्मार्षं (ब्रह्माऽऽर्षं) च स्वयंभुवः ॥३॥

गायत्री च भवेच्छन्द अग्निर्दैवतमुच्यते ।
आदौ सर्वत्र युञ्जीत विविधेष्वेव कर्मसु ॥४॥

१० विनियोगः समुद्दिष्टः श्वेतो वर्ण उदाहृतः ।
त्रिमात्रश्च प्रयोक्तव्यः कर्मारम्भेषु सर्वदा ॥५॥

तिस्रः सार्धास्तु कर्तव्या मन्त्रतत्त्वार्थचिन्तकैः ।
देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ॥६॥

१५ तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् ।
अवाग्जं प्रणवास्यान्तं यस्तं वेद स वेदवित् ॥७॥

---

४. वीमि.२७६, अप.४४
६. अप.४४; प्रजापातिर्मु... वीमि. २७६
७. अप.४५, वीमि.२७६; तेनोपात्तस्य तस्तस्य आ.
८. वीमि.२७६, अप.४५; ...च्छन्दोऽग्निदै...आ.
९. वीमि.२७६, अप.४५
१०. वीमि. २७६
१४. बृप. ३.२६; तैलधारामिवाच्छिन्नं ध्या. १८
१५. बृप. ३.२७; अवाच्यं प्रणवस्याग्रं यस्तं ध्या. १८



१ वक्रं तद्भवति ह्यादौ ओंकारं चतुरक्षरम् ।
ऋजुत्वं संप्रपद्येत पदं प्राप्य तु पञ्चमम् ॥८॥

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥९॥

५ तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१०॥

उद्गीथाक्षरमेद्ब्रह्मविदो ब्रह्मणो योगम् ।
पाशुपताश्च वदन्ति हि साङ्ख्याश्चाध्यात्मतत्त्वज्ञाः ॥११॥

मात्रास्तिस्रो व्यक्ताऽव्यक्ता तथा परा सूक्ष्मा ।
१० अध्यात्मामधिभूतामथाधिदैवीं विजानीयात् ॥१२॥

सिद्धान्तानां तु सर्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाकारमुच्यते ॥१३॥

प्रणवाद्याः स्मृता वेदाः प्रणवे पर्युपस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ॥१४॥

१५ ओंकारः प्रणवस्तारस्त्र्यक्षरस्त्रिगुणः स्मृतः ।
उद्गीथश्च तथादित्यो हंसो नारायणो विभुः ॥१५॥

---

१. वक्रं तु भवति बृया. ९. १०
३.-६. गीता. १७. २३-२४
१३. ....द्यास्त्रयो वेदाः प्रणवे पर्यवस्थिताः आत्रि.१.९; ...द्यास्तथा वे... पर्यवास्थिताः वसिष्ठस्मृ.२५.१०
१४. वसिष्ठस्मृ.२५.१०; प्रणवे सर्वं अत्रि.१.९
१५. ओंकारं प्रणवं तारं त्र्यक्षरं त्रिगुणं स्मरम् इ.
१६. उद्गीथं च तथादित्यं हंसं नारायणं विभुम् इ.

१ सूर्यस्यान्तर्गतं सूक्ष्मं विष्णुं दिव्यं निरञ्जनम् ।
पर्यायैश्च तथा चान्यैः शास्त्रेभ्यः संप्रगीयते ॥१६॥

ओंकारसंज्ञं त्रिगुणं त्र्यक्षरं च त्रिदैवतम् ।
त्रिब्रह्म त्रिरवस्थानं त्रैकाल्यं त्रिप्रतिष्ठितम् ॥१७॥

५ त्रिप्रज्ञं च त्रिधामं च त्रिरवस्थं त्रिलिङ्गकम् ।
त्रिधातुकं समुद्दिष्टं सर्वगं परमेश्वरम् ॥१८॥

सत्त्वं रजस्तमश्चैव त्रिगुणस्तेन स स्मृतः ।
अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् ॥१९॥

ब्रह्मा विष्णुश्च रुद्रश्च त्रिदैवत्य उदाहृतः ।
१० अग्निवायुरविभ्यश्च त्रिमात्र इति संज्ञितः ॥२०॥

ऋग्यजुश्च तथा साम त्रिब्रह्म इति संज्ञितः ।
भूर्भुवः स्वस्त्र्यवस्थानं हृत्कण्ठं तालुकेति च ॥२१॥

तुर्ये प्राणे तथाऽऽदित्ये त्रिषु चैव प्रतिष्ठितम् ।
भूतं भव्यं भविष्यं च त्रैकाल्यं तेन चोच्यते ॥२२॥

१५ अन्तःप्रज्ञो बहिःप्रज्ञो घनप्रज्ञ उदाहृतः ।
गार्हपत्यो दक्षिणाग्निराहवनीयस्त्रिधामकम् ॥२३॥

शान्तो घोरस्तथा मूढस्त्रिरवस्थ इति स्मृतः ।
स्त्री पुं नपूंसकं चेति त्रिलिङ्ग इति स स्मृतः ॥२४॥

वातः पित्तं तथा श्लेष्मा त्रिधातुः समुदाहृतः ।
२० त्रिप्रकारं विदित्वा तु ओंकारं मुच्यते द्विजः ॥२५॥

---

१७. शान्तो घोरं तथा मूढं आ.; शान्तघोरं तथा मूढं इ.



१ एकैका तु भवेन्मात्रा त्रिगुणा सा तु वै पुनः ।
तासां सर्वं वाङ्मयं यदोतं प्रोतं व्यवस्थितम् ॥२६॥

प्रथमा तस्य अकारो वाक् सत्वं भूहुताशनो विष्णुः ।
स्थूला जाग्रद्वृत्तिर्विज्ञेया योगतत्त्वज्ञैः ॥२७॥

५ ब्रह्मान्तरिक्षसंज्ञो मनोरजः सोमसंज्ञक उकारः ।
मात्रा स्वप्नविकल्पा (वि)सृष्टिसंज्ञा द्वितीया तु ॥२८॥

रौद्री मकारसंज्ञा प्राणाख्या तामसी तृतीया तु ।
संहरति जगत् समस्तं (सर्वं) सौषुम्णाख्या
महानिद्रा ॥२९॥

१० आद्या परतरा सूक्ष्मा शान्ता गान्धर्वनिरवयवा ।
अनभिलक्ष्या सौम्या मकारसंज्ञा विज्ञानाकाश-
संबद्धा ॥३०॥

प्रपञ्चो ब्रह्मणश्चोक्तः सार्धमात्रात्रयं बुधैः ।
अउमिति तिस्रो मात्रा मकारश्चार्धमात्रकः ॥३१॥

१५ तिस्रो मात्रा लयं यान्ति अर्धमात्रे न संशयः ।
अर्धमात्रात्वमात्रे तु लयं याति निरामये ॥३२॥

अकारे पीड्यमाने तु उकारं प्रतिपद्यते ।
उकारे पीड्यमाने तु मकारं प्रतिपद्यते ॥३३॥

मकारे पीड्यमाने तु अर्धमात्रा तदा भवेत् ।
२० जिह्वायां पीड्यमानायां निरालम्बं तदा भवेत् ॥३४॥

---

६. विसृष्टिसंज्ञा द्वितीयस्य इ.
१४. ... मितितिस्तिसो ... आ.

१ एकमात्रं द्विमात्रं च त्रिमात्रं कृत्स्नमेव च ।
ह्रस्वदीर्घप्लुतं शान्तं शान्तेन मनसोद्धरेत् ॥३५॥

समाहितमना भूत्वा तत्त्वध्यानपरायणः ।
ओंकारं यस्त्वभिध्यायेदध्यात्मैक इति स्मृतः ॥३६॥

५ सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति ।
तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥३७॥
एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
१० एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥३८॥

सर्व द्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥३९॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुसरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥४०॥

१५ आद्यं यदक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥४१॥

यथा वै शङ्कुना पर्णं संवृता एव सर्वतः ।
एवं सर्वास्तु वै वाचः संतीर्णाः प्रणवेन तु ॥४२॥

---

५.-८. कठ. १. २. १५
९. एतद्ध्येवा ... ध्येतदेवाक्षरं कठ. १. २. १६
१०. एतद्ध्येवाक्षरं कठ १. २. १६
११.-१४.गीता. ८. १२, १३; योगधारणम् आ.; श्लोकद्वयमिदं नास्ति। इ.



१ क्लेशकर्मविपाकैश्च वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ॥४३॥

वाच्यो यश्चेश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेन तु विज्ञातो वाच्य एव प्रसीदति ॥४४॥

५ तदर्थं प्रणवं जप्यं ध्यातव्यं सततं बुधैः ।
ईश्वरः पुरुषाख्यस्तु तेनोपास्तुः(स्तः) प्रसीदति ॥४५॥

यथा हि गौर्वत्सकृतं निशम्य
हुङ्कृत्यवत्साभिमुखी प्रयाति ।
ब्रह्मापि तद्वत् प्रणवोपहूतं
१० वक्तारमागच्छति आशु वक्त्रे ॥४६॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥४७॥

अन्तःशरीरप्रभवमुदानप्रेरितं च यत् ।
वागुच्चार्यं श्रोत्रवृत्ति शब्दब्रह्म तदुच्यते ॥४८॥

१५ शब्दब्रह्मात् परं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।
तदक्षरं सदा ध्यायेद्यदीच्छेद्योगमात्मनः ॥४९॥

अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ।
मात्रास्तद्विनियोगश्च प्रणवः पञ्चलक्षणः ॥५०॥

---

३. वाच्यः स ईश्वरः प्रोक्तो स्मृत. ३८३
४. वाचकेऽपि च विज्ञाते वाच्य एव स्मृत. ३८३; वाक्य एव आ.
११.-१२. मैत्रायणीयमारण्यकम् ६. २२; द्वे विद्ये वेदितव्ये तु श ...
...धिगच्छति ब्रह्मबिन्दूपनिषद् १७

१ ओंकारः प्रणवे योज्यो ब्रह्माणि प्रणवस्तथा ।
आनन्दं तत् परं ब्रह्म तत् प्रविश्यामृती भवेत् ॥५१॥

वेदादौ यः स्वरः प्रोक्तो वेदान्ते यः प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥५२॥

५ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥५३॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥५४॥

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
१० ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥५५॥

शब्दस्पर्शादिभिश्चैव रसरूपैरलक्षितः ।
देवतायाः परस्यास्तु आलम्बः प्रणवः स्मृतः ॥५६॥

कश्चिदाराधनाकामो विष्णोर्भक्त्या करोति वै ।
तदाराधनसिद्ध्यर्थं प्रतिमां व्यञ्जिकां यथा ॥५७॥

१५ धातुदार्वादिपाषाणैः कृत्वा भावं निवेशयेत् ।
भक्त्या श्रद्धादराभ्यां च तस्य विष्णुः प्रसीदति ॥५८॥

आर्यः प्रपूजितो यत्र प्रत्यक्षे च फलप्रदः ।
ओंकारेण तथा ह्यात्मा उपास्तः स प्रसीदति ॥५९॥

---

५.–६. बिभेति कदाचन तैत्ति. उप. २.४
७.–८. मुण्डकोपनिषद् २. २. ४; गुणवत्तन्मयो इ.
९.–१०. श्वेताश्वेतरोपनिषद् १. १४; ... भ्यासादापश्ये... इ.
१२. आलयं प्रणवं स्मृतम् इ.
१८. उपास्येवं न संशयः इ.



१ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ॥६०॥

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति ।
५ तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परः ॥६१॥
ब्रह्मविदोऽनेकविधाः सततं येन प्रवर्तन्ते ।
गूढव्रतस्य हि सदा विशुद्धबुद्धेः स(सु)गूढचित्तस्य ।
प्रणवध्यानपरस्य च स(सु)गूढतपसो भयं
नास्ति ॥६२॥

१० एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते॥६३॥

प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥६४॥

आद्यास्तु व्याहृतीस्तिस्रो गायत्रींस्वशिरोय(यु)ताम् ।
१५ ओंकारं विन्दते यस्तु स मुनिर्नेतरो जनः ॥६५॥

---

१. कठ. १. २. १७
२. ज्ञात्वा ब्रह्मलोके महीयते कठ. १. २. १७; ॥५९॥, इतः प्रभृत्यादर्श-पुस्तके श्लोकसङ्ख्या मुद्रितसङ्ख्यातः एकया न्यूना।
९. ... परस्य सगूढतपसो इ.
१०.–११. अग्नि. २१५. ५; नास्ति पावनं परमं स्मृतम् अत्रि. १. ११
१२. सव्याहृतिषु सप्तसु अत्रि. १. १०; प्रणवेन नियुक्तस्य इ.; ...युक्तः स्यात् वसिष्ठस्मृ. २५. ९
१३. अत्रि. १. १०, वसिष्ठस्मृ. २५. ९; त्रिपदायां तु सावित्र्यां इ.
१४. आद्या व्याहृतयस्तिस्रो गायत्री सशिरस्स्मृताः इ.

१ एक एव हि विज्ञेयः प्रणवो योगसाधनम् ।
गृहीतः सप्तसिद्धान्तैरन्यैश्च ब्रह्मवादिभिः ॥६६॥

हिरण्यगर्भैः कपिलैरपान्तरतमैस्तथा ।
सनत्कुमारैर्ब्रह्मिष्ठैस्तथा पाशुपतैरपि ॥६७॥

५ पाञ्चरात्रैः सदोद्युक्तैः सिद्धान्तैरपि सप्तभिः ।
भेदैस्त्रिषष्टिभिर्भिन्नमेकैकं नवधा पुनः ॥६८॥

त्रिमात्रं चैव त्रिब्रह्म त्र्यक्षरं प्रणवं प्रभुम् ।
हिरण्यगर्भा इच्छन्ति योगसाधननिश्चितम्
(....नमुत्तमम् ) ॥६९॥

१० अग्निर्वायुस्तथादित्यस्तिस्रो मात्राः प्रकीर्तिताः ।
ऋग्यजुश्च तथा साम त्रिब्रह्मेति प्रकीर्तितम् ॥७०॥

अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् ।
ओंकारः परमं धाम ओंकारः परमा गतिः ॥७१॥

ओंकारं विन्दते यस्तु तस्य जन्म न विद्यते ।
१५ त्रिब्रह्मं च त्रिगुणं त्रिकारणमिति कापिलाः ॥७२॥

व्यक्तोऽव्यक्तस्तथाज्ञश्च त्रिब्रह्म इति स स्मृतः ।
ओंकारस्त्रिगुणं सर्वं व्यञ्जनं निर्गुणं विदुः ॥७३॥

---

१. एकमेव तु विज्ञेयं प्रणवं योगसाधनम् अप. १३
२. गृहीतसप्तसिद्धान्तैरन्यैर्ब्रह्मविदैस्तथा अप. १३
३. हैरण्यगर्भैः अप. १३; हैरण्यगर्भैः कापिलैरपा... इ.
४. सानत्कुमारै ... अप. १३
५. पाञ्चरात्रैरपीत्येतैः सिद्धान्तैश्चैव सप्तभिः अप. १३, पाञ्चरात्रैश्च इत्येतैः
सिद्धान्तैश्चैव सप्तभिः इ.



१ त्रिमुखं च त्रिदैवत्यं त्रिप्रयोजनमेव च ।
अपान्तरतमैश्चैव ओंकारस्तु प्रकीर्तितः ॥७४॥

गार्हपत्यो दाक्षिणाग्निराहवनीयस्तृतीयकः ।
त्रिमुखः स तु विज्ञेयो ब्रह्मविष्णुमहेश्वराः ॥७५॥

५ एतत् त्रिदैवतं ज्ञेयं धर्मश्चैवार्थ एव च ।
कामेन सहितो ह्येतौ त्रयं प्रोक्तं प्रयोजनम् ॥७६॥

भूर्भुवःस्वरिति चैव चतुर्विंशाक्षरा तथा ।
गायत्री चतुरो वेदा ओंकारः सर्वमेव तु ॥७७॥

ऋग्वेदे स्वरितोदात्त एकाक्षर उदाहृतः ।
१० त्रैस्वर्यं च तथोदात्तो यजुर्वेदे च पठ्यते ॥७८॥

दीर्घप्लुतः सामवेदे ओंकारस्तु न संशयः ।
संक्षिप्तोदात्तमेवाहुरेकाक्षर उदाहृतः ॥७९॥

अकारश्च उकारस्तु प्रविष्टो ह्येकदा यदा ।
अउवर्णसमायोगादोंकारः समपद्यत ॥८०॥

१५ अनुस्वारो मकारस्तु ओंकारस्य शिरो यदा ।
प्रकृतिः साधनं कृत्वा व्यञ्जनादौ तु लुप्यते ॥८१॥

नपुंसकस्तथोंकारो वेदानां परिकीर्तितः ।
अपांतरतमो ज्ञेयो वेदसिद्धान्तयोरपि ॥८२॥

---

४. ब्रह्मा विष्णुस्तथेश्वरः इ.
१०. यजुर्वेदेषु, एतदन्तरं ' अर्थवेदमुद्दिष्टमुदात्तान्नात्र संशयः '
इत्यधिकं, ७९ तमः श्लोको नास्त्येव इ.
१८. अपांतरतमं ज्ञेयं वेदसिद्धान्तमेव हि इ.

१ त्रिकालं च त्रिलिङ्गं च त्रिसंज्ञं च तथा विदुः ।
सनत्कुमारसिद्धान्ते ओंकारः समुदाहृतः ॥८३॥

भूतं भव्यं भविष्यं च कालत्रयमुदाहृतः ।
स्त्रीपुंनपुंसकश्चैव त्रिलिङ्ग इति स स्मृतः ॥८४॥

५ बहिःसंज्ञो मध्यसंज्ञ अन्तःसंज्ञ इति स्मृतः ।
उद्गीथमक्षरं ह्येतदुद्गीथश्च उपास्यते ॥८५॥

ओमित्युद्गीयते ह्येष भूते भव्ये भविष्यति ।
त्रिस्थानं त्रिपदं चैव त्रिसंज्ञं च प्रकीर्तितम् ॥८६॥

ब्रह्मिष्ठानां भवेदेवं गुह्योपनिषत्सु च ।
१० हृत्कण्ठतालुकादीनि स्थानानि समुदाहरेत् ॥८७॥

जाग्रत् स्वप्नं सुषुप्तं च पदान्येतानि तस्य तु ।
बहिःसंज्ञस्तथान्तश्च घनप्रज्ञः स्वयं विभुः ॥८८॥

एतदक्षरमोंकारं भूतं भव्यं भविष्यति ।
त्रिप्रज्ञं त्रिपदं चैव सर्वव्यापि तथोच्यते ॥८९॥

१५ बहिःप्रज्ञो विभुर्विश्व अन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्रोक्त एक एव त्रिधा भवेत् ॥९०॥

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।
आकाशे तुर्यदप्राज्ञास्त्रिधा देहे व्यवस्थितः ॥९१॥

---

८. प्रकीर्तितः इ.
१५.–१६. बहिःप्रज्ञो ... ह्यन्तः प्र ... प्राज्ञ एक एव ...स्मृतः मा. आ. १
१७. मा. आ.२
१८. आकाशे च हृदि प्रज्ञा इ. आकाशे च हृदि प्राज्ञः मा. आ. २



१ स्थूलो वैश्वानरो नित्यं तैजसोन्तः प्रकृतिभुक् ।
आनन्दभुक् तथा प्राज्ञ एक एव त्रिधा भवेत् ॥९२॥

सत्वाश्चैव प्रयत्नेन ब्रह्मा(ह्म)भवति मानवः ।
स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ॥९३॥

५ आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ।
त्रिपु धामसु यद्भोज्यं भोक्ता यस्तु प्रकीर्तितः ॥९४॥

उभयं विन्दते यस्तु स भुञ्जानो न लिप्यते ।
प्रभवः सर्वभूतानां सतामिति विनिश्चयः ॥९५॥

प्रणवः सूयते सर्वं वेत्ता यः पुरुषः स्मृतः ।
१० त्र्यवस्थानं त्रिभोक्तारं त्रिभोज्यं च तथा परम् ॥९६॥

एवं पाशुपते विद्यात् सिद्धान्ते प्रणवं विभुम् ।
शान्तं घोरं तथा मूढं त्रिरवस्थानमेव तु ॥९७॥

शरीरमापः सोमश्च त्रिभोज्यमिति कीर्तितम् ।
प्राणोह्यग्निस्तथादित्यस्त्रिभोक्ता इति स स्मृतः ॥९८॥

---

१. प्रवृत्तभुक् इ.
२. त्रिधा भोगं विजानथ इ.; त्रिधा भोगं निबोधत मा. आ. ३
४. मा. आ. ४; स्थूलं तर्पयते विश्वं प्रविविक्तस्तु तैजसः इ.
स्थूलसंतर्प्यते विश्वं प्रविभक्तं तु तैजसम् आ.
५. आनंदं च तथा प्राज्ञं त्रिधा तृप्तिं विजानत आ.
६. यश्च प्रकी. ... मा. आ. ५
७. वेदैतदुभयं यस्तु स.... मा. आ. ५
८. सर्वभावानां मा. आ. ६
१०. इ.; तथा परा आ.
१२. इ.; तथा सूक्ष्मं आ.

१ ओंकारं समभिध्यायेद्हृदि कृत्वा तु धारणाम्।
ऋषिपुत्रो महातेजा वाग्विशुद्धो महेश्वरः ॥९९॥

त्रिरात्मा त्रिस्वभावश्च तथा त्रिव्यूह एव च।
पाञ्चरात्रे स्मृतो ह्येष भगवद्वाचकः स्मृतः ॥१००॥

५ बलं वीर्यं तथा तेजस्त्रिरात्मा इति संज्ञितः।
ज्ञानैश्वर्यं तथा शक्तिस्त्रिस्वभाव इति स्मृतः ॥१०१॥

सङ्कर्षणोथ प्रद्युम्नो(म्नः) अनिरुद्धस्तथैव च।
त्रिव्यूह इति निर्दिष्ट ओंकारो विष्णुरव्ययः ॥१०२॥

भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा।
१० व्यक्ताऽव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा।

वाथुलेरेकमात्रस्तु ओंकारः समुदाहृतः ॥१०३॥
यदक्षरं वेदविदो वदन्तिं विशान्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं
संग्रहेणाभिधास्ये ॥१०४॥

१५ ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१०५॥

---

१. धारणम् इ., आ.
२. महाचैष वाग्विशुद्धो इ.
११. वाथुलेरित्यादितः १०७ तमश्लोकपूर्वार्धपर्यन्तं नास्ति इ.
१२.-१४. .... हेण ब्रवीमि गीता. ८.११; ... णाभिधास्ये इति
आनन्दवर्धिनीपाठः
१५.-१६. गीता. ८. १३



१ एवं त्रिपष्टिभेदैस्तु सिद्धान्तेपु प्रगीयते।
स्थूलभेदेन चोंकारश्चतुःपष्टि(ष्टि)स्तु
निष्कलः ॥१०६॥

विष्णुर्निरञ्जनं शान्तमानन्दं सर्वदेहिनाम्।
५ अक्षरं तं विजानीयात् स्थूलं च क्षरसंज्ञितम् ॥१०७॥

न च स्थूलं न च ह्रस्वं न च दीर्घं न च प्लुतम्।
न लोहितं न कृष्णं च सर्ववर्णविवर्जितम् ॥१०८॥

इन्द्रियैरिन्द्रियार्थैश्च तत्त्वैश्च परिवर्जितम्।
ध्रुवं च शाश्वतं नित्यमचलं लयवर्जितम् ॥१०९॥

१० अक्षरं चाजरं चैवमनुत्पन्नमनाशि च।
सर्वमात्राविनिर्मुक्तमानन्दं ब्रह्म निष्कलम् ॥११०॥

अघोपमव्यञ्जनमस्वरं च यत्
कव्य (ण्ठ) तालव्यमनासिकं च।
अरेफजातस्वरमोष्ठवर्जितं तदक्षरं स्वरति
१५ स्वयं भवम् ॥१११॥

ओंकारं विपुलमचिन्त्यमप्रमेयं सूक्ष्माकारं
ध्रुवमचलं शिवं पुराणम्।
तद्विष्णोः पद (पदं) मुखपङ्कजप्रसूतं देहान्तःस्थं
मनसि च यत् स्थितिं करोति ॥११२॥

---

१२.-१५. अघोप ... यत्तालुकण्ठोष्ठमनासिकं च तत्।
अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कथं चित् ॥
अमृतनादोपनिषद् २५

१ दश नामानि नैरुक्ता ओंकारस्य प्रचक्षते ।
अन्वर्थं कानि तानीह वेदितव्यानि धीमता ॥११३॥

ओंकारं प्रणवं चैव सर्वव्यापिनमेव च ।
अनन्तं च तथा तारं शुक्लं वैद्युतमेव च ॥११४॥

५ हंसं तुर्यं परं ब्रह्म इति नामानि जानत ।
निष्कलस्य तु सर्वज्ञः पर्यायेण हि कीर्तितः ॥११५॥

उच्चार्यमाणः सर्वत्र आपादतलमस्तकम् ।
उन्नामयेच्छरीरं तु ओंकारस्तेन चोच्यते ॥११६॥

ऋग्यजुः सामाथर्वाणि देवताश्चाक्षरत्रयम् ।
१० शरीरं वाङ्मनश्चैव प्राणनात् प्रणवः स्मृतः ॥११७॥

शरीरं चैव विश्वं च विद्यास्थानानि सर्वशः ।
व्याप्य संतिष्ठते यस्मात् सर्वव्यापी ततः स्मृतः ॥११८॥

अनन्तं नयते स्थानं तस्य चान्तो न लभ्यते ।
ऋषिदेवमनुष्येषु अनन्तस्तेन कीर्तितः ॥११९॥

१५ सर्वदुखसमुत्थानाद्भवग्राहार्णवाकुलात् ।
चिन्तितस्तारयेद्यस्मात्तेन तारो निगद्यते ॥१२०॥

वर्णेन च भवेच्छुक्लः शुद्धं च नयते पदम् ।
त्रिविधं शोषयेत् पापं तेन शुक्ल इति स्मृतः ॥१२१॥

---

२. अन्वर्थकानि तानीह ... धीमताः इ.
७. उच्चार्यमाणं सर्वं तु आपाद ... इ.
९. सामथर्वाणि आ.
१६. तारस्तेन निगद्यते इ.



१ आविष्करोति स यतेज्योतीरूपं भ्रुवो(र)न्तरे ।
विद्योतते तमो भित्त्वा वैद्युतस्तेन कीर्तितः ॥१२२॥

हृदि ध्यानं सदा यस्मादादित्योद्गीथमेव च ।
भित्त्वा शरीरं नयति तस्माद्धंस इति स्मृतः ॥१२३॥

५ जाग्रत् स्वप्नं च सुप्तं च तुर्यं चैव चतुर्थकम् ।
ज्ञातस्तु त्रायते यस्मात् तुर्यस्तेन निगद्यते ॥१२४॥

वाङ्मयस्य तु सर्वस्य ब्रह्मणस्त्रिविधस्य च ।
मुखमेतत् समुद्दिष्टं शब्दब्रह्ममयं विभु ॥१२५॥

परं ब्रह्म नयत्येव परब्रह्म इति स्मृतः ।
१० एवं नैरुक्तकैर्दृष्टमृषिभिश्च तथा परैः ॥१२६॥

याष्कलैरेकमात्रस्तु ओंकारः समुदाहृतः ।
रुचकायन आचार्यो द्विमात्रं चेच्छते सदा ॥१२७॥

द्विमात्रश्चार्धमात्रस्तु नारदस्य मतेन तु ।
मौद्गल्यस्य त्रिमात्रस्तु ओंकारो नात्र संशयः ॥१२८॥

१५ वासिष्ठस्य मतेनैव मात्रा चात्र चतस्त्रिका (?) ।
त्रिमात्रो मनुना चोक्तस्तथान्यैर्ऋषिसत्तमैः ॥१२९॥

पाराशरैश्चतुर्मात्रस्तथा स्वध्यात्मचिन्तकैः ।
ह्रस्वं दीर्घं प्लुतं शान्तं चतुर्धा संप्रकीर्तितम् ॥१३०॥

---

६. व्यतस्तु त्रायते यस्मात् तुर्यस्तेन इ.
८. विभुं आ.
१२. सालंकायन आचार्यो...इ.
१६. द्विमात्रो मनुना प्राज्ञैस्तथान्यै....इ.
१७. तथाऽध्यात्मविचिन्तकैः इ.

१ भवेत् कर्मवशादेवमन्यथा तु त्रिरक्षरम् ।
भगवान् याज्ञवल्क्यस्तु अमात्रं चेच्छते सदा ॥१३१॥

यः शब्दमय ओंकार उच्चार्यः स्थूल एव सः ।
अमात्रश्चाप्यनुच्चार्य परोंकारः स उच्यते ॥१३२॥

५ तिस्रः सार्धास्तथा मात्राः स गृह्णाति यथाक्रमम्
परं ब्रह्म तमेवाहुश्चात्मानं ब्रह्मचिन्तकाः ॥१३३॥

यत् पूर्वं तु समुद्दिष्टमोंकाराग्रे व्यवस्थितम् ।
अक्षरैश्च पदैश्चैव अतीतं पञ्चमं पदम् ॥१३४॥

यं(यत्)प्राप्य विन(नि)वर्तन्ते ओंकारस्य पथि स्थिताः ।
मनसात्र समाधाय शरीरं लिङ्गमानवम् ॥१३५॥

संकल्पं व्यवसायं च अभिमानाख्यसंज्ञकम् ।
चेतनाधिष्ठितं सूक्ष्मं तथा सूक्ष्मैः सहैव तु ॥१३६॥

ओंकारपद्मनालेन हृद उध्दृत्य योजयेत् ।
परमे व्योम्न्यनन्ताख्ये सर्वसङ्कल्पवर्जिते ॥१३७॥

---

६. ॥१३१॥ इतः प्रभृति श्लोकसङ्ख्या मुद्रितसङ्ख्यातः द्वाभ्यां न्यूना अ.

९. ओंकारपथमाश्रिताः इ.

१०. मनस्तु प्रसमाधाय शरीरं लिङ्गमातृकम् इ.

११. इ.; संकल्पोध्यवसायं च अभि......आ.

१३. .....नालेन उध्दृत्य परियोजयेत् इ.



१ तस्मिंस्तावन्निरोद्धव्यं मनश्चोंकारमेव च ।
यावन्निर्मलतां याति एष योग उदाहृतः ॥१३८॥

मनो युञ्ज्यात्तथोंकारे ओंकारं प्रणवे तथा ।
प्रणवं ब्रह्मणि स्थाप्य न किञ्चिदपि चिन्तयेत् ॥१३९॥

५ प्रणवो विमलः शुद्धो निःशब्दो व्योमसंज्ञकः ।
तस्मादुत्पद्यते प्राणः पुनस्तत्रैव लीयते ॥१४०॥

प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ।
दुःखे भयाभिघातार्थे सर्वथा प्रणवं स्मरेत् ॥१४१॥

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
१० प्रणवो ह्यादिः सर्गस्य अन्तो मध्यस्तथैव च ॥१४२॥

एवं हि प्रणवं ज्ञात्वा विशन्ति ब्रह्म निष्कलम् ।
अपूर्वोऽनन्तारोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥१४३॥

प्रणवो हीश्वरो देवो हृदि सर्वस्य धिष्ठितः ।
सर्वव्यापिनमोंकारं मत्त्वा धीरो न सीदति ॥१४४॥

१५ अमात्रं च त्रिमात्रं च अद्वैतं ब्रह्म तत् परम् ।
स्थूलं चाप्यतिसूक्ष्मं च सर्वतः किमपि स्थितम् ॥१४५॥

---

३. युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् मा. आ. २५

७. मा. आ. २५

९. मा. आ. २६

१०. ह्यादिसर्गस्य अन्ते मध्य......अ.; सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च मा. आ. २७

१२. मा. आ. २६;...न्तरो बाह्यो ह्यपरः प्रणवोऽलयः अ.; प्रणवोऽव्ययः इ.

१३. प्रणवं ईश्वरं वेद....धिष्ठितम् इ.; प्रणवं हीश्वरं विद्यात् सर्वस्य हृदि संस्थितम् मा. आ. २८

१४. न शोचति इ., मा. आ. २८

१ ओंकारं विन्दते यस्तु स भवेद्वेदविद्विजः ।
यथा पत्रं फलं पुष्पं शङ्कुनैकेन धार्यते ॥१४६॥
तथा जगदिदं सर्वमोंकारेणैव धार्यते ॥
जप्येन दहते पापं प्राणायामैस्तथा मलम् ॥१४७॥
५ ध्यानेन जन्म निर्घातं धारणाभिश्च मुच्यते ।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ॥१४८॥
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ।
प्रोक्षणे पोषणे चैव प्रतिष्ठाने प्रतिग्रहे ॥१४९॥
आश्रावणे वषट्कारे प्रत्याश्रावे जपेऽपि च ।
१० सामसु ब्रह्मसुख्येषु ऋग्यजुस्तोत्रशस्त्रयोः ॥१५०॥
सर्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति च ॥१५१॥
सर्वमन्त्राधिराजेन ओंकारेण न संशयः ।
यदूनं चातिरिक्तं च यच्छिद्रं यदयाज्ञिकम् ॥१५२॥

---

२. यथा पर्णं पलाशस्य इ.
६. मनु. २.७४
७. विशीर्यति मनु. २.७४; स्रवत्यनोङ्कृतामितिवचनात् विश्वरूप. १.१५
८. प्रतिष्ठाने च संभवे इ.
९. प्रत्याश्रावे यजेति च इ.
१०. सामसुब्रह्मण्याख्येषु इ.
११. वीमि. परि. ७९;...मिति प्रथमोच्यते आ.
१२. भवन्ति हि वीमि. परि. ७९
१३. ....धियज्ञेन वीमि. परि. ७९
१४. यन्न्यूनमति....द्रं यच्च याज्ञियम् वीमि. परि. ७९



१ यदमेध्यमशुद्धं वा यातयामं च यद्भवेत् ।
ओंकारेण प्रयुक्तेन सर्वं चाविफ(क)लं भवेत् ॥१५३॥
अनूनं नातिरिक्तं च अच्छिद्रं याज्ञिकं तथा ।
मेध्यं शुद्धायातयामं पवित्रं मङ्गलं तथा ॥१५४॥
५ सर्वमङ्गलमाङ्गल्यं सर्वब्रह्ममयं विभुम् ।
पावनं मोक्षदं पुण्यं सर्वदेवमयं विभुम् ॥१५५॥
विदित्वा मुच्यते क्षिप्रं जन्मसंसारबन्धनात् ।
मुक्तो न जायते भूयो ब्रह्मभूतः सनातनः ॥१५६॥
एतत् संक्षेपतः प्रोक्तमोंकारगुणवर्णनम् ।
१० विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि ॥१५७॥
योगाचार्येण संचिन्त्य याज्ञवल्क्येन धीमता ।
ओंकारनिर्णयो ह्येष प्रोक्तः शिष्यहितैषिणा ॥
श्लोकानां द्वे शते प्रोक्ते निर्णयः समुदाहृतः ॥१५८॥

इति (श्री) बृहद्योगियाज्ञवल्क्ये
१५ ओंकारनिर्णयो(नाम)द्वितीयोऽध्यायः ॥२॥

---

१. ...मशुद्धं च वीमि. परि. ७९.
२. तत्तदोंकारयुक्तेन मन्त्रेणाविकलं भवेत् वीमि. परि. ७९; तत्रोंकारप्रयुक्तेन मन्त्रश्चाविकलो भवेत् इ.
३. याज्ञियं तथा इ.
६. ...मयं स्थितम् इ.
१३. शते पूर्णे निर्णयं समुदाहृतम् इ.; ॥५६॥ आ.
१५. इति बृह...निर्णयो द्वितीयोध्यायः आ.; योगयाज्ञवल्क्य ओंकारनिर्णयो नामाध्यायः प्रथमः ॥ः॥ इ.

## तृतीयोऽध्यायः

१ अतः परं प्रवक्ष्यामि व्याहृतीनां च निर्णयम् ।
सप्त व्याहृतयः प्रोक्ताः पुराकल्पे स्वयंभुवा ॥ १ ॥
तान्येव सप्त च्छन्दांसि लोकाः सप्त प्रकीर्तिताः ।
त्रिधा चतुर्धा विज्ञेया(ः) पंचधा सप्तधा पुनः ॥ २ ॥
५ भूर्भुवःस्वरिति ज्ञेया अभ्यस्तास्ताः प्रकीर्तिताः ।
पश्च व्याहृतयः प्रोक्ताः सामगानां च सामसु ॥ ३ ॥
पुरुषं च तथा सत्यं भूर्भुवःस्वस्तथैव च ।
विद्याप्रकरणापाये यजमानस्तु वै सदा ॥ ४ ॥
१० सप्त व्याहृतयः प्रोक्ताः प्राणायामेषु नित्यशः ।
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ॥ ५ ॥
भूराद्याश्चैव सत्यान्ता महाव्याहृतयस्तु वै ।
लोकाह्येतास्तु सप्तैते उपर्युपरि संस्थिताः ॥ ६ ॥
चतुर्दशविधं सर्गं दृष्ट्वेदं व्याहृतं स्वयम् ।
१५ सप्त लोका भविष्यन्ति तस्माद्व्याहृतयः स्मृतः(ताः)॥७॥
अव्याहृतमिदं ह्यासीत् सदेवासुरमानुषम् ।
संसत्यं व्याहृतं पूर्वं प्रजापतिरिति श्रुतिः ॥ ८ ॥

---

१०. इति सप्त व्याहृतयः प्राणा...आर. ३९; प्राणायामेन नित्यशः स्मृच. १४१

११. आर. ३९



१ भूर्भुवःस्वस्तथा पूर्वं स्वयमेव स्वयंभुवा ।
व्याहृता ज्ञानदेहेन तेन व्याहृतयः स्मृताः ॥ ९ ॥
एतास्तु व्याहृतीः सप्त यः स्मरेत् प्राणसंयमे ।
उपासितं भवेत्तस्य विश्वं भुवनसप्तकम् ॥१०॥
५ सर्वेषु चैव लोकेषु कामचारश्च जायते ।
एषा लोकवती ज्ञेया तनुराद्या प्रजापतेः ॥११॥
सप्तान्ता देवदेवस्य विष्णोरमिततेजसः ।
व्याहृतीनां च सर्वासामृषिश्चैव प्रजापतिः ॥१२॥
सप्त च्छन्दांसि यान्यासां तानि सम्यक् प्रकीर्तयेत् ।
१० गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥१३॥

---

१. स्मृत. ३८३

२. स्मृत. ३८३

३. य एता व्याहृतीः सप्त स्मृच. १४०, वै. ३२६

४. वै. ३२६; उपासीनं स्मृच. १४०; उपासीतं आ.

५. स्मृच. १४०; वै. ३२६

७. अप. ४३

८. वीमि. २७६, अप. २४५; सर्वासामार्षं चैवं प्रजापतिः स्मृत. ३८६; व्याहृतीनां तु सर्वासामार्षं चैव स्मृच. १४१., सं. ३८; व्याहृतीनां तु वै. ३२५;...मृषिरेव प्रजापतिः अग्नि. २१६. ३६

९. स्मृच. १४१; ततश्छन्दांसि...सम्यक् प्रदर्शयेत् अप. ४५; प्रवर्तयेत् वीमि. २७६; सप्त च्छन्दांसि प्रोक्तानि छान्दसानि तु सर्वशः सं. ३८

१०. वृद्धहारीतस्मृ. १०. ५३, अग्नि. २१६. ३९, वीमि. २७६, स्मृच १४१, अप. ४५, वृप. २.६४; त्रिष्टुबेव च स्मृत. ३८६; ...ष्टुप् च जगती त्रिष्टुबेव च सं. ३८; आग्नेयवचनमिति आर. ४०*

१　त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै ।
अग्निर्वायुस्तथादित्यो बृहस्पत्याप एव च　॥१४॥

इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ।
अनादिष्टेषु सर्वेषु प्रायश्चित्तेषु सर्वशः　॥१५॥

५　प्रणायामप्रयोगे च विनियोग उदाहृतः ।
भवन्ति भूयो भूतानि उपभोगक्षये पुनः　॥१६॥

कल्पान्ते ह्युपभोगाय भुवस्तेन प्रार्कीर्तितम् ।
शीतोष्णवृष्टितेजांसि जायन्त्येतानि वै ततः　॥१७॥

आलयः सुकृतीनां च स्वर्लोकः समुदाहृतः ।
१०　अधरोत्तरेभ्यो लोकेभ्यो महांश्च परिमाणतः　॥१८॥

हृदयं सर्वलोकानां महस्तेन निगद्यते ।
कल्पदाहे प्रलीनास्तु प्राणिनस्तु पुनः पुनः　॥१९॥

---

१. वीमि. २७६, स्मृच. १४१, अप. ४५; छन्दांस्येतान्यनुक्रमात् बृप. २. ६४; पङ्क्तिश्च जगती स्मृत. ,३८६; पङ्क्तिश्च बृहती चेति सप्त च्छन्दांसि तानि वै सं. ३८; चेति छन्दास्याहुरनुक्रमात् अग्नि.२१६.३९. चेति छन्दांस्यनुक्रमात्, आग्नेयवचनामिति आर. ४०*;...स्येतान्यनुक्रमात्-बृद्धहारीतस्मृ. १०.५३

२. वीमि. २७६, स्मृच. १४१, वै. ३२५,... स्तथा सूर्यो बृप. २. ६३; ...स्तथा सूर्यो बृहस्पातिरपां पातिः स्मृत ३८६;...स्तथादित्यो बृहस्पातिरपां पतिः सं. ३८,....स्तथा सूर्यो, आग्नेयवचनमिति आर. ४० *

३. वीमि. २७६, स्मृच. १४१. वै. ३२५, अप. ४.५, सं. ३८ आग्नेयवचनमिति आर. ४०*

४. वीमि. २७६

५. वीमि २७६, स्मृच.१४१, अप. ४५, प्राणस्यायमने चैव स्मृत. ३८६

६. ॥१७॥ आ.आदर्शपुस्तके श्लोकाङ्काः इतःप्रभृति मुद्रितसङ्ख्यातः एकाधिकाः



१　जायन्ते तु पुनः सर्गे जनस्तेन उदाहृतः ।
सनकाद्यास्तपः सिद्धा ये चान्ये ब्रह्मणः सुताः　॥२०॥

अधिकारनिवृत्ताश्च तिष्ठन्त्यस्मिंस्ततस्तपः ।
सत्यं तु सप्तमो लोको ब्रह्मणः सदनं हि तत्　॥२१॥

५　सर्वेषां चैव देवानां मूर्ध्नि संतिष्ठते सदा ।
ज्ञानकर्मस्वनुष्ठानात्तथा सत्यस्य भाषणात्　॥२२॥

प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः ।
सत्यं तु सप्तमो लोकस्तस्मादूर्ध्वं न विद्यते　॥२३॥

आसप्तमात्तु पातालादूर्ध्वमेतदुदाहृतम् ।
१०　अधस्ताद्राजतं ह्यण्डमूर्ध्वमर्धं हिरण्मयम् ।　॥२४॥

प्रधानादेव संभूतं ब्रह्मनीडं हिरण्मयम् ।
भूराद्यैःसप्तभिर्व्याप्तं सत्यान्तैः पुरुषसंमितैः　॥२५॥

अर्द्धोर्द्धं छिद्रितं ह्यण्डं सप्तप्रकृतिलौकिकम् ।
अनन्ताकाशमध्यस्थं जीवभास्करभासितम्　॥२६॥

अजस्य नाभावुद्भूतं यस्मिन् विश्वं प्रतिष्ठितम् ।
१५　महदादि विशेषान्तमव्यक्ते गच्छते लयम्　॥२७॥

अपुनर्मरणायैव ब्रह्मणः सदने स्थिताः ।
अधिकारं विना चैव ब्रह्मणः सदृशाश्च ते　॥२८॥

अव्यक्ते वै दिनस्यान्ते मुच्यन्ते ब्रह्मणा सह ।
१९　विशन्ति परमं धाम पुरुषं भास्करप्रभम्　॥२९॥

---

५. चैव लोकानां....यदा इ.

८. सत्यस्तु इ.

१९. भास्करं परम इ.

१ व्याहृतीर्व्याहरंश्चैव प्राणैर्यदि विमुच्यते ।
विलयं याति च व्यक्तमव्यक्तं पुरुषे क्षणात् ॥३०॥

एष संक्षेपतश्चोक्तः सप्तव्याहृतिनिर्णयः ।
यं ज्ञात्वा मुच्यते विद्वान् भवग्राहाकुलार्णवात् ॥३१॥

५ निर्णयो व्याहृतीनां तु श्लोका द्वित्रिंशकस्तथा ॥३२॥

इति (श्री) बृहद्योगियाज्ञवल्क्ये व्याहृतिनिर्णयो नाम
तृतीयोध्यायः ।

---

५. इदमर्धं नास्ति इ.
६. ...व्याहृतीनिर्णयस्तृतीयोध्यायः आ.,
योगयाज्ञवल्क्यव्याहृतिनिर्णयो नामाध्यायः द्वितीयः ॥*॥ इ.

## चतुर्थोऽध्यायः

१ अतः परं प्रवक्ष्यामि गायत्र्या निर्णयं शुभम् ।
यं ज्ञात्वा याति वै विप्रः सायुज्यं ब्रह्मणा सह ॥ १ ॥

आर्षं छन्दश्च दैवत्यं विनियोगश्च ब्राह्मणम् ।
शिरश्चाक्षरदैवत्यमावाहनविसर्जनम् ॥ २ ॥

५ ध्यानं जपप्रयोगश्च येषु कर्मसु यादृशम् ।
ज्ञातव्यं ब्राह्मणैर्यत्नाद्ब्राह्मण्यं येन वै भवेत् ॥ ३ ॥

सविता देवता ह्यस्या मुखमग्निस्तादित्यृचः।
विश्वामित्रऋषिश्छन्दो गायत्री तु विधीयते ॥ ४ ॥

विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः।
१० विनियोग उपनये प्राणायामे तथैव च ॥ ५ ॥

गायत्री वा इदं सर्वं ब्रह्माण्डं ब्राह्मणानि तु ।
वेदोपनिषच्छाखासु ब्राह्मणानि विधानतः ॥ ६ ॥

---

३. विनियोगोथ ब्राह्मणम् इ.
७. देवता यस्या...मिस्त्रिराच्च या वीमि. ७७, स्मृच. १४१,...मिस्त्रि-
पात्तथा अप. ४५,...मिस्त्रिपात्स्थिता आर. ४०*
८. इ.; गायत्री सा विशिष्यते वीमि. २७७, स्मृच. १४१, अप. ४५,
आर. ४०*; गायत्री सवितेष्यते स्मृत. ३८६
१०. वीमि. ७७, अप. ४५; विनियोगस्तूपनये स्मृच. १४१; जपहोमो-
पनयने विनियोगो विधीयते स्मृत. ३८६
११. ब्राह्मणं ब्राह्मणानि तु अप. ४५; ब्राह्मणं समुदाहृतम् इ.
१२. वेदोपनिषदोच्छाखा ब्राह्मणान् विविधानि च इ.

१ पुराणधर्मशास्त्राणि गायत्र्याः पावनानि तु ।
कीर्तितानि त्वनेकानि गायत्र्याः पावनानि च ॥ ७ ॥

षोडशाक्षरकं ब्रह्म गायत्र्यास्तच्छिरः स्मृतम् ।
ओमापो ज्योतिरित्येष मन्त्रो यः परिकीर्त्यते ॥ ८ ॥

५ तस्य प्रजापतिश्चार्षिर्यजुश्छन्दो विवर्जि(र्णि)तम् ।
ब्रह्माग्निवायुसूर्याश्च दैवत्यं समुदाहृतम् ॥ ९ ॥

प्राणस्यायमने चैव विनियोग उदाहृतः ।
गायत्र्याः शिरसा सार्धमेवं श्रुतिनिदर्शनम् ॥१०॥

तपसा सुसमुद्धृत्य आदिसर्गे स्वयंभुवः ।
१० ओंकारपूर्वा गायत्री निर्जगाम ततो मुखात् ॥११॥

अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥१२॥

---

२. इ.; वेदेषु यान्यनेकानि गायत्र्याः कीर्तितानि तु आ.; वेदेष्वन्यान्यनेकानि गायत्र्याः कीर्तितानि तु अप. ४५

३. ...स्तु शिरः स्मृतम् वै.३२६; स्मृतः आ.; षोडशाक्षरकं देव्या गायत्र्यास्तु स्मृत. ३८५

४. मन्त्रो वै तैत्तिरीयकः वै. ३२३; मन्त्रो यस्तु प्रकीर्त्यते स्मृच. १४१ अप. ४५; ज्योतिरस इति मन्त्रो यस्तु प्रकीर्त्यते वीमि. २७७; आपो, ज्योतिरित्येष मन्त्रो यस्तु प्र...आर.४० *

५. प्रजापतेरार्ष अप. ४५;...पतिश्चार्षं स्मृच. १४१;...पतिश्चार्षं यजुश्छन्दो विवाक्षितम् वीमि. २७७;...श्छन्दोऽधिवर्णितम् आर. ४०

६. देवताः समुदाहृताः वीमि.२७७, आर. ४०; ब्रह्माग्निर्वायुः सूर्यश्च देवताः समुदाहृताः अप. ४५; ब्रह्मा वायुश्च सूर्यश्च देवताः समुदाहृताः स्मृच. १४१

७. स्मृच. १४१; प्राणायामप्रयोगे च अप. ४५

११-१२. मनु. २.७६



१ त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥१३॥

यथाग्निर्वै देवतानामृतूनां कुसुमाकरः ।
ब्राह्मणो द्विपदानां च गावश्चैव चतुष्पदं (दाम्) ॥१४॥

५ तेजस्विनां सहस्रांशुरिन्द्रियाणां यथा मनः ।
मेरुः शिखारिणां श्रेष्ठो गायत्री छन्दसां तथा ॥१५॥

यथा मधु च पुष्पेभ्यो घृतान्मण्डं रसात् पयः ।
एवं हि सर्ववेदानां गायत्री सारमुच्यते ॥१६॥

गायत्री प्रकृतिर्ज्ञेया ओंकारः पुरुषः स्मृतः ।
१० ताभ्यामुभाभ्यां संयोगात् जगत् सर्वं प्रवर्तते ॥१७॥

संवत्सरतनुर्ह्येषा अरणीति निगद्यते ।
चतुर्विंशत्यात्मिकैषा तत्त्वन(व)त्यपि सा स्मृता ॥१८॥

प्रणवः सर्ववेदानां गायत्री छन्दसामिह ।
अक्षराणि च यान्यस्याः स्मृतान्यङ्गानि तानि तु॥१९॥

१५ चतुर्विंशति तत्त्वानि ओंकारः पञ्चविंशकः ।
चतुर्विंशाक्षरा देवी त्रिपदाष्टाक्षरं पदम् ॥२०॥

गेयकाले सामगानां यकारोस्याः प्रजायते ।

---

१-२.मनु .७७

८. ॥१७॥ इतःपरमस्मिन्नध्याये २३ तमश्लोकपर्यन्तमादर्शपुस्तके श्लोकाङ्काः मुद्रितसङ्ख्यातः एकाधिकाः ।

१२. चतुर्विंशात्मिका ह्येषा इ.

१३. प्रणवः सर्ववेदेषु गीता.७.८; गायत्री छन्दसामहम् गीता १०.३५ एतच्छ्लोकार्धानन्तरं, अक्षराणामकारोस्मिन् द्वन्द्वः सामासिकस्य च (गीता १०.३३) इत्यधिकम् इ.

१ चतुर्विंशः स विज्ञेयो अलक्ष्यः शान्तिमस्तुवः
(चान्तिमस्तु सः) ॥२१॥

केचिदिच्छन्ति निष्कान्तं यकारान्ते प्रतिष्ठितम्।
अन्तिमो यो भवेद्वर्णो व्यञ्जनं चार्धमात्रिकम् ॥२२॥

५ तत्तालुनि निविष्टं तु तुर्याख्यं सोमरूपकम् ।
चतुर्विंशतिसंख्येयमक्षरं ब्रह्म निष्कलम् ॥२३॥

तेनैवारभ्यते देवी तेनैवेषा समाप्यते ।
सार्धमात्रिकरूपेण ओंकारान्ते व्यवस्थितम् (॥२४॥)

प्रधानः स तु विज्ञेयस्तत्परः पुरुषः स्मृतः ॥२५॥

१० ओंकारः पूर्वमुच्चार्यो भूर्भुवःस्वस्ततःपरम् ।
गायत्री प्रणवश्चान्ते जपे ह्येवमुदाहृतः ॥२६॥

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता ॥२७॥

आदित्यमण्डलान्तस्था ब्रह्मलोकगताथवा ।
१५ अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥२८॥

---

८. अत्रादर्शपुस्तके श्लोकांकः नास्ति स चास्माभिः कल्पितः ।
९. इतः प्रभृति मुद्रितश्लोकसङ्ख्या आदर्शपुस्तकानुरूपा एव ।
१०. वीमि. २२८; प्रणवं पूर्वमुच्चार्य स्मृत. ३९२; ओंकारं पूर्वमुच्चार्य भूर्भुवस्वस्तथैव च अर. ४७, स्मृच. १४९, अग्नि. २१५.१४
११. ...मुदाहृता स्मृत. ३९२; गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः स्मृच. १४९; जपो ह्येवमुदाहृतः अर. ४७; जपे चैवमुदाहृतम् अग्नि. २१५.१५
१२. वीमि. २८८, अर. ४६, आर. ४४, ग. २१३.७०
१३. वीमि. २८८, अप. ४६, सं. ६४, आर. ४४
१४. वीमि. २८८, स्मृच. १४३;...लोकनिवासिनी अप. ४६;...लोकगत। तथा आर. ४४
१५. वीमि. २८८, स्मृच. १४३, आर. ४४, ग. २१३.७०



१ आवाह्य यजुषा तेन तेजोसीति विधानतः ।
एतद्यजुः पुरा दृष्टं देवैर्दर्शनकाङ्क्षिभिः ॥२९॥

तत्रावाह्य जपित्वा तु नमस्कृत्य विसर्जयेत्
प्रणवं भूर्भुवःस्वश्च अङ्गानि हृदयादयः ॥३०॥

५ त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम् ।
विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै ॥३१॥

सर्वावयवसंपूर्णा ध्याता सिद्धिकरी भवेत् ।
षड्जश्च ऋषभश्चैव धैवतश्च तृतीयकः ॥३२॥

त्रिभिः स्वरैर्यदा गीता त्रैस्वर्येति ततःस्मृता ।
१० भूर्लोकश्चान्तरिक्षं च स्वर्लोकश्च तृतीयकः ॥३३॥

पदैस्त्रिभिर्यदा त्या(व्या)प्ता त्रिपदेति ततः स्मृता ।
सविता देवता यस्मात् सावित्री तेन चोच्यते ॥३४॥

गायनं(न्तं) त्रायते यस्मात् गायत्रीति ततः स्मृतः(ता)।
श्येनो भूत्वाऽऽहरत् सोमं त्रिदिवात् स्वेन तेजसा॥३५॥

---

१. ग. २१३.७१; यजुषानेन वीमि. २८८, स्मृत. ३८९; आवाह्य यजुषानेन स्मृच. १४३; आवाह्य यजमानो हि ओजोसीति अप. ४६; ओजोसीति इ.
२. पुरा देवैर्दृष्टिदर्शन ग. २१३.७१
३. तत्र वाह्य जपित्वा च वीमि. २८८; आवाह्य पूजयित्वा तु अप. ४६; तामावाह्य जपित्वा च स्मृत. ३८९; जपित्वातो — नमस्काराद्विसर्जयेत् ग. २१३.७२
४. प्रणवो वीमि. २८८: ३१०; याज्ञवल्क्यवचनमिति स्मृत. ३८९
५. त्रिरावृत्य वीमि. २८८; त्रिरावार्य वीमि. ३१०
६. वीमि. २८८
८. गांधारश्च तृतीयकम् इ.
११. यदा व्याप्ता: त्रिपदा ततः स्मृता: इ.

१ छन्दसां पोषणात् तस्मात् गायत्री वा ततः स्मृता ।
वेदेषु पठ्यते चान्या.जप्यकालेऽन्यथा पुनः ॥३६॥

प्राणायामे तथा ध्याने होमकालेषु चान्यथा ।
निग्रहे चापि शत्रूणामन्यथा परिपठ्यते ॥३७॥

५ ओंकारं व्याहृतीस्तिस्रः प्रथमं संप्रयोजयेत् ।
ओंकाराद्या त्रिरावर्त्या वेदस्यारम्भणे तथा ॥३८॥

प्रणवाद्या तु विज्ञेया जप्ये व्याहृतिभिः सह ।
ताभिस्तु सप्तभिः सार्धं सप्तोंकारसमन्विताम् ॥३९॥

शिरसा सहितां देवीं प्राणायामे प्रयोजयेत् ।
१० प्रणवव्याहृतिभिः सार्धं स्वाहान्तां होमकर्मणि ॥४०॥

प्रतिलोमा प्रयोक्तव्या फट्कारान्ताऽऽभिचारिके ।
एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः ॥४१॥

अन्यथा शूद्रधर्मा स्याद्वेदानामपि पारगः ।
तस्मात् सर्वप्रयत्नेन ज्ञातव्या ब्राह्मणेन सा ॥४२॥

१५ व्याहृत्योंकारसहिता सशिराश्च यथार्थतः ।
सशिराश्चैव गायत्री यैर्विप्रैरवधारिता ॥४३॥

ते जन्मबन्धनिर्मुक्ताः परं ब्रह्म विशन्ति वै ।
षोडशाक्षरकं ब्रह्म गायत्री सशिरास्तथा ॥४४॥

---

२. वेदादौ पठ्यते चान्या जाप्यकाले तु अन्यथा इ.
८. सप्त व्याहृतिभिः सार्धं...न्वितः इ.
१०. व्याहृतीसार्धं स्वाहान्तो होमकर्मणि आर . ४५ *
११. प्रकर्तव्या ...भिचारके आर. ४५ *
१४. ब्राह्मणैस्तु सा इ.
१८. द्वादशाक्षरकं इ.



१ सकृदावर्तयेद्यस्तु सर्वपापैः प्रमुच्यते ।
सोंकारं चतुरावर्त्या विज्ञेया सा शताक्षरा ॥४५॥

शताक्षरा(रां) समावर्त्य चतुर्वेदफलं लभेत् ।
ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ॥४६॥

५ त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ।
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ॥४७॥

स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ।
एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ॥४८॥

सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते ।
१० सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः ॥४९॥

महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ।
सप्तावृत्या पुनेद्देहं दशभिः प्राप्यते दिवम् ॥५०॥

---

२. सोंकार आ.
३. सर्ववेदफलं इ.
४. ...व्ययः आ.; अग्नि. २१५.३; मनुवचनमिति वीमि.२५३;मनु.२.८३
५. मनुवचनमिति वीमि. २५३; अग्नि. २१५.३;चैव सावित्री मनु. २.८१
६. ...हन्येषा इ.; चान्वहं चेतां त्रीणि, योगीश्वरवचनमिति मद. ८२;
...न्यतास्त्रीणि अग्नि. २१५.४
७. अग्नि. २१५.४; योगीश्वरवचनमिति मद. ८२
८. मनु. २.७८
९. मद. ८२; ...योर्वेदविद्विप्रो मनु. २.७८, इ.
१०. मनु. २.७९; .... कृत्वस्तु बहिर्जपमेतत् त्रिकं द्विजः, योगीश्वरवचनमिति
मद. ८२
११. मनु. २.७९; योगीश्वरवचनमिति मद. ८२.
१२. सप्तावर्तो द्वरेद्देहं इ; समावर्तात् पुनात्येवा दशभिः प्राप्नुयाद्दिवम् , योगीश्वर-
वचनमिति मद. ८२; सप्तावर्ता पापहरा दशभिः प्रापयेद्दिवम् अग्नि. २१५.६

१ विंशावृत्या तु सा देवी नयते ह्यीश्वरालयम् ।
अष्टोत्तरशतं जप्त्वा तरते जन्मसागरम् ॥५१॥

तीर्णो भूयो न पश्येत जन्ममृत्युं सुदारुणम्
गायत्रीं जपते यस्तु सोमवद्भासते तु सः ॥५२॥

५ पादार्धं पादमर्धं वा समस्तामृचमेव वा ।
सर्वेषां भवपापानां संकरे समुपास्थिते ॥५३॥

दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ।
रुद्रकूष्माण्डजप्यैश्च जप्यैः सौरार्णकैस्तथा ॥५४॥

ऋषिभैर्विरजाजाप्यैर्गायत्री च विशिष्यते ।
१० ब्रह्महत्यां सुरापानं सुवर्णस्तेयमेव वा ॥५५॥

---

१. योगीश्वरवचनमिति मद. ८२; विंशावर्ता तु अग्नि. २१५.६, इ.
२. तारयेज्जन्मसागरात् मद. ८२, इ.; तीर्णः संसारसागरात् आग्नि. २१५.७
५. ... मृतमेव वा आ.
६. सर्वेषां चैव, योगीश्वरवचनमिति मद. ८२; सर्वेषामेव पापानां अत्रि. ८.८, वसिष्ठस्मृ. २५.११
७. योगीश्वरवचनमिति मद. ८२; दशसाहस्रमभ्यस्ता गायत्री अत्रि. ८.८.; गायत्र्याः साधनं परं इ.; अभ्यासो दशसाहस्रः सावित्र्याः शोधनं महत् वसिष्ठस्मृ. २५.१२
८. ...ण्डरूपैश्च जपैस्तैर्विविधैस्तथा अत्रि. ८.९
९. वैराजर्षिभिर्जप्यैश्च गायत्र्यास्तु विशेषतः अत्रि. ८.९
१०. ... हत्या सुरा ... अग्नि. २१५.९



१ गुरुदारागमं चैव जप्येनैव पुनाति सा ।
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ॥५६॥

तत्र तत्र तिलैर्होमो गायत्र्या जपनं तथा ।
वायुभक्षो दिवा तिष्ठत् रात्रिं नीत्वाप्सु सूर्यदृक् ॥५७॥

५ जप्त्वा सहस्रं गायत्र्याः शुध्येद् ब्रह्मवधादृते ।
शतेन गायत्र्याः स्नायात् शतमन्तर्जले जपेत् ॥५८॥

अपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ।
सायं प्रातस्तु यः संध्यां सऋक्षां सेवते द्विजः ॥५९॥

जपन् वै पावनीं देवीं सावित्रीं लोकमातरम् ।
१० स तया पावितो देव्या ब्राह्मणो धूतकिल्बिषः ॥६०॥

---

१. गुरुदारागमश्चैव अग्नि. २१५.९
२. याज्ञ. ३.३१०, याज्ञवल्क्यवचनमिति स्मृच. १५२; संकीर्णं पश्यत्यात्मन्यसंशयम् लघुशंखस्मृ. ७१
३. वाचनं तथा याज्ञ. ३.३१०; जप एव वा, याज्ञवल्क्यवचनमिति स्मृच. १५२ गायत्र्यावर्तनं तथा लघुशंखस्मृ. ७१
४. तिष्ठन् याज्ञ. ३.३११; प्यसूर्यदृक् इ.; दिनं तिष्ठे... मद. ८३; दिनं स्थित्वा रात्रिं नीत्वा तु सूर्यदृक् वै. ३३५.
५. याज्ञ. ३.३१०, मद. ८३; शुचिर्ब्रह्म... वै. ३३५
६. स्नायात् शतेन गायत्र्याः वै. ३३५
७. पीत्वा च वै. ३३५; आपः शतेन आ.
८. संध्यामस्कन्नामुपातिष्ठते वै. ३३५
९. देवीं पवित्रां वेदमातरम् वै. ३३५
१०. धूतकल्मषः वै. ३३५

१ न सीदेत् प्रतिगृह्णानः पृथिवीं चससागराम् ।
गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः ॥६१॥

ब्रह्महा हेमहारी च यस्तु विप्रः सुरां पिबेत् ।
गायत्र्याः शतसाहस्रे जपे भवति वै शुचिः ॥६२॥

५ अक्षराणि च दैवत्यं संप्रवक्ष्याम्यतःपरम् ।
आग्नेयं प्रथमं ज्ञेयं वायव्यं च द्वितीयकम् ॥६३॥

तृतीयं सूर्यदैवत्यं चतुर्थं वैद्युतं स्मृतम् ।
पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते ॥६४॥

बार्हस्पत्यं सप्तमं च पार्जन्यमष्टमं विदुः ।
१० ऐन्द्रं तु नवमं ज्ञेयं गांधर्वं दशमं स्मृतम् ॥६५॥

पौष्णमेकादशं ज्ञेयं द्वादशं मैत्रवारुणम् ।
त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं च चतुर्दशम् ॥६६॥

मारुतं पञ्चदशकं सौम्यं षोडशकं स्मृतम् ।
सप्तदशं त्वाङ्गिरसं वैश्वदेवमतःपरम् ॥६७॥

---

१. वै. ३३'५
२. अग्नि. २१'५. ११
३. ब्रह्मघ्नः स्वर्णहारी च सुरापो लक्षजाप्यतः अग्नि. २१'५. ११
४. गायत्र्या लक्षजापेन पातकेभ्यो विमुच्यते वै. ३३'५
५. इतः प्रभृति जप्यकालेषु संचिन्त्य इत्यादि (४.७० पू.) श्लोकार्धपर्यन्तो भागः ग्रह्योक्तत्वेन निर्दिष्टः स्मृच. १४४
७. तृतीयं शशिदैवतम् बृप. ४.१८
११. त्वाष्ट्रमेकादशं बृप. ४.२०
१२. पूष्णस्त्रयोदशम् बृप. ४.२१



१ आश्विनं चैकोनविंशं प्राजापत्यं तु विंशकम् ।
सर्वदेवमयं ज्ञेयमेकविंशकमक्षरम् ॥६८॥

रौद्रं द्वाविंशकं प्रोक्तं त्रयोविंशं तु ब्राह्मणम् ।
वैष्णवं तु चतुर्विंशमेता अक्षरदेवताः ॥६९॥

५ जप्यकालेषु संचिन्त्य विष्णुसायुज्यतां व्रजेत् ।
एतस्यां ज्ञातमात्रायां वाङ्मयं विदितं भवेत् ॥७०॥

उपासितं भवेत् सर्वं विश्वं भुवनसप्तकम् ।
अज्ञात्वा चैव गायत्रीं ब्राह्मण्यात् परिहीयते ॥७१॥

अपवादेन संयुक्तो भवेच्छ्रुतिनिदर्शनात् ।
१० येषां द्विजानां सावित्री नानूच्येत यथाविधि ॥७२॥

तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ।
एतया चापि संयुक्तः काले च क्रियया स्वया ॥७३॥

विप्रक्षत्रियविड्योनिर्गृहाणां पतिसाधुषु ॥(?)
ओंकारो व्याहृतीः सप्त सावित्री प्राणसंयमः ॥७४॥

१५ संध्या न वन्दिता येन ब्राह्मण्यं तस्य वै कुतः ॥७५॥

सावित्रीं यो न जानाति वृथा तस्य परिश्रमः ॥
गायत्रीमात्रसंतुष्टो वरं विप्रः सुयन्त्रितः ॥७६॥

---

२. एकविंशं कुबेरस्य बृप. ४.२४
३. रौद्रं द्वादशकं आ.
१०.११. मनु. ११. १९१
१६. सावित्रीमात्रसारोपि मनु. २.११८

१ नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी ।
सारभूतास्तु वेदानां गुह्योपनिषदः स्मृताः ॥७७॥

ताभ्यः सारं तु गायत्री गायत्र्या व्याहृतित्रयम् ।
व्याहृतिभ्यस्तथोंकारस्त्रिवृद्ब्रह्म स उच्यते ॥७८॥

५ त्रिवृद्ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
मधुवत् संभृतं ह्येतद्विप्रासो विष्णुना स्वयम् ॥७९॥

गायत्रीं चैव वेदांश्च तुलया समतोलयत् ।
एकतश्चतुरो वेदान् गायत्रीमेकतः समा (म्) ॥८०॥

एषा हि त्रिपदा देवी सर्वब्रह्ममयी शुभा ।
१० तपसा महता दृष्टा विश्वामित्रेण धीमता ॥८१॥

संवत्सरं वा षण्मासान् यो जपेद्विधिवद्द्विजः ।
सोऽचिरात्सर्वकामांश्च प्राप्नुयान्नात्र संशयः ॥८२॥

गायत्रीनिर्णयश्लोकाः सप्ततिर्नव एव च ।

इति श्रीबृहद्योगियाज्ञवल्क्ये गायत्रीनिर्णयो (नाम)
१५ ॥ चतुर्थोऽध्यायः ॥

---

१. नायन्त्रितस्त्रिवेदोऽपि मनु. ११८
१४. गायत्रीनिर्णयश्चतुर्थोऽध्यायः आ.;
योगयाज्ञवल्क्य गायत्र्या निर्णयं नाम तृतीयप्रकरणम् ॥*॥ इ.

## पञ्चमोऽध्यायः

न्यासं तु संप्रवक्ष्यामि ओंकारादि यथायथम् ।
येन विन्यस्तमात्रेण ब्रह्मीभवति ब्राह्मणः ॥१॥

अकारं विन्यसेन्नाभ्यां सत्त्वरूपं निरञ्जनम् ।
५ उकारं हृदये तद्वद्राजसं तद्गुणं स्मृतम् ॥२॥

मकारं मूर्ध्नि विन्यस्य तमोमात्रं तृतीयकम् ।
ब्रह्मरूपं तदात्मानं ध्यायेद्विगतकल्मषम् ॥३॥

कुर्याद्व्याहृतिभिर्न्यासं वक्ष्यमाणक्रमेण तु ।
पूर्वमेव तु याः प्रोक्ता भूराद्यास्ते समासतः ॥४॥

१० भूर्लोकं पादयोर्मध्ये भुवर्लोकं तु जानुनोः ।
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ॥५॥

जनलोकं कण्ठदेशे मुखबिम्बे तपस्तथा ।
भ्रुवोर्ललाटसंधौ तु सत्यलोकं प्रतिष्ठितम् ।
हिरण्मये परे कोशे ध्येयः परमनिष्कलः ॥६॥

१५ तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।
गायत्रीं विन्यसेत् पश्चाच्छरीरे चात्मनो बुधः ॥७॥

चतुर्विंशतिस्थानेषु पादो(द) मूर्धान्तमस्तकम् ।
पादाङ्गुष्ठे तथा गुल्फे जङ्घयोर्जानुनोस्तथा ॥८॥

---

२. अयमध्यायः इ पुस्तके नास्ति ।
४. अकारं नाभिदेशे तु उकारं हृदि विन्यसेत् आर. २४
६. मकारं मूर्ध्नि विन्यस्येदेष न्यासो विमुक्तिदः आर. २४
१७. पादोमूर्धान्त आ.

१ ऊरुभ्यां गुह्यवृषणे कटौ नाभ्यां तथैव च ॥
जठरे स्तने च हृदये कण्ठे वक्त्रे च तालुनि ॥९॥
श्रोत्रे चक्षुर्भ्रुवोर्मध्ये ललाटे पूर्वके मुखे ।
याम्यपश्चिमके चैव उत्तरे च यथाक्रमम् ॥१०॥
५ अन्तिमं मूर्ध्नि विन्यस्य परब्रह्म स उच्यते ।
गुह्ये चक्षुषि वक्त्रे च समीके (?) हृदये तथा ॥११॥
पद्भ्यां नाभ्यां ललाटे तु नवमं मूर्ध्नि विन्यसेत् ।
इदं न्यासचतुष्कं तु सकृन्न्यस्याति यो द्विजः ॥१२॥
सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमृच्छति ।
१० इति श्रीवृद्धयोगियाज्ञवल्क्ये ओंकारगायत्रीन्यासो
(नाम)पञ्चमोऽध्यायः ॥५॥

---

१०. '''गायत्रीन्यासः पंचमोध्यायः आ.

## षष्ठोऽध्यायः

अतःपरं प्रवक्ष्यामि संध्योपासननिर्णयम् ।
अहोरात्रकृतात् पापात् यामुपास्य विमुच्यते ॥१॥
संध्या येन न विज्ञाता संध्या येनानुपासिता।
५ जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥२॥
नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥३॥
सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत सोऽन्यजन्मगतोऽपि सन् ॥४॥
१० ओंकारो व्याहृतीः सप्त गायत्री सशिरास्तथा ।
आपोहिष्ठा ऋचस्तिस्रः सूक्तं चैवाघमर्षणम् ॥५॥

---

२. वीमि. २५६, स्मृच. १३४
३....कृतैः पापर्याम्... प्रमुच्यते वीमि. २५६, स्मृच. १३४
४. संध्या नैवाप्युपासिता वीमि. २५६; ज्ञात्वा नैव (संध्या येन, न च संध्या) ह्युपासिता वृप. २.८५
५. श्वा चोपजायते वीमि. २५६; गोभिलवचनमिति वै. ३११
६. वीमि. २५६; न तिष्ठति तु यः पूर्वां... माम् मनु. २.१०३
७. वीमि. २५६, मनु. २.१०३
८. वीमि. २५६; सर्वावस्थासु स्मृच. १३४
९. अन्यजन्मगतोपि सः स्मृच. १३४; अन्य...पि सन् वीमि. २५६
१०. प्रणवो व्याहृतीः स्मृत. ३८६
११. स्मृत. ३८६

१ आदित्यरक्षणार्थं तु सायंप्रातर्दिने दिने ।
सृष्टं स्वयंभुवा पूर्वं ब्राह्मणानां मुखे स्थितम् ॥६॥

सातत्यं कर्म विप्राणामहोरात्राद्यसो(घनो)दनम् ।
पापं तु जायते तस्मादनार्तस्तन्न चोत्सृजेत् ॥७॥

५ अनार्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसंमितः ।
प्रायश्चित्तीभवेद्विप्रो लोके भवति निन्दितः ॥८॥

यावन्तोस्यां पृथिव्यां तु विकर्मस्था द्विजातयः ।
तेषां तु पावनार्थाय संध्या सृष्टा स्वयंभुवा ॥९॥

या संध्या सा तु गायत्री त्रिधा भूत्वा प्रतिष्ठिता ।
१० संध्या ह्युपासिता येन तेन विष्णुरुपासितः ॥१०॥

ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।
संध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ तु सा समा ॥११॥

त्रिंशत्कोट्यस्तु विख्याता मंदेहा नाम राक्षसाः ।
प्रद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥१२॥

---

१. स्मृत. ३८६
२. ब्रह्मणस्तन् मुखं स्मृतम् स्मृत. ३८६
५. वीमि. २५६; याज्ञवल्क्यवचनमिति पमा. १. १. ३०१
६. भवेच्चैव वीमि. २५६, स्मृच. १३९
७. वीमि. २५६;...न्तोस्या विकर्मस्थाः पृथिव्यां बालिशा द्विजाः आ.
८. वीमि. २५६; सृष्टा संध्या स्मृच. १३४; स्वयंभुवः आ.
११. कुल्लू. २.१०१, हे. ३.२. पृ. ६९६
१२ अप. ४९; मासे वृद्धौ आ; ह्रासे वृद्धौ समा स्मृता वीमि. २६१; च सा स्मृता कुल्लू. २०१
१३. वीमि. २५६, स्मृच. १३४, वृप. २.७४, वै. ३१२
१४. वीमि. २५६, वै. ३१२; प्राद्रवन्ति स्मृच. १३४



१ अहन्यहनि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषां च युद्धमासीत् सुदारुणम् ॥१३॥

ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
संध्येति ( संध्यां तु ) समुपासीनाः प्रक्षिपन्ति महज्जलम् ॥१४॥

५ ओंकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥१५॥

एतद्विदित्वा यो विप्र उपास्ते संश्रितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैश्च मुच्यते ॥१६॥

पूर्वा संध्या तु गायत्री सावित्री मध्यमा स्मृता ।
१० या भवेत् पश्चिमा संध्या सा विज्ञेया सरस्वती ॥१७॥

रक्ता भवति गायत्री सावित्री श्वेतवर्णिका ।

---

१. वीमि. २५६, स्मृच. १३४, वै. ३१२
२. वीमि.२५६, वै. ३१२; अतः सूर्यस्य तेषां तु स्मृच. १३४
३. वृप. २.८१, वीमि. २५६, स्मृच. १३४, वै. ३१२
४. यत् संध्यां ते उपासन्तः क्षिपन्त्येतज्जलं महत् वृप. २.८१; संध्येति तमुपासीना वीमि. २५६; संध्यां तु समुपासीना यत् क्षिपन्ति स्मृच. १३४; संधौ संध्यामुपासीना यत् क्षिपन्त्यन्वहं जलम् वै. ३१२
५. वीमि. २५६, वृप. २.८२, गायत्र्या च समन्वितम् आ.; ब्रह्मव्याहृतिसंयुक्तं स्मृच. १३४, वै. ३१२
६. वीमि २५७; दह्येरन् (दह्यन्ते) तेन ते दैत्या वृप. २.८२; दह्याति आ.; वज्रभूतेन स्मृच. १३४; तेनादह्यन्त वै. ३१२
७. यः संध्यामुपास्ते संशितव्रतः स्मृच. १३४, वै. ३१२
८. सर्वपापैः प्रमुच्यते वीमि. २५७, स्मृच. १३४, वै. ३१२
९. स्मृच. १३५, अप. ४९; च गायत्री स्मृत. ३९०
१०. स्मृच. १३५, अप. ४९; विज्ञेया सा स्मृत. ३९०
११. अप. ४९; श्वेता भवति सावित्री गायत्री रक्तवर्णिका वीमि. २५३; श्वेता भवति गायत्री सावित्री शुभ्रवर्णिका स्मृच. १४३; गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका वै. ३१२

१ कृष्णा सरस्वती ज्ञेया संध्यास्तिस्र उदाहृताः ॥१८॥
त्रयाणां चैव देवानां संगमस्तूभयोर्भवेत् ।
मध्यमायां च संध्यायां सर्वदेवसमागमः ॥१९॥
संधिः सर्वसुराणां च तेन संध्या उदाहृता ।
५ गरीयसी हि भूतानां तस्मात्त्यैत्री (त्रैती) तनुर्हि सा॥२०॥
संधिते तु परे सूक्ष्मे निर्गुणे गुणबोधिनी ।
प्रधानपुरुषातीते सा संध्या संधिरुच्यते ॥२१॥
अनूदकी तु या संध्या लेपस्नेहविवर्जिता ।
संधिनी सर्वभूतानां शोधिनी भवनाशिनी ॥२२॥
१० हृद्याकाशगता सूक्ष्मा आदित्यरश्मिरेखया ।
सोमसूर्याग्निसंस्कृत्या अण्डं भित्त्वा विनिर्गता ॥२३॥
बद्धमेतं सुषुम्णायां दीर्घघण्टानिनादवत् ।
ईश्वरं मनसा ध्यायेदेषा संध्या अनूदकी ॥२४॥
संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ ।
१५ संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ॥२५॥
उभे संध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः ।

---

१. संध्यात्रयमुदाहृतम् वीमि. २५३, स्मृच. १४३, अप. ५०; सरस्वती तथा कृष्णा उपास्या वर्णभेदतः वै. ३१२
२. ...... भयो भवेत् आ.
५. तस्मात्त्यैत्री तनुर्हि सा आ.
१४. हे. ३.१.८८२, पमा. १.१.२६०, २८९, वै. ३१०; नोदिते रवौ स्मृच. १३४; नास्तंगे अप. ५०; सायं संध्यामुपासीत नास्तगे हे. ३.२. पृ. ६९५
१५. वीमि. २५४, २५९, अप.५०
१६. हे. ३.१. पृ. ७०४; संध्ये च कर्तव्ये ब्राह्मणैश्च गृहेष्वपि अप. ५०; ब्राह्मणैश्च गृहाश्रितैः वीमि. १५८



१ तिसृष्वपि च संध्यासु स्नातव्यं ब्रह्मवादिना ॥२६॥
कालदोषादसामर्थ्यान्नशक्नोति यदा ह्यसौ ।
तदाऽऽज्ञातो ऋषिभ्यस्तु मन्त्रैर्दृष्टैस्तु मार्जनम् ॥२७॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणः ।
५ एतैश्चतुर्भिर्मन्त्रैस्तु मन्त्रस्नानमुदाहृतम् ॥२८॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
अघमर्षणसूक्तेन अश्वमेधावभृत्समम् ॥२९॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत् ।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं स्मृतम् ॥३०॥
१० एतच्छ्रुत्वा तु वचनं याज्ञवल्क्यस्य धीमतः ।
ऋषयः संयतात्मानः पृच्छन्ति स्नाननिर्णयम् ॥३१॥
इति श्रीबृहद्योगियाज्ञवल्क्ये संध्यानिर्णयो (नाम)
षष्ठोऽध्यायः ॥६॥

---

१. हे. ३.२. पृ. ७०४: स्नातव्यं च तपस्विना वीमि. २५८
२. स्मृच. १३४, वीमि. १९४
३. स्मृच. १३४; तदा ज्ञ त्वा...दृष्टं हि मार्जनम् आ.; तदा ज्ञात्वा ऋषिभिस्तु-मन्त्रैर्दृष्टं तु मार्जनम् वीमि. १९४
४. ...घमर्पणम् वै. २९१; हे. ३.१. पृ. ८५३
५. एतैश्च पञ्चभिर्मन्त्रैर्मन्त्र ...वै. २९१;...र्मन्त्रैर्मन्त्र...वीमि. १९४, हे. ३. १. पृ. ८५३
६. वीमि. १९४, याज्ञ. १.२२
७. वीमि. १९४
८. वीमि. १९४; प्रायश्चित्ते समुत्पन्ने स्नानमेव विधीयते स्मृच. १२१; स्नानमेवं तु करयेत् हे. ३.१. पृ. ८५३
९. स्मृच. १२१; मार्जनं भवेत् वीमि. १९४, हे. ३.१. पृ.८५३
१०. ..त्वाथ वचनं..स्यं वै तदा वीमि. २२१;..स्य वै तदा हे. ३.१.पृ.८८७
११. संशितात्मानः हे. ३.१. पृ. ८८७; संशितात्मानः पृच्छन्ति स्नाननिश्चयम् वीमि. २२१
१२. संध्यानिर्णयः षष्ठोऽध्यायः आ.; समाप्तिद्योतकं किमपि नास्ति इ. पुस्तके।

## सप्तमोऽध्यायः

स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुराऽनघ ।
तदाचक्ष्व विशेषेण स्नानस्य तु विधिं प्रभो ॥ १ ॥
तांस्तु प्रोवाच प्रीतात्मा याज्ञवल्क्यो महामुनिः ।
५ शृणुध्वं वक्ष्यते स्नानं सर्वपापहरं शुभम् ॥ २ ॥
मृद्गोमयतिलान् दर्भान् पुष्पाणि सुरभीणि च ।
आहरेत् स्नानकाले तु स्नानार्थी प्रयतः शुचिः ॥ ३ ॥
गत्वोदकान्तं विधिवत् स्थापयेत् तत् पृथक् क्षितौ ।

---

२. वीमि. २२१, याज्ञ. वीमि. २७०, वीमि. परि. १६, हे. ३.१. पृ. ८८७
३. वीमि. २२१, हे. ३.१. पृ. ८८७
४. प्रीत्यात्मा आ.; तान् प्रत्युवाच... ल्क्योऽमितद्युतिः वीमि. २२१, हे. ३.१. पृ. ८८७
५. .. पापप्रणाशनम् वीमि. २२१; हे. ३.१. पृ. ८८७; शृणुध्व वक्ष्य... सर्वपापप्रणाशनम् अप. १२८
६. ग. २१४; मृतिलान् गोमयं दर्भान् वीमि. २२१, स्मृच. १८२; हे. ३.१. पृ. ८७८; मृत्तिका गोमयं दर्भान् अप.१२८; मृत्तिका गोमयं दर्भान् वै. २५९; याज्ञवल्क्यवचनमिति आर. २५
७. स्नानार्थं स्मृच. १८२, हे. ३.१. पृ. ८७८, वै. २५९; आहरेद्यावदर्थानि स्नानार्थं अप. १२८; आहरेद्यावदर्थानि स्नानार्थे आर. २९
८. पमा. १.१. २७२, स्मृच. १२८, वै. २५९; ...न्तं विविक्तं स्थाप्य चैतान् पृथक् आ. ; ... न्तं विविक्तमास्थाप्यैतत् पृथक् वीमि. २२१; स्थापयेत्तु पृथक् अप. १२८; गन्धोदकान्तं विविक्ते स्थापयेत्तान्यक्षितौ ग. २१४.२; क्रमात् स्थाप्यं पृथक् क्षितौ हे. ३.१. पृ. ८७८



१ त्रिधा कृत्वा मृदं तां तु गोमयं च विचक्षणः ॥४॥
उत्तमाधममध्यानामङ्गानां क्षालनं च तैः ।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृदसंकरः ॥५॥
प्रभूते विद्यमाने तु उदके सुमनोहरे ।
५ नाल्पोदके द्विजः स्नायान्नदीश्चो(चो)त्सृज्य कृत्रिमे ॥६॥
मृद्भिरद्भिश्च चरणौ प्रक्षाल्याचम्य वै शुचिः ।
उरुं हीति ऋचा तोयमुपस्थाय प्रदक्षिणम् ॥७॥
आवर्तयेत्तदुदकं ये ते शतमिति त्र्यृचा ।
१० सुमित्रिया इत्यञ्जलिमुद्धरेद्दैवतं स्मरन् ॥८॥

---

१. ग. १३३. ३, वीमि. २२१, स्मृच. १. १८२, अप. १२८, हे. ३. १. पृ. ८८९; मृदं तां च आ.; त्रिधा कुर्यान्मृदं तां वै. २५९ गोमयं तद्विचक्षणः पमा. १.१. पृ २७२
२. अधमोत्तममध्यानामङ्गानां क्षालनं तु वै वीमि. २२१; अधमोत्तम... नं तु तैः पमा. १.१. पृ. २७३, स्मृच.१८२, अप. १२८, हे. ३.१. पृ. ८८९, प्राम. १६
३. पमा. १.१. पृ. २७२, वीमि. १६७, हे. ३.१. पृ. ८८९; क्षालनं मृदसंकरः स्मृच. १८२, अप. १२८
२.-३. अधमोत्तममध्यानामङ्गानां मृदसंकरः वै. २५९
४. हे.३.१. पृ. ८७३, वीमि. १६७, स्मृच. १२९, अप. २३५; स्नानविधिराचार्येणान्यत्र दर्शितः- 'विद्यमाने प्रभूते हि नाल्पे स्नानं समाचरेत् इति' विश्वरूपः १.२२: विद्यमानेऽपि, वृद्धयाज्ञवल्क्यवचनमिति आर. २८
५. वीमि. १६७, अप. २३५; नदीं चो ...स्मृच.१२९,हे.३.१. पृ.८७३: वृद्धयाज्ञवल्क्यवचनमिति आर. २८
६. स्मृच. १८२; अद्भिर्मृद्भिश्च वीमि. १६७, हे. ३.१. पृ. ८८९; अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याथ करौ तथा ग. २१४.३
७. वीमि. २२१: उरुं राजेत्यृचा तोय......ग. २१४. ४; हीति त्र्यृचा हे. ३.१. पृ. ८९२
८. वीमि. २२१, ग. २१४.५;......मिति त्र्यृचा हे. ३.१. पृ. ८९२
९. वीमि. २२१;.....त्रिया न इत्यञ्जलि.. हे. ३.१. पृ. ८९२

१ दुर्मित्रिया इति द्वि(द्वे)ष्यं ध्यायंश्चापः प्रसेचयेत् ।
मृद्भिरद्भिश्च गात्राणि क्रमशस्त्ववनेजयेत् ॥९॥
एकया च शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
कटिबस्त्यूरुजङ्घे च चरणौ च त्रिभिस्त्रिभिः ॥१०॥
५ प्रक्षाल्य हस्तौ चाचम्य नमस्कृत्य जलं ततः ।
यत्किंचिदिति मन्त्रेण नमस्येत् प्रयताञ्जलिः ॥११॥
यत्र स्थाने च यत्तीर्थं नदी पुण्यतमा च या ।
तां ध्यायन् मनसाऽऽवाह्य अन्यत्रेष्टं विचिन्तयेत् ॥१२॥
गङ्गादिपुण्यतीर्थानि कुत्रिमादिषु संस्मरेत् ।
१० उदुत्यमिति प्रदिशेज्जलं तु प्राङ्मुखं शुचिः ॥१३॥

---

१. त्रिया न इति द्वेष्यं हे. ३.१. पृ. ८९२; द्वेष्यं वीमि. २२१; प्रसंचरेत् आ.
२. आद्भिरद्भिश्च गात्राणि क्रमशस्त्ववने जपेत् हे. ३.१. पृ.८९४; 'शीर्षा. द्यानाभि सर्वाणि स्मरन् विष्णुनाममयम्' इत्यधिकम्, योगिवचनमिति प्राम-१६, स्वायंभुवं वचनमिति विश्वरूपः ३.३२;
३. ... या तु वीमि. २२१, कूर्मपुराणे इति स्मृच.१८३
४. हे.३.१. पृ. ८९४; वीमि. २२१; कटिं बास्तिमुरुजङ्घे चरणौ तु त्रिभिस्त्रिभिः आ.; पादौ जङ्घे कटिं चैव पूर्वं मृद्भिस्त्रिभिस्त्रिभिः ग. २१४.८; पादौ जङ्घकटिश्चैव पूर्वं मृद्भिस्त्रिभिस्त्रिभिः इ.
५. ग.२१४.८; जलं तु तत् वीमि. २२२;तथैव हस्तावाचम्य हे. ३.१. पृ. ८९४
६. यत्किंचेति च वीमि.२२२; ...त्किंचेदमिति मन्त्रेण हे.३.१.पृ. ८९४ योगिवचनमिति प्रा .१६
७. वीमि.२२२; च यत्तीर्थे आ.
८. वीमि.२२२
९. वीमि.२२२, स्मृच.१८३
१०. उदुत्तमामिति विशेत्तज्जलं वीमि.२२२, हे. ३.१. पृ.८९६



१ येन देवाः पवित्रेति कुर्यादालम्भनं त्रिभिः ।
महाव्याहृतिभिः पश्चादाचम्य प्रयतोऽपि सन् ॥१४॥
आलभेद्वै मृदाङ्गानि इदं विष्णुरिति त्र्यृचा ।
भास्कराभिमुखो मज्जेदापो अस्मानिति त्र्यृचा ॥१५॥
५ ततो निघृष्य गात्राणि निमज्योन्मज्य वै शनैः ।
गोमयेन तु यः स्नायादापादतलमस्तकम् ॥१६॥
स स्नातः सर्वतीर्थेषु पूतः संवत्सरं भवेत् ।
आचम्य गोमयेनातो मानस्तोक्या समालभेत् ॥१७॥
ततोऽभिषिञ्चेन्मन्त्रैस्तु वारुणैश्च यथाक्रमम् ।
१० इमं मे वरुणेत्यृग्भ्यां त्वन्नः सत्वन्न इत्यपि ॥१८॥
इदमापउदुत्तमामित्येतन्मुञ्चन्त्ववभृथेति च ।
अभिषिञ्च्य तयाऽऽत्मानं निमज्याचम्य वै पुनः ॥१९॥

---

१. वीमि.२२२, हे. ६.१. पृ. ८२६
२. दाचमेत् प्र... हे. ३.१. पृ. ८९६; एतदर्धमादर्शपुस्तके गङ्गादि... संस्मरेत् (१३पृ.) इत्यर्धानन्तरं दृश्यते । वीमि. क्रमं प्रमाणीकृत्यास्माभिस्तदत्र निवेशितामिति विभावनीयम् ।
३. आलभेत्तु...रिति ऋचा वीमि. २२२; आलभेत मृदा, योगीवचनमिति प्राम.१६, हे. ३.१. पृ. ८९६; मार्जयेद्वै मृदाङ्गानि ग.२१४.१०
४. हे. ३.१. पृ ८९६, ग. २१४.१०; निति ऋचा वीमि.२२२
५. ततोवमृश्य.... वै पुनः वीमि. २२२; ततोवघृष्य पात्राणि ग. २१४.२; ततोवघृष्य ...वै पुनः हे. ३.१. पृ.८९७
८. गोमयेनापि वीमि.२२२, हे. ३.१. पृ. ८९७; गोमयेन विलिप्याथ मानस्तोक इत्यृचा ग.२१४. १२
९. ततोभिषिच्य मन्त्रैस्तु वारुणैस्तु वीमि.२२२; वारुणैस्तु ग. २१४. १४; वारुणैश्च हे. ३.१. पृ.८९९
१०. वीमि. २२२; वरुण इति द्वाभ्यां आ.;वरुणे द्वाभ्यां त्वन्नः ग. २१४. १४
११. ...मिति मुञ्चन्त्ववभृथेति च वीमि. २२२, हे. ३.१. पृ. ८९९
१२. अभिषिच्य तदात्मानं हे. ३.१. पृ. ८९९, वीमि. २२२; तथात्मानं ग. २१४.१७

१ दर्भैश्च पावयेन्मन्त्रैरब्लिङ्गैः पावनैः शुभैः ।
आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीः ॥२०॥
देवीराप इति द्वाभ्यामापो देवा इति त्र्यृचा ।
द्रुपदादिव इत्यृचा शन्नोदेवीरपां रसम् ॥२१॥
५ आपो देवीति नवभिः पावमानीभिरेव च ।
पुनन्तु मायि(पि)तर इति पावमानीः प्रयोजयेत् ॥२२॥
चित्पतिर्मेति च शनैः गाव्यात्मानं समाहितः ।
हिरण्यवर्णा इति च पावमान्यस्तथाऽपराः ॥२३॥
तरत्समाः शुद्धवत्यः पवित्राणि च शक्तितः ।
१० वारुणीश्च ऋचः सूक्तं शक्तितश्च प्रयोजयेत् ॥२४॥
जलमध्यास्थितो विप्रः शुद्धभावो हरिं स्मरेत् ।
ओंकारेण व्याहृतिभिर्गायत्र्या च समाहितः ॥२५॥

---

१. दर्भैस्तु वीमि. २२२; दर्भैस्तु...रब्लिङ्गैः पाव ... हे.३.१.पृ. ९००
दर्भेण पावयेन्मन्त्रैरालिङ्गैः पावनैरिमैः ग. २१४. १७; ...रब्लिलैः
पावनैः आ.
२. वीमि. २२२, ग. २१४.१८, हे. ३.१. पृ ९००
३. ग. २१४.१८; इति ऋचा वीमि. २२२;...मापो देवीरिति त्यृचा हे. ३.१
पृ. ९००
४. हे. ३.१. पृ. ९००, वीमि. २२२; .... दिव इति च ग. २१४. १९
५. आपोदेवीः पावमान्यः पुनन्त्वाद्या ऋचो नव वीमि. २२२, हे. ३. १.
पृ. ९००; आपो देवो पावमान्यः पुनन्त्वाद्या ऋचो नव ग. २१४.१९
७. हे. ३.१. पृ. ९००, वीमि. २२२; ग्लाव्यात्मानं ग. २१४.२०
८. ग. २१४.२०; हे. ३.१. पृ. ९००
९. ग. २१४.२१; शुद्धवतीः पवित्राण्यपि वीमि. २२२, हे. ३.१. पृ. ९००
१०. वारुण्या बहवः पुण्याः शक्तितः संप्रयोजयेत् ग.२१४.२१; शक्तितः संप्रयोज-
येत् वीमि. २२२; वारुण्यश्च ऋचः सूक्तं शक्तितः संप्रोजयेत् हे. ३.१. पृ. ९००
११. जलमध्ये हे. ३.१. पृ. ९००; जलमध्यं वीमि. २२२; ...मध्ये स्थितो...
भावे हरिं वै. २६१
१२. हे. ३. १. पृ. ९००; ...त्र्या च समान्वितः ग. २१४.२२



१ आद्यावन्ते च कुर्वीत अभिषेके यथाक्रमम् ।
अपां मध्ये स्थितस्यैवं मार्जनं तु विधीयते ॥२६॥
अन्तर्जले जपेन्मन्त्रं त्रिः कृत्वस्त्वघमर्षणम् ।
द्रुपदां वा त्रिरभ्यस्येदायं गौरिति वा जपेत् ॥२७॥
५ हंसः शुचिषदिति च त्रिरावर्त्य जपेदथ ।
अन्यानि चैव सूक्तानि स्मार्तदृष्टान्यनुस्मरेत् ॥२८॥
सव्याहृतिं सप्रणवां गायत्रीं त्रिर्जपेदथ ।
आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥२९॥
विष्णोरायतनं ह्यापः स एवाप्य(प्यो) निरुच्यते।
१० तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत् ॥३०॥
नरादापः प्रसूता वै तेन नारा इति स्मृताः।
ता एवास्यायनं ह्यापस्तस्मान्नारायणः स्मृतः ॥३१॥

---

१. अभिषेकं ग. २१४.२२, वीमि. २२३, हे. ३.१. पृ. ९००
२. जलमध्यस्थितस्यैव ग. २१४. २३; अपां मध्ये वीमि. २२३; अपां मध्य-
स्थितस्यैवं हे. ३.१. पृ . ९००
३. हे. ३. १. पृ.९०१; त्रिः कृत्वात्वघमर्षणम् वीमि. २२३; जपेन्मत्रं त्रिः
कृत्वात्वघमर्षणम् ग. २१४. २३
४. गौरिति वा त्र्यृचम् वीमि. २२३, हे. ३.१. पृ. ९०१; द्रुपदाद्यात्रिरा-
वर्तदयं गौरिति च त्र्यृचम् ग. २१४.२४
५. ...षदित्युक्तं त्रिरावृत्य जपेदथ वीमि. २२३; ...षदित्यृचं त्रिरावर्त्य जपेदथ
हे. ३.१. पृ. ९०१
६. हे. ३.१. पृ.९०१, वीमि. २२३; अन्यांश्चैव तु मन्त्रान् वा स्मृतिदृष्टान्
समाहितः ग. २१४.२४
७. हे. ३.१. पृ. ९०१, वीमि. २२३, गायत्रीं वा जपेद्बुधः ग. २१४.२५
८. ग. २१४.२५, वीमि. २२३, हे. ३.१. पृ.९०१
९. त्वापः स एवाप्पाति रुच्यते ग. २१४.२६; स ह्यपां पतिरुच्यते वीमि.
२२३, हे. ३. १. पृ. ९०१
१०. वीमि. २२३, ग. २१६.२६; श्वेतास्तस्मात्तं हे. ३.१. पृ. ९०१
११. वीमि. २२३, हे. ३. १. पृ. ९०१
१२. वीमि. २२३, हे. ३.१. पृ. ९०१

१ यं (यो) हि व्रतानां वेदानां यमस्य नियमस्य च ।
भोक्तारं यज्ञतपासां ध्यायिनां ध्येयमेव च ॥३२॥
ध्यायेन्नारायणं देवं नित्यं स्नानादिकर्मसु ।
प्रायश्चित्त्यपि सर्वस्माद्दुष्कृतान् मुच्यते पुमान् ॥३३॥
५ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥३४॥
तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः ।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥३५॥
पादेन पाणिना वापि यष्ट्या वस्त्रेण वोदकम् ।
१० न हन्यान्नैव रुन्धीत न च प्रक्षोभयेद्द्विजः ॥३६॥

---

१. वीमि. २२३; यो हि मतानां हे. ३. १. पृ. ९०१
२. वीमि .२२३; ध्यायिनां ध्यानमेव च हे. ३. १. पृ. ९०१
३. स्मृत. श्रा. १९७; ध्यायन्नारा ... वीमि. २२३; ... णं नित्यं स्नानादिषु च कर्मसु हे. ३. १. पृ. ९०१
४. स्मृत. श्रा. १९७, हे. ३. १. पृ. ९०२; प्रायश्चित्तेषु सर्वेषु वीमि. २२३.
५. स्मृत. श्रा. १९७, हे. ३.१. पृ. ९०२; अज्ञानाद्यदि वा मोहात् प्रच्य- ... वीमि. ७४, २२३
६. स्मृत. श्रा. १९७, वीमि. २२३; ... दिति स्मृतिः हे. व्रत. ३८
७. स्मृत. श्रा. १९७, वीमि. २२३, हे. ३. १. पृ. ९०२, निमज्याप्सु पुनः पुनः ग. २१४. २७; तद्विष्णो इति मन्त्रेण, याज्ञवल्क्यवचनामिति वै. २६१; तद्विष्णोरिति मन्त्रोयं स्मर्तव्यं सर्वकर्मसु वै. ३४१
८. स्मृत. श्रा. १९७, वीमि. २२३, हे. ३. १. पृ. ९०२., ग. २१४. २७ याज्ञवल्क्यवचनामिति वै. २६१; ह्येषा प्रोक्तेदं विष्णुरित्यपि वै. ३४१
९. वस्त्रेण चोदकम् हे. ३. १. पृ. ८६४; पाणिना चापि यद्वा वस्त्रेण (शस्त्रेण) चोदकम् वीमि. २२३, १६८
१०. .. नैव वादेच्च न च प्रक्षोभयेद्बुधः हे. ३.१. पृ. ८६४, वीमि. १६८, २२३



१ न कुर्यात् कस्यचित् पीडां मनोवाक्कायकर्मभिः ।
आचरन्नाऽभिषेकं च कर्माण्यन्यानि नाचरेत् ॥३७॥
स्नात्वैवं वाससी धौते अक्लिष्टे परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥३८॥
५ अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत् ॥३९॥
यावद्देवान् ऋषींश्चैव पितॄंश्चापि न तर्पयेत् ।

---

१. ... पीडां कर्मणा मनसा गिरा वीमि. १२८,२२३, हे. ३.१. पृ. ८६४.
२. आचरेन्नाभिषेकं तु कर्माण्यन्यानि वाऽऽचरन् वीमि. १६८,२२४; आचरेन्नाभिषेकं तु कर्माण्यन्यानि वाचरेत् हे. ३.१. पृ. ८६४; आचरन्नाभिषेकं तु... नि चाचरन् वीमि. परि. ९२
३. ... धौते अच्छिन्ने ग .२१४. ३०, पमा. १.१. पृ. २६३, वीमि. २४७, हे. ३. १. पृ. ९०९, स्मृच. ११३; धूते अक्लिन्ने मद. २७४; धौते अक्लिन्ने आर. ३२
४. हे. ३. १. पृ. ९०९, पमा. १.१. पृ. २६३, वीमि. २४७, स्मृच. ११३; हस्तौ प्रक्षालयेत्तथा आर. ३२; प्रक्षाल्य च मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तदा ग. २१४.३०; ... ल्योरु मृदा चाद्भिर्हस्तौ प्रक्षाल्य वै पुनः आ.; मृदा वाद्भिर्हस्तौ प्रक्षालयेत्तथा मद. २७४
५. हे. ३.१. पृ. ९१५, वीमि.२४४, अप. १३४; शाणक्षौमादिकानि च आ.; जिनानि च मद. २७५, आर. ३३; अलाभे धौत..वै. २५२, पमा.१.१. २६५.
६. वीमि. २४४; पट्टं च विवासा आ.; येन तद्भवेत् अप. १३४; द्विवासास्तु यथा भवेत् नृप. २.१६१; येन वा भवेत् आर. ३३;...पट्टं च विवासास्तु न वै भवेत् वै. २५२; कुतपं यज्ञसूत्रं वा द्विवासा येन वा भवेत् मद. २७५; कुतपं योगपट्टं च विवासास्तु न वै भवेत् पमा. १.१.२६५
७. पमा. १. १. पृ. २६३; पितॄंश्चैव वीमि. २४२, हे. ३.१.पृ. ९०७; पितॄंश्चापि स्मृच.१९७,वै. ३८२; पितॄन् वै यो न तर्पयेत् वै. २४९

१ तावन्नपीडयेद्वस्त्रं येन स्नातो न चोदके ॥४०॥
निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ॥४१॥
न क्लिन्नवासाः स्थलगो जपादीन्याचरेद्बुधः ।
५ वस्त्रनिष्पीडनं प्रेताः परिचार्य पिबन्ति हि ॥४२॥
व्रतादृते नार्द्रवासा नैकवासाः समाचरेत्
न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत् ॥४३॥
वस्त्रनिष्पीडनं तोयं स्नातस्योच्छिष्टभागिनः ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥४४॥

---

१. वीमि. २४२; येन स्नातो भवेद्विजः स्मृच. १९७; येन स्नातो भवेन्नरः वै. २४९; यो हि स्नातो भवेत् द्विजः वै. ३८३, पमा. १. १. पृ. ३६३
२. हे. ३.१. पृ.९०७, वीमि. २४३; यो विप्रः स्नानवस्त्रमतर्प्य च पमा. १. १. पृ. ३६३; ... यान्ति ये वस्त्रं स्नानवस्त्रमतर्पिते स्मृच. १९७; स्नानवस्त्रमबुद्धिमान् बृप. २. १०७; स्नानवस्त्रं च स्मृत. ३७९; .. याति यो वस्त्रमकृत्वा पितृतर्पणम् वै. ३८३
३. बृप. २. १०७, स्मृत. ३७९; यान्ति देवैः स.. हे. ३. १. पृ. ९०७; महर्षिभिः वीमि. २४३; पितरो यान्ति शापं दत्वा सुदारुणम् स्मृच.१९७, वै. ३८३, पमा. १.१. पृ. ३६३; पितरो यान्ति स्नानवस्त्रे निपीडिते वै. २४९; एतदर्धानन्तरमाधिकम् 'तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम्' वै. २४९
४. जपादीनाचरेद्बुधः वीमि. ३२३, अप. ४८, व्यासवचनमिति वै. ३४१,
५. वस्त्रनिश्चोतनं प्रेताः परिवार्य वीमि. ३२३.
६. वीमि. ३२३, अप. ४८, सं. ७०; नार्द्रवासा आचरेन्नैकवाससा व्यासवचनमिति वै. ३४१
७. वीमि. ३२३, अप. ४८, वै. ३४१
८. निष्पीडितं तोयं श्राद्धे तूच्छिष्ट(भोजनम्)भोजिनाम् वै. ३८३; निष्पीडितम् तोयं श्राद्धे चोच्छिष्टभाजिनाम्, स्मृत्यंतरवचनामिति स्मृच . १९७
९. वै. ३८३.



१ पूर्वं निष्पीडनं केचित् प्राग्देवपितृतर्पणात् ।
स्नानवस्त्रस्य नेच्छन्ति तस्मात् पूर्वं न पीडयेत्॥४५॥
अन्नप्रकरवत्तस्य अपसव्येन पीडयेत् ।
पीडयित्वा ततः पश्चाज्जपं कुर्यात् सुविस्तरम् ॥४६॥
५ उदके चोदकस्थस्तु स्थलस्थः स्थलके शुचिः ।
पादौ स्थाप्योभयत्रैव आचम्योभयतः शुचिः ॥४७॥
यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन्।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥४८॥
आचान्तः पुनराचामेन्मन्त्रवत् स्नानभोजने ।
१० द्रुपदां वा त्रिरावर्त्य तथाचैवाघमर्षणम् ॥४९॥
गायत्रीं वा त्रिरावर्त्य महाव्याहृतिभिस्तथा ।
सोपांशु प्रणवेनापि आपः पीता अघापहाः ॥५०॥
आचम्य प्राव्य चात्मानं निरायाम्य
(त्रिरायम्य) शनैरसून् ।
१५ अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पान्वितं जलम् ॥५१॥
प्रक्षिप्योद्वयमुदुत्यं चित्रं तच्चक्षुरित्यपि ।

---

२. तस्मादूर्ध्वं निपीडयेत् हे. ३.१. पृ. ९४५
७. – ८. वीमि. २३८; विष्णुवचनामिति स्मृच. १९२
९. वीमि. २४०, ३१७; ... न्मन्त्रं वा स्ना.. आ.; आचान्ते पुनराचामेन्मन्त्रेण स्नानभोजने ग. २१४. ३१
१०. वीमि. २४०, ३१७, ग. २१४. ३१; त्रिरावर्त्या आ.
१२. वीमि. २४०, ३१७; सोपांशु .... पीत्वा अघापहाः आ.
१३. प्लाव्य चात्मानं त्रिराचम्य ग. २१४. ३२; प्लाव्य आत्मानं त्रिरायम्य इ.
१५. ... दित्यं मूर्ध्नि पुष्पान्विताञ्जलिः ग. २१४.३२; ततोपतिष्ठे .. मूर्ध्वपुष्पान्विताञ्जलिः इ.
१६. प्रक्षिप्योदकमुद्धूय उदुत्यं चित्रमित्यपि ग. २१४. ३३

१ हंसःशुचिषदेतानि शुभानि पावनानि च ॥५२॥
एतज्जपेदूर्ध्वबाहुः सूर्यमीक्षन् समाहितः ।
गायत्र्या तु यथाशक्ति चोपस्थाय दिवाकरम् ॥५३॥
विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य तु ।
५ शिवसंकल्पेन तथा मण्डलब्राह्मणेन तु ॥५४॥
दिवा कीर्त्यैस्तथान्यैश्च सौरैर्मन्त्रैश्च शक्तितः ।
जपयज्ञोऽपि कर्तव्यः सर्ववेदप्रणीतकैः ॥५५॥
पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदा तथा ।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये ॥५६॥
१० प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखस्तु कृताञ्जलिः॥५७॥

१. तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ग. २१४. ३३
३. गायत्र्या च यथाशक्त्या उपस्थाय मद. ७६
४. मद.७६, ग. २१४. ३५; पुरुषस्य च वीमि. ३१८.
५. ... ब्राह्मणेन वा वीमि. ३१८; ब्राह्मणेन च मद. ७६;... कल्पेन च तथा मण्डलब्राह्मणेन च ग. २१४. ३५
६. दिवाकीर्त्यैश्च सौरैश्च मन्त्रैरन्यैश्च शक्तितः वीमि. ३१८; दिवाकीर्त्या तथान्यैश्च ग. २१५. ३६
७. जपयज्ञो हि कर्तव्यः स्मृच. १८७, वीमि. ३१८;... यज्ञस्तु ग. २१४. ३६; सर्ववेदपवित्रकैः इ.
८. वीमि. ३१८, मद. ७६: ... पनिषदां, याज्ञवल्क्यवचनमिति वै. ३४८.
९. वीमि. ३१८; जप्यास्तु जपसिद्धये स्मृच. १८७, याज्ञवल्क्यवचनमिति वै. ३४८; अध्यात्मविद्यां विधिवज्जपेद्वा जपसिद्धये ग. २१४.३७
१०. पमा. १. १. पृ. ३४६, वीमि. ३१८, वै. ३६९; नमस्कृत्वा ... स्मृच. १८९
११. वीमि. ३१८; दर्भेषु दर्भपाणिभ्यां संहताभ्यां कृताञ्जलिः पमा. १.१. पृ. ३४६, वै. ३६९, स्मृच. १८९



१ स्वाध्यायं च यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।
आदावारभ्य वेदं तु स्नात्वोपर्युपरि क्रमात् ॥५८॥
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः ।
आकेशादानखाग्राच्च परं संतप्यते तपः ॥५९॥
५ यस्तु सम्यक् द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ।
ऋचं यजुर्वा साम वा गाथां ह्यद्यामथापि वा ॥६०॥
ततः संतर्पयेद्देवानृषीन् पितृगणांस्तथा ।
संवत्सरं सावयवं देवीरप्सरसस्तथा ॥६१॥
ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
१० तथा देवानुगान् नागान् सागरानपि पर्वतान् ॥६२॥

१. वीमि. ३१८, स्मृच. १८९, वै. ३६९; तु यथाशक्ति पमा. १. १. पृ. ३४६; ब्रह्मयज्ञार्थमेव च आ.
२. वीमि. ३१८, मद. २८१; वेदे तु स्नात्वोप... आ.; वेदं तु स्नातो... स्मृच. १९० अत्र 'यदि वा ते ऽन्वहं शक्त्या सुसंध्येया इति स्मृतिः' इत्यधिकम् वीमि. ३१८
३ स्मृच. १९०, मद. २८१
४. ... ग्रात् स परमं तप्यते तपः वीमि. ३८१
५. यः मुख्यपि द्विजो वा तैः स्वाध्यायं वीमि. ३१८
७. हे. ३. १. पृ. ९३३; ऋषीन् मर्त्यान् पितृंस्तथा वीमि. २६५
८. वीमि. २६५, पमा. १. १. ३५६, स्मृच. १९४, वै. ३८७, मद. २९१; देवीरप्सरसस्तथा वै. ३७८
९. पमा. १. १. पृ. ३५६, स्मृच १९४, वीमि. ३६६, हे. ३. १. पृ. ९३३; एतच्छ्लोकार्धमादर्शपुस्तके नास्ति ।
१०. देवानुगान्नागान् सागरान् पर्वतांस्तथा वीमि. ३६६; देवासुरान्नागान् सागरान् पर्वतानपि स्मृच. १९४; देवानुगान्नागान् सागरान् पर्वतांस्तथा अप. १३८; वेदान् छन्दांसि देवांश्च ऋषींश्चैव तपोधनान् पमा. १. १. पृ. ३५६; वै. ३७८; वीमि. ३६७; हे. ३. १. पृ. ९३३; मद. २९१

१ सरितः सरसीश्चैव यक्षान् रक्षांसि मानुषान् ।
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ॥६३॥
वनस्पतीनोषधींश्च भूतग्रामं चतुर्विधम् ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥६४॥
५ प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥६५॥
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्तिताः ॥६६॥
ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत् ।
१० निवीती कायतीर्थेन मनुष्यान् सनकादिकान् ॥६७॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।

---

१. स्मृच. १९४; सारितोथ मनुष्यांश्च यक्षरक्षांसि चैव हि वीमि. ३६६; सारितोथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि हे. ३. १. पृ. ९३३, मद. २९१, वै. ३७८, पमा. १. १. पृ. ३५६
२. वीमि. ३६६, पमा. १. १. पृ. ३५६, स्मृच. १९४, वै. ३७८, मद. २९१, अप. १३८
३. स्मृच. १९४, पमा. १. १. पृ. ३५६, हे. ३. १. पृ. ९३३; वनस्पतींश्चोष... अप. १३८, वीमि. ३६६, मद. २९१; भूतग्रामांश्चतुर्विधान् वै. ३७८
४. ...ङ्गिरसः आ. मरीचिमत्र्यङ्गि ... पद्मपुराणवचनमिति अप. १३८
५. पद्मपुराणवचनमिति अप. १३८
६. कार्ष्णाजिनिवचनमिति अप. १३८, मद. २९२
७. कार्ष्णाजिनिवचनमिति मद. २९२; वोढः अप. १३८
८. कार्ष्णाजिनिवचनमिति मद. २९२, अप. १३८; सुताः पञ्च आ.
९. वीमि. ३५२
१०. वीमि. ३५२; निवीनिकानृतीर्थेन आ.
११. वीमि. ३४५, ३५१, ३६६, स्मृच. १९४, अप. १३७, हे. ३.१. पृ. ९३७, सव्येन नाम्ना गोत्रेण वाप्यथ, कूर्मपुराणे इति मद. २८४



१ तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥६८॥
आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान् शुचीन् ।
प्रागग्रेषु सुरान् सर्वान् दक्षिणाग्रेषु वै पितॄन् ॥६९॥
नासनस्तु (आसीनस्तु) स्वधाकारैर्गोत्रेण तु समाहितः ।
५ दक्षिणे पितृतीर्थेन पितॄणां तृप्तिमावहन् ॥७०॥
सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ॥७१॥
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः ।
प्राचीनावीत्युदकं च प्रसिञ्चेद्वै तिलान्वितम् ॥७२॥
१० यद्युद्धृतं निषिञ्चेत्तु तिलान् संमिश्रयेज्जले ।
अतोन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥७३॥
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ।

---

१. वीमि. ३४५, ३५१, ३६६, स्मृच. १९४; अप. १३७, हे. ३.१. पृ. ९३७, सव्येन नाम्ना गोत्रेण वाप्यथ, कूर्मपुराणे इति मद. २८४
२. वीमि. ३३९, ३३६; कुशाञ्छुभान् स्मृच. १९२, मद. २८६, हे. ३. १. पृ. ९१८, ९३५; पूर्वं तन्मन्त्रै... कुशाञ्छुभान् । गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः वै. श्रा. ७३७
३. हे. ३. १. पृ. ९१८, अप. १३७, मद. २८६; सुरान् सम्यक् स्मृच. १९२ दक्षिणाग्रे च वै वीमि. ३३९, ३६६
६. वीमि. ३६६, हे. ३. १. पृ. ९३५, अप. १३७, वै. ३७८ पमा. १. १. पृ. २५६; जानु तथोत्थाप्य आ.
७. वै. ३७८, पमा. १.१. २५६, हे. ३. १. पृ. ९३५
८. ...तर्पयेद्द्विजः वै. ३७८, पमा. १.१. पृ. २५७
१०. पमा. १. १. २५४, स्मृत. ३७६, हे. ३. १. पृ. ९२३; यद्युद्धृतेन सिञ्चेत्तु मद. २८६; यद्युद्धृतान्निषिञ्चेत्तु....येज्जये वै. ३७७
११. पमा. १.१. ३५४, स्मृत. ३७६, ३७७, हे. ३.१. पृ. ९३५; अन्यथा वामहस्तेन ततस्तर्पणमाचरेत् मद. २८६
१२. मद. २९३, हे. ३. १. पृ. ९३६

१ दाक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥७४॥
पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दाक्षिणे ।
ब्राह्मं दैवं तथा पैत्रं प्राजापत्यं तु सौमिकम् ॥७५॥
अङ्गुष्ठमूले ब्राह्मं तु दैवं ह्यङ्गुलमूर्धनि ।
५ प्राजापत्यं तु मूले स्यात् मध्ये सौम्यं प्रतिष्ठितम् ॥७६॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्तितम् ।
तिलानामप्यभावे तु सुवर्णं रजतान्वितम् ॥७७॥
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाग्यतः ।
कव्यवाडनलः सोमो यमश्चैवार्यमा तथा ॥७८॥
१० अग्निष्वात्तान् सोमपाश्च तथा बर्हिषदः पितॄन् ।
यदिस्याज्जीवत्पितृक एतान् दिव्यान् पितॄंस्तथा ॥७९॥

---

१. हे. ३. १. पृ. ९३६; पितृतीर्थेन संयतः मद. २९३
३. तथा पित्र्यं हे. ३.१. पृ. ९३०
४. वीमि. परि. ७६; त्वङ्गुलिमूर्धनि अप. ३९
५. वीमि. परि. ७६, अप. ३९; मूलेषु मध्ये आ., हे. ३.१. पृ. ९३०
६. हे. ३.१. पृ. ९३०
७. वीमि. ३६६, स्मृत. ३७७, स्मृच. १९२, याज्ञवल्क्यवचनामिति हे. ३.१. पृ. ९२०; सुवर्णरजतान्वितम् मद. २९०
८. मद. २९०; मन्त्रेण वा पुनः स्मृच. १९२; मन्त्रेण वाप्यथ वीमि. ३६६; दर्भैस्तोयैर्न चान्यथा स्मृत. ३७७
९. स्मृच. १९६, अप. १३९, पमा. १. १. ३५९; कव्यवाडनलं सोमं यममर्यमणं तथा आ., हे. ३. १. पृ. ९३६; कव्यवाहोऽनलः सोमो, वै. ३७९
१०. हे. ३. १. पृ. ९३६; आग्निष्वात्ताः बर्हिषदोऽपि च स्मृच. १९६, अप. १३९, मद. २९४, पमा. १. १. पृ. ३५९
११. हे. ३. १. पृ. ९३६; जीवपितृक एतान् विद्यात्ततः पितॄन् स्मृच. १९६; ... विद्यात्तदा पितॄन् मद. २९४, अप. १३९; यादिस्याज्जीवपितृकस्तान् विद्याच्च तथा पितॄन् वै. ३७९, पमा. १. १. ३५९



१ तेभ्यो वापि पिता दद्यात् कामतस्तांस्तु तर्पयेत् ।
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ॥८०॥
वसून् रुद्रांस्तथादित्यान् नमस्कारस्वधान्वितान् ।
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ॥८१॥
५ आचार्यांश्च पितॄंश्चैव पितृप्रभृतिनामतः ।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्धनम् ॥८२॥
उदीरतामङ्गिरस आयं त्विरयूर्जमित्यपि ।
पितृभ्यश्चापि ये चेह मधुवाता इति त्र्यृचम् ॥८३॥
पिबन् ध्यायन् प्रसिञ्चेद्वै जपन् मन्त्रान् यथाक्रमम् ।
१० तृप्यध्वमिति च त्रिर्वै दद्याच्च सलिलाञ्जलिम् ॥८४॥

---

१. दद्यात् तेभ्य एव प्रदापयेत् वीमि. ३६६; दद्यात्तेभ्यो वापि प्रदापयेत् स्मृच. १९६; दद्यात्तेभ्यो वापि प्रदापयेत् अप. १३९, मद. २९४, हे. ३. १. पृ. ९३६; दद्यात्तेभ्यो वापि प्रदीयते पमा. १. १. ३५९
२. हे. ३.१. पृ. ९३६, वीमि. ३६६; एतांश्चैव प्रमीतांश्च प्रमीत... स्मृच. १९६, अप. १३९, मद. २९४, वै. ३७९; एतांश्चैव प्रमीतांश्चाप्रमीतपितृको द्विजः पमा. १. १. पृ. ३६०
३. वीमि. ३६६, अप. १३९, हे. ३. १. पृ. ९३६; नमस्कारसमन्वितान् पमा. १. १. ३५७
४. वीमि. ३६६, हे. ३. १. पृ. ९३६
५. वीमि. ३६६; ... प्रभृति नामवित् आ.; पितृन् स्वांश्च पितृ... हे. ३.१. पृ. ९३६
६. हे. ३. १. पृ. ९२०; प्रीतिवर्धनैः वीमि. ३६६, हे. ३. १. पृ. ९४०
७ वीमि. ३६६; उदीरता स्मृच. १९५, हे. ३.१. पृ. ९४०; उदीरिता.. आ.
८. पितृभ्य इति ये चेह वीमि. ३६६, स्मृच. १९५, हे. ३.१. पृ. ९४०। इति त्र्यृचा आ.
९. स्मृच. १९५; मन्त्रानिमान् क्रमात् हे. ३. १. पृ. ९४०
१०. वीमि. ३६७; दद्यात् प्राञ्जलिरानतः आ.; ततः प्राञ्जलिरानतः हे. ३. १. पृ. ९४०; ... मिति च तृप्यैं ततः प्राञ्जलिना ततः स्मृच. १९५

१ नमो व इति जप्त्वा वै ततो मातामहान् सखीन् ।
तर्पयेदानृशंस्यार्थं धर्मं परममास्थितः ॥८५॥
मातॄर्मातृष्वसॄः श्वश्रूर्मातुलानि(नीं) पितृष्वसॄः ।
दुहितॄं(तॄ)श्च स्वसॄं(सॄ)श्चैव ज्ञात्यृत्विक्छिष्यबान्धवान्
॥८६॥
५ नामतस्तु स्वधाकारैस्तर्पयेदनुपूर्वशः ।
सवर्णेभ्यो जलं देयं नासवर्णे कथंचन ॥८७॥
पूर्वजांश्च पितॄंस्तर्प्य ततोन्येषां प्रदीयते ।
नास्तिक्यभावाद्यश्चापि न तर्पयति वै पितॄन् ॥८८॥
१० पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः ।
तस्मात् स्नानं प्रशंसन्ति श्रद्धयाऽश्रद्धयापि वा ॥८९॥

---

१. मातामहानपि स्मृच. १९५, हे. ३. १. पृ. ९४२
२. परममाश्रिताः हे. ३. १. पृ. ९४२
३. माता मातृष्वसा चैव मातुलानी पितृष्वसा वीमि. ३६७
४. दुहिता च स्वसा चैव शिष्यर्त्विग् ज्ञातिबान्धवाः वीमि. ३६७
५. ...... कौरैस्तर्प्यास्युरनुपूर्वशः वीमि. ३६७; नामगोत्रस्वधाकारै... स्मृत. ३७८, हे. ३. १. पृ. ९२०; गोत्रनामस्वधा...... मद. २९३
६. स्मृत. ३७९; सवर्गेभ्यो स्मृत. १९५; ...... जलं दद्यान्ना ...... वीमि. ३६७; नासवर्णेभ्य एव च । गोत्रनाम स्वधाकारै......वै. ३७८, पमा. १. १. पृ. ३५८, हे. ३. १. पृ. ९३६
७. संतर्प्य स्वान् पितॄन् पूर्वं पश्चादन्यांश्च तर्पयेत् वीमि. ३६७
८. वीमि. ३३६, स्मृच. १९६, वै. ३८०; ... वै सुतः वीमि. ३६७, स्मृत. ३७९;... भावाद्यस्तांस्तु पमा. १.१. पृ. ३६२; वासिष्ठवचनमिति वै. २४७
९. वीमि. ३३६, स्मृच. १९६; देहरुधिरं स्मृत. ३७९, पमा. १.१. पृ. ३६२, वासिष्ठवचनामिति वै. २४७, ३८०



१ विदित्वैव सदा स्नायात् विधिनानेन नित्यशः ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥९०॥
तृप्त्यर्थं वै पितॄणां तु आत्मनः श्रेय इच्छता
यदेव तर्पयेदद्भिः पितॄन् स्नात्वा द्विजोत्तमः ॥९१॥
५ तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ।
निष्पीड्य स्नानवस्त्रं तु आचम्य प्रयतः शुचिः ॥९२॥
सुराणामर्चनं कुर्याद्ब्रह्मादीनाममत्सरः ।
ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ॥९३॥
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वान् देवान् समाहितः ।
१० ध्यात्वा प्रणवपूर्वं तु दैवतं तु समाहितः ॥९४॥
नमस्कारेण पुष्पाणि विन्यसेच्च पृथक् पृथक् ।
आवाहनादिकं कर्म यन्न प्रोक्तं मया त्विह ॥९५॥
तत् सर्वं प्रणवेनैव कर्तव्यं चक्रपाणिनः ॥९६॥

---

२. वीमि. ४३२
३. वीमि. ४३२
४. तर्पयत्यद्भिः मनु. ३. २८३; मनुशातातपयोगयाज्ञवल्क्यवचनामिति हे. ३. १. पृ. ९४६
५. मनुशातातपयोगयाज्ञवल्क्यवचनामिति हे. ३. १. पृ. ९४६; कृत्स्न. माप्नोति मनु. ३. २८३
६. वीमि. ३७७, हे. ३. १. पृ. ९४५, स्मृच. १९७; प्रक्षाल्य प्रयतः अप. १३९
७. देवानामर्चनं वीमि. ३७७, स्मृच. १९७, अप. १३९, हे. ३. १. पृ. ९४५, वै. ३८४; देवानां सवनं मद. २९९; ...... दीनाममत्सरो ग २१३. १३७
८. वीमि. ३७७, ग. २१३. १३७; ब्रह्मवैष्णव आ. विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः अप. १३९
९. वीमि. ३७७, वै. ३८४; सर्वदेवान्नमस्य च ग. २१३. १३७
१०. स्नात्वा प्रणव ...... देवतां तु स्मृत. ३९८
११. विन्यसेत्तु स्मृत. ३९८, ग. २१३.१३८

१ दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥९७॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः।
तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥९८॥
५ विष्णुं वा भास्करं वापि सर्वदेव समर्चयेत्।
सावित्र्यै च हविर्दद्यात् यथाशक्ति समाहितः ॥९९॥
ततोवलोकयेदर्कं हंसः शुचिषदित्यृचा।
स याति ब्रह्मसदनं स्नात्वेक्षेद्योनया रविम् ॥१००॥
अदृश्रमस्येति मन्त्रैरुपस्थाय दिवाकरम्।
१० संवर्चसेति पाणिभ्यां तोयेनाविमृजेन्मुखम् ॥१०१॥
स्वयंभूरित्युपस्थाय सूर्यस्येति प्रदक्षिणा।
समावृत्य नमस्कुर्याद्दिशो दिग्देवता अपि।
ब्रह्मणेग्नये पृथिव्यै औषधिभ्यस्तथैव च ॥१०२॥
वाचि(चे च) वाचस्पतये विष्णवे महते तथा॥
१५ एताभ्यो देवताभ्यश्च नमस्कारादि वै जलम् ॥१०३॥
दत्त्वा नमस्येत् क्रमशस्त्वन्ते वै सर्वकर्मणाम्।
नमोऽद्भ्यो नमोऽपांपतये वरुणाय नमो नमः ॥१०४॥

---

१. अप. १४०, आर. ७२, ग. २१३.१३९
२. अप. १४०, मद. २९९, आर. ७२, ग. २१३.१३९
३. मद. २९९, अप. १३९
५. सर्वदेवमयं विष्णुं भास्करं चाप्यथार्चयेत् ग. २१३. १३८
७. इदमर्धं 'एवं संपूज्य (१०६ पू.) इत्यर्धानन्तरम् दृश्यते स्मृच. २००, अप. १४१, वै. ३९०
८. स्मृच. २००, अप. १४१



१ इत्युक्त्वापो नमस्कृत्यावनौ देवांश्च नामतः।
इदमापः प्रवहता(त) धाम्नो धाम्नस्तथैव च ॥१०५॥
एवं संपूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम्।
विमोचनार्थं तीर्थस्य आप्यायस्वेति वै जपेत् ॥१०६॥
५ देवा गातुविद इति कृत्वा जप्यनिवेदनम्।
प्रक्षाल्य तीर्थदेशं तु गत्वा स्वं कर्म आचरेत् ॥१०७॥
उपस्थानादिर्यस्तासां मन्त्रवान् कीर्तितो विधिः।
निवेदनान्तं तत् स्नानमित्याहुर्ब्रह्मवादिनः ॥१०८॥
परकीयनिपानेषु यदि स्नायात् कदाचन।
१० सप्त पिण्डान् समुद्धृत्य ततः स्नानं समाचरेत् ॥१०९॥
अनुद्धृत्य तु यः स्नायात् परकीयजलाशये।
वृथा भवति तत् स्नानं कर्तुः पापेन लिप्यते ॥११०॥
स्रवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन्।
आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः ॥१११॥

---

३. वै. ३९०, स्मृच. २००, अप. १४१, एतदनन्तरं 'ततोवलोकयेत्' (१०० पू.) इत्यर्धं स्मृच., अप., वै.
६. कर्ममाचरेत् आ.
७.-८. वीमि. ३४०, हे. ३.१. पृ. ८८३; अयं श्लोकः आदर्शपुस्तके नास्ति
९. वै. २५६, हे. ३. १. पृ. ८७६
१०. सप्त पिण्डांस्तदोद्धृत्य ततः हे. ३. १. पृ. ८७६, हेमाद्रौ योगियाज्ञवल्क्य इति वीमि. १७४, वै. २५६; सप्त पिण्डांस्ततोद्धृत्य ततः स्मृच. १२८
११. स्मृत. ३६७, हेमाद्रिलिखितं शौनकवचनमिति वीमि. १७३
१२. वृथा तस्य भवेत् स्नानं वै. २५६
१३.-१४. वीमि. ३७९; उशनावचनामिति हे. ३. १. पृ. ६२७

१ तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे ।
ततः कर्माणि कुर्वीत नित्यं वै यानि कानि चित् ॥११२॥
पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना ।
न तेनाभ्युक्षणं कुर्याद्वस्त्रनिष्पीडनेन च ॥११३॥
५ सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्तितम् ।
तदलाभे मृदं पात्रं स्रवते यत्न धारितम् ॥११४॥
स्नात्वैवं सर्वभूतानि तर्पयेद्योन्वहं द्विजः ।
स गच्छति परं स्थानं तेजोमूर्तिरनामयम् ॥११५॥
स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
१० तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥११६॥
प्रातरुत्थाय यो विप्रः संध्यास्नायी सदा भवेत् ।
सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥११७॥
उषस्युपासि यत् स्नानं संध्यास्वनुदिते रवौ ।

१. वोमि. ३७२; द्रव्यादि आ.
२. वीमि. ३७९;...कान्विाचित् आ.; उशनावचनामिति हे. ३.१.पृ. ६२४
३. वीमि. ३७२; पात्राद्विरहितं, यमवचनामिति हे. ३. १. पृ. ६२६
४. न तेन प्रोक्षणं वोमि. ३७९, यमवचनामिति हे. ३. १. पृ. ६२६
५. स्मृच. १५४, वै. ३५३; सौवर्णं राजतं पात्रं स्रवते यत्न धारितम् आ.; सुखं पात्रं वीमि. ३७९
६. स्मृच. १५४; तदलाभे स्मृतं पात्रं......यत्न धारितम् वै. ३५३
९. स्मृच. १०९, वै. २४५, हे. ३. १. पृ. ८५०
१०. वै. २४५; हे. ३. १. पृ. ८५०, श्रीपुण्यायुष्यवर्धनम् स्मृच. १०९. इतःपरं 'याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति' इत्याधिकं वै; २४५; 'याम्यं......दुःखं नित्यस्नायी' स्मृच. १०९
११. प्रातःस्नायी भवेत् सदा, दक्षवचनमिति वीमि. १३८;प्रातःस्नायी सदा भवेत् वृप. २. ९३
१२. संध्यायामुदिते रवौ, दक्षवचनमिति हे. ३. १. पृ. ८४९



१ प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥११८॥
त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥११९॥
वृथा उष्णोदकस्नानं वृथा जप्यमवैदिकम् ।
५ वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥१२०॥
अस्नात्वा नाचरेत् कर्म जपहोमादि किंचन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥१२१॥
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां गच्छन्त्युत्तमान्यधमैः सह ॥१२२॥

१. वृप. २.९२: विष्णुवचनमिति हे. ३. १. पृ. ८४९
२-३. हे. ३.१. पृ. ८४९, वीमि. १८३, स्मृच. १२९, अप.२ ३५, वै. २५५, आर. २७
४. वृथा तूष्णो... वीमि. १७६, १८३, हे. ३. २. पृ. ७१२, वै. २५८; वृथा ह्युष्णो... वृप. २.१०८; याज्ञवल्क्यवचनमिति स्मृच. १२८. पमा. १.१. पृ. २८७
५. वै. २५८, वृथा चाश्रोत्रिये वृप. २. १०९, स्मृच. १२८, हे. ३.१. पृ. ८७६
६. दक्षवचनमिति वीमि. १३८, वृप. २.९४; विष्णुवचनमिति हे. ३.१- पृ. ८५०
७....दुत्थितो द्विजः दक्ष. २. ११; दक्षवचनमिति वीमि. १३८; विष्णुवचनमिति हे. ३. १. पृ. ८५०
८. विष्णोर्वचनामिति हे. ३.१. पृ. ८५०; चेन्द्रियाणि क्षरन्ति (स्रवन्ति) च दक्ष. २.८; क्लिद्यन्ते हि सुप्तानि इन्द्रियाणि क्षरन्ति च वृप. २.९४; क्लिद्यन्ति च सुप्तस्य, दक्षवचनामिति वीमि. १३७
९. दक्ष. २.८; समतां यान्ति अधमान्युत्तमैः सह आ.; अधमान्युत्तमानि च, दक्षवचनमिति वीमि. १३८; उत्तमान्यधमैः सह वृप. २.९५; उत्तमान्यधमानि च, विष्णुवचनमिति हे. ३.१. पृ. ८५०

१ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥१२३॥
तस्मात् प्रातः प्रशंसन्ति स्नानमेव हि नित्यशः ।
कालमालम्ब्य कर्तव्यं मध्यमे सवने तथा ॥१२४॥
५ सवनत्रयं तु यः कुर्यात् स्नानमेव हि नित्यशः ।
स गच्छति परं स्थानं ब्रह्मणः सदनं द्विजः ॥१२५॥
मनःप्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःस्वप्नहृत् स्नानमोजःप्रह्लादनं तथा ॥१२६॥
स्नानहोमजपातिथ्यं नाचरेच्छक्तिमांस्तु यः ।
१० वृथा हि जीवितं तस्य परलोकात् स हीयते ॥१२७॥
स्नानं दानं जपो ध्यानं पितृदेवार्चनं तथा ।
पावनानि मनुष्याणां दुष्कृतस्येह कर्मणः ॥१२८॥
जपस्येह विधिं वक्ष्ये यथा कार्यं विधानतः ।
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।

---

१. दक्ष. २.७; दक्षवचनमिति वीमि. १३७, ग. २१३.५४; विष्णुवचनमिति हे. ३.१. पृ. ८४९
२. स्रवत्येव...स्नानेन शुद्ध्यति बृप. २.९६; स्रवत्येव...प्रातःस्नानं विशोधनम् ग. २१३.५५; विष्णुवचनमिति हे. ३.१. पृ. ८४९
७. स्मृच. १०९, हे. ३.१. पृ. ८५०, दक्ष. २.१४, मद. २३६, ग. २१३.५५; प्रसादजनकं वै. २४५
८. दुःखशोकापहं स्नानं मानदं (मौनदं) ज्ञानदं तथा दक्ष. २.१४; शोकदुः-स्वप्नहं स्नानं मोक्षदं ह्लादनं तथा स्मृच. १०९, वै. २४५; शौचं दुःस्वप्नहृत् स्नानं मोक्षदं ह्लादनं तथा मद. २३६; शोकदुःस्वप्नहं स्नानं मोक्षदं ज्ञानदं तथा हे. ३.१. पृ. ८५०
१३. सं. ६८; यथाशक्ति समासतः आर. ४५
१४. वीमि. ३१३



१ सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥१२९॥
जप्येनैव हि संसिध्येत् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥१३०॥
न च क्रमन्न विहसन्न पार्श्वमवलोकयन् ।
५ ना(नो)पाश्रितो न जल्पंश्च न प्रावृत्य शिरस्तथा ॥१३१॥
न पदा पदमाक्रम्य न चैव हि तथा करे(रौ) ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥१३२॥
प्रच्छन्नानि च दानानि ज्ञानं च निरहङ्कृतम् ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥१३३॥

---

१. वीमि. ३१४
२. ब्रह्मसूत्रशाङ्करभाष्यम् ३.४.३८; जप्येनैव तु मनु. २.८७, वीमि. ३१४, वसिष्ठस्मृ. २६.१२, शङ्खस्मृ. १२.२८
३. वीमि. ३१४, शङ्खस्मृ. १२.२८, मनु. २.८७, वसिष्ठस्मृ. २६.१२; मन्त्रो ब्राह्मण ब्र. सू. शां. भा. ३.४.३८
४. आर. ४५; न चङ्क्रमन्न च हसन् स्मृच. १५०, वीमि. ३१४; न च क्रमन्न विह... स्मृत. ३९१; इतः प्रभृति 'न च संश्रावयन् जपेत् (७.१३२) इत्यन्तौ द्वौ श्लोकौ व्यासीयत्वेनोक्तौ स्मृच. १५०; न विकुर्वन्नापि हसन् सं. ६८
५. स्मृच. ३१९; न प्रावृतशिरास्तथा स्मृच. १५०, सं. ६९, आर. ४५; नोपाश्रितो ... न प्रावृतशिरास्तथा वीमि. ३१४
६. पादमाक्रम्य ... तथा करौ वीमि. ३१४, सं. ६९; न चैव हि तथा करौ स्मृच. १५०; पादमाक्रम्य...न वै बहिः करौ स्मृतौ स्मृत. ३९१; पादेन पादमाक्रम्य न चैव हि तथा करौ आर. ४५
७. वीमि. ३१४, स्मृच. १५०; नैवं विधं जपं कुर्यान्न च संश्रावयेज्जपन् आ. । नैवंविधं जपं कुर्यान्न च संश्रावयेज्जपम् सं. ६९, स्मृत. ३९१, आर. ४५
८-९. वीमि. ३१४; अङ्गिरावचनमिति स्मृच. १५१; इतःपरमधिकम्:-
(अग्रेऽनुवृत्तम्)

१ मानसः शान्तिकजप उपांशुः पौष्टिकः स्मृतः ।
सशब्दश्चाभिचारश्च जपस्तु त्रिविधः स्मृतः ॥१३४॥
तिष्ठंश्चेद्वीक्ष्यमाणोऽर्कमासीनः प्राङ्मुखो जपेत् ।
प्रागग्रेषु कुशेष्वेवमासीनश्चासने शुभे ।
५ नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥१३५॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥१३६॥
स्फाटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ।
अक्षमाला तु कर्तव्या प्रशस्ता ह्युत्तरोत्तरा ॥१३७॥
१० कोट्या स्यात्तु भवेद्वृद्धिरनन्ता चात्र संज्ञया ।

"उपांशुजपयुक्तस्य शं स्यात् शतगुणो भवेत्'
साहस्रो मानसः प्रोक्तो यस्मात् ध्यानमयो हि सः ।
ओष्ठस्पंदनमात्रेण यत्रोपांशु तदध्वनि ।
कृत्वा जिह्वां निर्विकल्पां चिन्तनं तद्धि मानसम्॥ "
इतः परम् तिष्ठंश्चेदित्यादि (१३५) श्लोकः वीमि. ३१४
३. स्मृच. १८५, सं. ६९; उत्तिष्ठन् वीक्ष्यमाणो स्मृत. ३९१; ... माणोर्कं जपं कुर्यात् समाहितः अप. ४७, मद. ७७ ; 'अन्यथा प्राङ्मुखः कुर्यात् वक्ष्यमाणक्रमेण तु' इत्यधिकं वीमि. ३००, अप. ४७, मद. ७७
४. प्राक्कूलेषु वीमि. ३१४; प्राक्कुशेष्वेवमासीनो दर्भनो वाससी शुभे स्मृत. ३९१
५. वीमि. ३१४, आदर्शपुस्तके इदमर्धं नास्ति ।
६-११. आरम्भयज्ञाज्जप ... अत्रिस्मृ. २.७, वासिष्ठस्मृ. २६.१०
८. अप. ४७; रुद्राक्षैः पुत्रजीव... वै. ३४२; स्फाटिकेन्द्राक्षरुद्राक्षैर्विद्रुमैर्मणि-मौक्तिकैः स्मृच. १५२; सुवर्णमणिभिः सम्यक् प्रवालैरथवाब्जैकः इत्यधिकम्, कालिकापुराणवचनमिति वीमि. ३२६
९. उत्तमाह्युत्तरोत्तरा स्मृच. १५२; ह्युत्तमाह्युत्तरोत्तरा वै. ३४२ कर्तव्या देवीप्रीतिकरी परा, कालिकापुराणवचनमिति वीमि. ३२६
१०. कोट्यादिका भवेद्वृद्धिरक्षमाला विशेषतः वीमि. ३१४



१ जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठा परा परा ॥१३८॥
अभावादक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एव हि कर्तव्य एकाग्रमनसा तथा ॥१३९॥
ध्यायेच्च मनसा मन्त्रं जिह्वौष्ठौ न विचालयेत् ।
५ न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥१४०॥
यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः ।
हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत् ॥१४१॥
जलान्ते वाग्न्यगारे वा जपेद्देवालये तथा ।
पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे ॥१४२॥
१० गृहे ह्येकगुणं प्रोक्तं नद्यां तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे दशाधिकम् ।
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च संनिधौ ।

१. तस्माच्छतपरापरा वीमि. ३१४
२. अभावेत्वक्ष...ग्रंथ्याग्रपाणिना वीमि. ३१४,३२७, अप. ४७
३. अप. ४७,...मनसैव तु वीमि. ३१४
४. मद. ७५; ध्यायेत मनसा...जिह्वोष्ठौ न च चालयेत् वीमि. ३१४, अप. ४८; ध्यायेत्तु मनसा सं. ७०; न च चालयेत् आर. ४५
५. अप. ४८, आर. ४५, सं. ७०;...च्छिरोग्रीवां मद. ७५
६. वीमि. ३१४;...विद्याधरगणाः अप. ४८
७. वीमि. ३१५; गुप्तं तु कारयेत् अप. ४८
८. देवालयेपि वा वीमि. ३१५; अग्न्यगारे जलान्ते वा जपेद्विष्ण्वालयेपि वा स्मृच. १५०; याज्ञवल्क्यवचनमिति आर. ४५
९. याज्ञ...वचनमिति आर. ४५*; द्विजक्षेत्रे स्मृच. १५०; गवां गोष्ठे पुण्यतीर्थे सिद्धक्षेत्रेऽथवा गृहे वीमि. ३१५; इदमर्धमादर्शपुस्तके नास्ति ।
१०. वीमि. ३१५; गृहेत्वेक...शङ्खवचनमिति स्मृच. १५०; इदमर्ध-मादर्शपुस्तके नास्ति ।
११. वीमि. ३१५; शङ्खवचनमिति स्मृच. १५०
१२. वीमि. ३१५; शङ्खवचनमिति स्मृच. १५०

१ सहस्रं शतकोटीनामनन्तं विष्णुसंनिधौ। ॥१४३॥
शाकयावकभैक्ष्याणि पयोमूलफलानि च।
विसशृङ्गाटशालूक(कं) हविष्यान्नानि यानि तु।
दधि सर्पिस्तथा ह्यापः प्रशस्ता ह्युत्तरोत्तरम् ॥१४४॥
५ चरवो ह्युपवासश्च भैक्ष्यं नक्तमयाचितम्।
एतान्येव व्रतान्याहुः शस्तानि जपकर्मणि ॥१४५॥
जपकाले न भाषेत व्रतहोमादिकेषु च।
एतेष्वेवावसक्तं तु यद्यागच्छेद्द्विजोत्तमः।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् ॥१४६॥
१० स्त्रीशूद्रपतितांश्चैव पाषण्डिनं रजस्वलाम्।
जपकाले न भाषेत व्रतहोमादिकेषु च॥ १४७॥
यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन।

---

१. वीमि. ३१५
३. वीमि. ३१५; विशशृङ्गाटकं चैव...यानि च आ.
४. ...स्तान्युत्तरोत्तरम् वीमि. ३१५
६. एतान्यनुव्रता ... वीमि. ३१५
७. अप. ४८; नापभाषेच्छतहोमादिके तथा वीमि. ३१५
८. ......सक्तस्तु अप. ४८; एतेष्वेवावसानस्य आ.;....ष्वेवावशक्तस्य, व्यासवचनमिति स्मृत. ३९१
९. अप. ४८; व्यासवचनमिति स्मृत. ३९१
१०. रासभं च रजस्वलाम् वीमि. ३१५; श्वशूद्र..रासभं च रज...बृ. ३१५; पाषण्डांश्च रज.. सं. ७०
११. स्नानकाले न संभाषेज्जपहोमा...सं. ७०; स्नानहोमादिकेषु च बृ. ३९
१२. पमा. १.१. पृ. २०६; वीमि. ३१६; वीमि. परि. ९२; स्मृच. १५०; याज्ञवल्क्यवचनमिति हे. दान. १०७; योगीश्वरवचनमिति आर. ५: जपादिषु कदाचन स्मृत. ३९१, वै. ३४१



१ व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥१४८॥
तूष्णीमासीत तु जपंश्चाण्डालपतितादिकान्।
दृष्ट्वा तीर्थमुपस्पृश्य भाष्य स्नात्वा पुनर्जपन् ॥१४९॥
आचम्य प्रयतो भूत्वा जपेदशुचिदर्शने।
५ सौरान् मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥१५०॥
रौद्रपित्र्यासुरान् मन्त्रान् राक्षसानाभिचारिकान्।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥१५१॥
१० एतान् व्याहृत्य रौद्रादीनस्पृष्ट्वाऽऽशौ अलं द्विजः।
ऊर्ध्वं यत् कुरुते कर्म तद्भवत्ययथायथम् ॥१५२॥
स्पर्शनाद्भिर्दूपिताभिरुद्धृताभिश्च मानवः।

---

१. पमा. १.१. पृ. २०६, वै. ३४१; जपेद्वा विष्णु...वीमि. परि. ९२; स्मरेद्वा विष्णु...वीमि. ३१६, स्मृच. १५०, स्मृत. ३९१; याज्ञवल्क्यवचनमिति हे. दान. १०७, व्रत. ३७
२. वीमि. ३१५;...मासीत च आर. ४५;...मासीततु आ.
३. वीमि. ३१५; तोयमुपस्पृश्य बृ. ३७; दृष्ट्वा तान् वायुपस्पृश्याभाष्य स्नात्वा विशुद्ध्यति आर. ४५
६. वीमि. ३१५; तेषामाभाषणं कृत्वा स्नानमेव समाचरेत्। आचम्य प्रयतो नित्यं जपेदशुचिदर्शने सं. ७०
७. वीमि. ३१५
८.-९. वीमि. ३१५; अयं श्लोकः आदर्शपुस्तके नास्ति।
१०.-११. वीमि. ३१५; इतः परं 'यदि वाग्यमलोपः स्यादि (७.१४८) त्यादि- श्लोकः आदर्शपुस्तके नास्ति।
१२. वीमि. १७८; स्वभावदूषिताद्भिश्च उद्धृताभिश्च मानवः हे. ३.२. पृ. ७१२; अशुचिस्पर्शदुष्टाभिरुद्धृताभिस्तु मानवः हे. ३.१. पृ. ८८०. स्पर्शादुष्टाभिरद्भिरुद्धृताभिस्तु आ.

१ स्नानमाचरनुष्णाभिर्न विशुद्ध्यति कर्हिचित् ॥१५३॥
अग्राह्यास्त्वग्निमा ह्यापो नद्याः प्रथमवेगगाः ।
प्रक्षोभिताश्च केनापि याश्च तीर्थाद्विनिःसृताः ॥१५४॥
अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात् ।
५ रहस्याचरितात् पापात् मुच्यते स्नानमाचरन् ॥१५५॥
प्रवर्तुमसमर्थश्चेत् जुहोतियजतिक्रियाः ।
स्नानध्यानजपैर्होमैरात्मानं शोधयेद्बुधः ॥१५६॥
यदैव कुरुते स्नानं विशुद्धेनान्तरात्मना ।
तेनैव सर्वमाप्नोति विधिं यज्ञक्रियाफलम् ॥१५७॥
१० ब्रह्मक्षत्रविशां चैव मन्त्रवत् स्नानमिष्यते ।

---

१. स्नानं समाचरेद्यस्तु न स शुद्ध्यति कर्हिचित् वीमि. १७८, हे. ३.१. पृ. ८६९; उष्णाभिराचरन् स्नानं न विशुद्ध्यति मानवः हे. ३.२. पृ. ७१२
२. ..स्त्वागता ह्यापो...प्रथमवेगिकाः हे. ३.२. पृ. ७०१; ...स्त्वाग्निमा आपो...वेगिकाः स्मृच. १३०, वीमि. १७५; अग्राह्यास्त्वक्षमा आपो ...वेगिकाः वै. २५८
३. स्मृच. १३०, वीमि. १७५; हे. ३.२. पृ. ७०१;...द्विनिर्गताः आ. विक्षोभिता वा केनापि याश्च तीर्थविनाकृताः वै. २५८
४. स्मृच. १०९, वै २४५; पापेभ्यश्च....स्मृत. ३६५, मद. २३६; पापात् पापेभ्यश्च हे. ३.१. पृ. ८५०
५. मद. २२६, स्मृच. १०९, वै. २४५; स्मृत. ३६५, हे. ३.१. पृ. ८५०; स्नानमाचरेत् आ.
६. स्मृत. ३६५, हे. ३.१. पृ. ८५०
७. जपैर्दानैरात्मान स्मृत. ३६५; जपदानैरा.. हे. ३.१. पृ. ८५०
८. यदेव कुरुते हे. ३.१. पृ. ८५०
९. विधियज्ञक्रियाफलम् हे. ३.१. पृ. ८५०
१०. ग. २१३.१४३; विष्णुवचनमिति स्मृच. १८१, वै. २५४;..विशामेव



१ तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥१५८॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दमः शमार्जवं दानं सर्वेषां धर्मसाधनम् ।
गृहीत्वा यमधनुर्वै नियमज्यातत दृढम् ।
५ संदधीत दमशरं स्वर्गलक्ष्ये प्रयत्नतः ॥१५९॥
यस्येदमायुधं नास्ति स्वर्गसाधनमुत्तमम् ।
अपि जन्मसहस्रेण न साधयति तत् परम् ॥१६०॥
एष वोऽभिहितः कृत्स्नः स्नानस्य परमो विधिः ।
गुणाश्च तस्याऽऽचरतो दोषाश्चैवानिषेवणात् ॥१६१॥
१० असामर्थ्याच्छरीरस्य कालशक्त्यव्यपेक्षया ।
मन्त्रस्नानादिकान् सप्त केचिदिच्छन्ति सूरयः ॥१६२॥
मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥१६३॥

---

स्मृत. ३६४, ५०२; नरसिंहपुराणे इति वीमि. २३२; भारते इति आर. २६
१. ग. २१३.१४४, वीमि. २३२;...मेव हि शूद्रस्य...रकं मतम् स्मृत. ३६४,५०२;...मेव हि शूद्रस्य स्त्रीणां च कुरुनन्दन, विष्णुवचनमिति स्मृच. १८१, आम. २९ शूद्रस्य स्त्रीणां च कुरुनन्दन, विष्णुवचनमिति वै. २५४; हि शूद्रस्य...कं स्मृतम् हे. ३.१. पृ. ८८४
१०. अप. १३४; कालशक्त्याद्यपेक्षया वीमि. १९४, वीमि. परि. ८१, हे. ३.१. पृ. ८५३, वै. २८९;...स्य वैषम्याद्देशकालयोः वै. ५४९
११. वै. २८९; स्नानान्येतानि तुल्यानि मंत्रादीनि यथाबलम् वै. ५४९;...न्ति सप्त वीमि. १९४, हे. ३.१. पृ. ८५३, अप. १३४; सप्त एक इच्छन्ति वीमि. परि. ८१
१२. वै. २८९, हे. ३.१. पृ. ८५३; तथाग्नेयं स्मृच. १३३, वीमि. १९५, अप. १३४, मद. २७२; मान्त्रं पार्थिवमाग्नेय वृप. २.८६
१३. स्मृच. १३३, वीमि. १९५, हे. ३.१. पृ. ८५३, अप. १३४, वृप. २.८६; गात्र स्नानं प्रकीर्तितम् आ.; मानसं चेति सप्त वै. २८९, मद. २७२; मानसं यौगिकं चेति सप्त वै. ५४९

१ आपोहिष्ठेति वै मान्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥१६४॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणं चावगाहस्तु मानसं विष्णुचिन्तनम् ॥१६५॥
५ शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु ।
कालदोषादसामर्थ्यात् सर्वं तुल्यफलं स्मृतम् ॥१६६॥
मानसं प्रणवस्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः ॥१६७॥

---

१. वीमि. १९५; मृदालम्भं तु आ.;...हिष्ठादिभिर्मान्त्रं हे. ३.१. पृ. ८५३; शंन आपस्तु वै मान्त्रं मृदालम्भं तु पार्थिवम् वृप. २.८७; मृदालम्भेन पार्थिवम् मद. २७२; आपोहीत्यादिभिर्मान्त्रं....लम्भस्तु वै. २९०;...हिष्ठादिभिर्मान्त्रं... लम्भस्तु वै. ५४९; ... हिष्ठादिभिर्मन्त्रैर्मृदाल ... अप. १३४, स्मृच. १३३, मद. २७२
२. अप. १३४, वीमि. १९५, वै. ५४९, मद. २७२, हे. ३.१. पृ. ८५३; भस्मना स्नानमाग्नेयं गवां रेणुभिरानिलम् वृप. २.८७; स्नानं केचिदिच्छन्ति सूरयः स्मृच. १३३
३. अप, १३४, हे. ३.१. पृ. ८५३, वीमि. १९५, मद. २७२; दिव्यं तत् स्नानमुच्यते वै. ५४९
४. स्मृच. १३३, अप. १३४, वै. २९०; चावगाहं तु वीमि. १९५, हे. ३.१. पृ. ८५३; चावगाह्य तु आ.; चावगाह्यं च मानसं मद. २७२; मानसं ह्यात्माचिन्ता तु यौगिकं विष्णुचिन्तनम् वै. ५४९
५. समुद्दिष्टं अप. १३४; स्नानात् क्रमेण हे. ३.१. पृ. ८५३
६. कालदेशादसामर्थ्यात् मद. २७२; कालादेशादसा... वीमि. १९५, हे. ३.१. पृ. ८५३
७. प्रवरं स्नानं अप. १३५, स्मृच. १३३, वीमि १९५, हे. ३.१. पृ. ८५३; प्रवरं प्रोक्तं सेवितं ब्रह्मवादिभिः वृ. ३१०; प्रवरं स्नानं सर्वे शंसन्ति सूरयः वै. २९०
८. हे. ३. १. पृ. ८५३; वै. २९०; यौगिकं स्नानमाख्यातं योगो विष्णुविचिन्तनम् आत्मातीर्थ...व्यासेन परिकीर्तितम् वृ. ३१२



१ योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः ।
अशक्तस्तु न कुर्याद्वै तत्रायं विधिरुच्यते ॥१६८॥
स्नानमन्त्रर्जले चैव मार्जनाचमने तथा ।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥१६९॥
५ अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
अन्यांश्च वारुणान् मन्त्रान् कामतः
संप्रयोजयेत् ॥१७०॥
यथाकालं यथादेशं ज्ञात्वा ज्ञात्वा विचक्षणः ।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः ।
वारुणानथवा मन्त्रान् कामतः संप्रयोजयेत् ॥१७१॥

---

१. अप. १३४, वीमि. १३६; य एष विस्तरः प्रोक्तः स्मृच. १८५, वै. २६३; य एव विस्तरेणोक्तः आ.; एष विस्तरतः प्रोक्तः मद. २४६, हे. ३.१. पृ. ८८४; य एष विस्तरेणोक्तः आर. ३०; य एष विस्तृतः प्रोक्तः पमा. १.१. पृ. २७६
२. असामर्थ्यान्नकुर्याच्चेत्तत्रायं वीमि. २२४, स्मृच. १८५, मद. २४६, पमा. १.१. पृ. २७६, हे. ३.१. पृ. ८८४, आर. ३०; कुर्याद्यस्त-स्यायं, याज्ञवल्क्यवचनमिति वै. २६३
३. स्मृच. १८५, अप. १३४, पमा. १.१. पृ. २७६, वै. २६३, मद. २४६, हे. ३.१. पृ. ८८४, आर. ३०;...र्जलं चैव वीमि. २२४; चमनं तथा ग. २१३.१४१
४. वीमि. २२४, स्मृच. १८५, अप. १३४, पमा. १.१. पृ. २७६, वै. २६३, मद. २४६, हे. ३.१. पृ. ८८४; आर. ३०;... मन्त्रणं यच्च...परिकल्पयेत् ग. २१३.१४२
५. अप. १३४, पमा. १.१. पृ. २७६, स्मृच. १८५, वै. २६३, मद. १४६, आर. ३१*; त्रिवारं त्वेव नित्यशः ग. २१३.१४२; इतःपरं स्नानाचरण (१७१ पू.) मित्यर्धं वीमि. २२४, वै. २६३
६. आर. ३१*; अन्यांस्तु वीमि. २२४; अन्यान् वा हे. ३. १. पृ. ८८४
७. वीमि. २२४, हे. ३.१. पृ. ८८४; दुपदिष्टं महात्मभिः पमा. १.१. पृ. २७६, अप. १३४, वै. २६३, आर. ३१*, महर्षिभिः स्मृच. १८५; महात्मनि आ.; स्नानं चरितमित्येतत् ग. २१३. १४३; ... त्येतदुपदिष्टं स्वयंभुवा मद. २४६

१ अघमर्षणसूक्तस्य ऋषिश्चैवाघमर्षणः ।
अनुष्टुप् च भवेच्छन्दो भाववृत्तं च दैवतम् ॥१७२॥
अश्वमेधावभृथके विनियोगस्तु कल्पितः ।
सर्वपापापनोदार्थं स्मृतिकारैरुदाहृतम् ॥१७३॥
५ ननु भूताण्डपिण्डस्य स्थित्युत्पत्तिलयं तथा ।
सूक्तेऽस्मिन् व्याहृतं सर्वमेतन्मन्त्रार्थमस्य वै ॥१७४॥
हत्वा लोकानपीमांस्त्रींस्त्रिः पठेदघमर्षणम् ।
यथाश्वमेधावभथमेवं तन्मनुरब्रवीत् ॥१७५॥
अहं तु परमेत्युक्तास्त्रिरह्नो ह्युपपन्नयः । (?)
१० मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम् ॥१७६॥
यथाश्वमेधः क्रतुराट् सर्वपापप्रणोदनः ।
तथाऽघमर्षणं सूक्तं सर्वपापप्रणोदनम् ॥१७७॥

---

१. आर. ४१;... ऋषिरेवा ... वीमि. २७७, वृप. २.५३, अग्नि २१६. ४४;... ऋषिः स्यादघमर्षणः स्मृत. ३८७.
२. अनुष्टुभं भवे...वृत्तश्च दैवतम् वीमि. २७७, आर. ४१; वृत्तस्तु दै... स्मृत. ३८७, अग्नि. २१६.४४
३. वीमि. २७७; सौत्रामण्यावभृतके वृप. २.५४; विनियोगः प्रकीर्तितः स्मृत. ३८७; विनियोगोस्य कल्पितः आर. ४१
४. वीमि. २७७; स्मृत. ३८७
७. स्मृत. ३८७, वै. २६१;...नपीमांस्तु त्रिः स्मृच. १८३, अपि चाप्सु निमज्जित्वा यः पठेदघ...अत्रि. २.६
८. स्मृच. १८३; अथाश्व...एवं तं मनुर...वै. २६१;...भृथस्तथैव मनु... अत्रि. २.६
११. प्रणाशनः शंख. ९.१३; सर्वपापापनोदनः मनु. ११.२६०
१२. सवपापप्रणोदनम् आ.; प्रणाशनम् शङ्ख. ९.१३; सर्वपापापनोदनम् मनु. ११.२६०



१ सिंधुद्वीपो भवेदार्षं गायत्री च्छन्द एव हि ।
आपस्तु दैवतं प्रोक्तं विनियोगस्तु मार्जने ॥१७८॥
सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम् ।
कोकिलो राजपुत्रश्च द्रुपदामार्षमुच्यते ॥१७९॥
५ अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम् ।
सौत्रामण्यवभृथके स्नाने तद्विनियोजनम् ॥१८०॥
द्रुपदा नाम सावित्री यजुर्वेदे प्रतिष्ठिता ।
अन्तर्जले त्रिरावर्त्य ब्रह्महत्यां व्यपोहति ॥१८१॥
आपः पुण्याः समादाय त्रिः पठेद्द्रुपदामृचम् ।
१० तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥१८२॥

---

१. ... द्वीपभवे ... आ.; गायत्रं छन्द उच्यते वीमि. २७७; गायत्रं छन्द एव च आर. ४१*
२. वीमि. २७७; आपश्च...विनियोगश्च मार्जने आर. ४१*
३. सर्वत्र पावनं वीमि. २७७,२८१
४. राजपुत्रस्तु वीमि. २७७; गाधिजो (गोभिलो) राजपुत्रस्तु द्रुपदायामृषि-र्भवेत् वृप. २.५२
५. वीमि. २७७; आनुष्टुभं वृप. २.५२
६. वीमि. २७७
७. नाम सा देवी स्मृच. १८३; नाम गायत्री वै. २६१; नाम यो मन्त्रो यजुर्वेदे प्रतिष्ठितः, बृहस्पतिवचनमिति सं. ५१
८. ...र्त्य मुच्यते ब्रह्महत्यया स्मृच. १८३;...र्त्य सर्वपापैः प्रमुच्यते, बृहस्पतिवचनमिति सं. ५१; त्रिरावृत्य मुच्यते ब्रह्महत्यया वै. २६१; सर्वपापहरा जप्तुर्महतोप्येनसः स्मृतम् पमा. २.१. पृ. ४२८
९. सं. ५१; अपः पाणौ समादाय स्मृच. १८३, भृगुवचनमिति हे. ३.१.पृ. ९०२; आपः पाण्योः वीमि. २८१; अपः प्राणौ वै. २६१
१०. स्मृच. १८३, सं. ५१, वै. २६१; भृगुवचनमिति हे. ३.१. पृ. ९०२

१ एवं ज्ञात्वा तु मन्त्राणां विनियोगं द्विजोत्तमाः।
संध्यां यद्वदुपासीत तथा सर्वं निबोधत ॥१८३॥
ऐशान्यभिमुखो भूत्वा शुचिः प्रयतमानसः।
आचान्तः पुनराचामेद्दतामित्यभिमन्त्र्य च ॥१८४॥
५ आन्तरं शुध्यति ह्येवमन्नपानमलीकृतम्।
त्रिरावर्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा ॥१८५॥
मार्जनं च तथा कृत्वा आपोहिष्ठेति मार्जयेत्।
सार्धामृचं तु प्रक्षिप्य ऊर्ध्वं सार्द्धामधः क्षिपेत् ॥१८६॥
अधोभागविसृष्टाभिः कलुषं याति संक्षयम्।
१० सर्वतीर्थाभिषेकश्च ऊर्ध्वं संमार्जनाद्भवेत् ॥१८७॥
अघमर्षणसूक्तेन मार्जनं कारयेत्ततः।
शन्न आपश्च द्रुपदां कामतः संप्रयोजयेत् ॥१८८॥
ओंकारपूर्वा गायत्री अब्लिङ्गान्यवर्पणम्।
ज्ञातव्यं ब्रह्म चैतद्वै पुरा दृष्टं स्वयंभुवा ॥१८९॥

१. मन्त्राणां प्रयोगं वै द्वि...वीमि. २६७, २६८,२८१
२. संध्यामुपासते यद्वद्यथावत्तान्निबोधत वीमि. २६८
३. ईशान्याभि...वीमि. २६६, २६८
५. वीमि. २६८; शुद्ध्यते...पानं मनीकृतम् आ.
६. वीमि. २६९; प्रणवव्याहृतिभिः सह आ.
८. वीमि. २६९;
९. वीमि. २६९;...भिरसुरा यान्ति सं. ४७
१०. वीमि. २६९;...भिषेकं च आ., सं. ४७
११.–१२. वीमि. २६९
१३. ...पूर्वा गायत्रीमब्लिङ्गाद्यच ...वीमि. २६९
१४. सातव्यं ब्रह्म आ.; सातत्यं ब्रह्म वीमि. २६९



१ एवं संमार्जनं कृत्वा बाह्यशुद्ध्यर्थमात्मनः।
अथाभ्यन्तरशुद्ध्यर्थं प्राणायामान् समाचरेत् ॥१९०॥

इति श्रीवृद्धयोगियाज्ञवल्क्ये स्नानतर्पणसंध्योपासन-
जपादिविधि ( निर्णयो नाम ) सप्तमोऽध्यायः ॥ ७ ॥

---

१. वीमि. २७२, स्मृच. १४१; शुद्ध्यर्थमादरात् वै. ३२३
२. स्मृच. १४१; तथाभ्यन्तर...आ., वीमि. २७२; तथाभ्यन्तर... प्राणायामं समा... वै. ३२३
४. ...जपादिविधिः सप्तमोऽध्यायः आ. अत्र इ.पुस्तके समाप्तिद्योतकं किमपि चिह्नं नास्ति।

## अष्टमोऽध्यायः

अत ऊर्द्धं प्रवक्ष्यामि प्राणायामस्य लक्षणम् ।
प्रत्याहारं तथा ध्यानं यथावदनुपूर्वशः ।
उच्यमानं निबोधध्वं संक्षेपेण द्विजोत्तमाः ॥१॥

५ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ॥२॥

गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्रायसंयमः ॥३॥

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ।
१० प्रत्योंकारसमायुक्तं तत्सवितुर्वरेणियम् ॥४॥
ओमापो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत् ॥५॥

---

५. वसिष्ठ स्मृ. २५.१३; गायत्रीं च शिरस्तथा अत्रि. १.१२; सव्याहृति मनुवचनामिति स्मृच. १४१, पमा. १.१ पृ. २९२, वै. ३२३; सव्य, हृतिकां सप्र... बौ. ४.१.२९; शंख. ७.१४, योगीश्वरवचनामिति मद: ६७; स्मृत्यन्तरवचनमिति मेधातिथिः २.७५; याज्ञवल्क्यवचनामिति वीमि. २७४

६. मनुवचनमिति स्मृच. १४१, वै. ३२३, पमा. १.१. पृ. २९२; यृ. ३१४; शंख. ७.१४; बौ. ४.१.२९; अत्रि. १.१२; योगीश्वरवचनमिति. मद. ६७; वसिष्ठवचनमिति वीमि. २७४; वासिष्ठस्मृ. २५.१३

७.-८. याज्ञ. १.२३; मनुवचनामिति स्मृच. १४१; स्मृत्यन्तरवचनमिति मेधातिथिः २.७८

९. पमा. १.१.२९२, स्मृच. १४१, स्मृत. ३८५, वै. ३२३

१०. समायुक्तस्तथा पमा. १.१. पृ. २९२; वीमि. २७२; स्मृच. १४१, वै. ३२३; स्मृत. ३८५

११. पमा. १.१. पृ. २९२; स्मृच. १४१; वै. ३२३; पश्चाच्चयोजयेत् वीमि. २७२; प्रयुज्यते बृप. २.६८; स्मृत. ३८५



१ एष मन्त्रप्रयोगास्त्रिः प्राणायामे निबोधत ।
त्रिरावर्तनयोगात्तु प्राणायामस्तु शब्दितः ॥६॥

त्रिविधं केचिदिच्छन्ति तथा च नवधा परे ।
मृदुमध्याधिमात्रत्वादेकैकं त्रिविधं भवेत् ॥७॥

५ ओंकारं व्याहृतीः सप्त गायत्री सशिरास्तथा ।
प्राणायामोऽयं मनुना वेदेषु कथितः पुरा ॥८॥

पूरकः कुम्भकश्चैव रेचकस्तदनन्तरम् ।
प्राणायामस्त्रिधा ज्ञेयः कनीयोमध्यमोत्तमः ॥९॥

पूरकः कुम्भको रेच्यः प्राणायामास्त्रिलक्षणः ।
१० (कन्यसमध्यममुख्या इति त्रयं प्रोच्यते तज्ज्ञैः)॥१०॥

(द्वादशमात्रः प्रथमो मध्यम उक्तस्तथातद्द्विगुणः । )
(उत्तम उक्तास्त्रिगुणः मात्राभेदाः
प्रकीर्तितास्तज्ज्ञैः ॥११॥

---

१. पमा. १.१. पृ. २९२

२. स्मृत. १८५, स्मृच. १४१, वै. ३२३,......यामः प्रकीर्तितः पमा. १.१. पृ. २९२;...यामांस्तु शक्तितः वीमि. २७२

३. वीमि. २७५, स्मृत. ३८५

९. पमा. १. १. पृ. २९२, वीमि. २७३, वै. ३२४; पूरको कुम्भको रेच्यः प्राणायामास्त्रिलक्षणः स्मृच. १४२, स्मृत. ३८५; पूरककुम्भकरेचैः प्राणायामास्त्रिलक्षणो ज्ञेयः आर. ३९; ओं पूरकः कुम्भको रेचकः प्रा...णो ज्ञेयः आ.

१०. कनिष्ठमध्यमोत्तमः स्मृतित्रयं प्रोच्यते तद्ज्ञैः आ.

११. द्वादशमात्रः कनीयान् मध्यो मात्राश्चतुर्विंशतिः आ.

१२. उत्तमः षड्विंशन्मात्रो मात्राभेदाः प्रकीर्तितास्तद्ज्ञैः आ.

१ अङ्गुलिमोक्षत्रितयं जान्वोः परिमार्जनमथापि ।
तत् कालत्रयमपि तज्ज्ञा मात्रासंज्ञां प्रशंसन्ति ॥१२॥
गोदोहमन्नपाको वा इषुक्षेपो ह्यथापि वा ।
घण्टायाः स्तानितं वाऽपि ह्यतिमात्रा उदाहृताः ॥१३॥
५ देशकालानुसारेण सेव्यमानः शनैर्यदा ।
स्वेदकंपादि जनयेदतिमात्रस्तदा भवेत् ॥१४॥
निरोधकाले प्राणस्य मात्राः संकल्पयेत् कथम् ।
तस्मात् स्मृतिर्प्रतिष्ठं तत् कल्पयित्वा तु
योगिभिः ॥१५॥
आदिप्रयत्नं प्रथमं द्वितीयं यत्र चेतसि ।
१० तृतीयं तु समुद्दिष्टमुद्वयं तमसस्परि ॥१६॥
पूर्वोक्तस्य तु मन्त्रस्य यथासंख्यं प्रकीर्तयेत् ।
मात्रायोगा यथोक्तास्तु कृता एव भवन्ति च ॥१७॥
एतन्मात्राप्रयोगेण प्राणायामत्रयस्य च ।
ग्रहणं धारणोत्सर्गं यथासंख्येन कारयेत् ॥१८॥
१५ बाह्यस्थित नासपुटेन वायु-
माकृष्य तेनैव शनैः समन्तात् ।

---

१. जान्वोः परिमार्जनं वापि अप. १०२२; अङ्गुष्ठाङ्गुलिमोक्षं त्रि-
स्त्रिर्जानुपरिमार्जनम् हठप्रदी. २. १२

२. तत्तालत्रय...संज्ञं प्र... अप. १०२२; तालत्रयमपि प्राज्ञा मात्रासंज्ञां प्रचक्षते हठप्रदी. २. १२

१५. बाह्ये स्थितं घ्रा(प्रा)णपुटेन हठप्रदी. २. ७१; माकृष्य यत्नेन शनैः स्मृच. १४२, वै. ३२४; नासापुटेनानिलमेव बाह्यमाकृष्य तेनैव शनैः समस्तम् सं. ४०



१ नाडीश्च सर्वाः प्रतिपूरयेत्तु
स पूरको नाम मरुन्निरोधः ॥१९॥
न रेचको नैव च पूरकोऽयं
नासाग्रचारी स्थित एव वायुः ।
५ सुनिश्चितं धार्य यथाक्रमेण
कुम्भाख्यमेतत् प्रवदन्ति तज्ज्ञाः ॥२०॥
निष्क्राम्य नासाविवरादशेषं
प्राणं बहिः शून्यमिवानिलेन ।
निरुच्छ्वसंस्तिष्ठति चोर्द्ध(रुद्ध)वायुः
१० स रेचको नाम महानिरोधः ॥२१॥
नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते
कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः ॥२२॥

---

१. नाडीषु सर्वासु च पूरयेद्यः स पूरको नाम महानिरोधः सं. ४०; नाडीश्च सर्वाः परिपूरयेद्यः स...महानिरोधः हठप्रदी. २. ७१; नाड्यश्च सर्वाः परिपूरणीयाः स...महानि... वै. ३२४, स्मृच. १४२

३. पूरकोत्र नासापुटे संस्थित ( पुटान्तास्थित ) मेव वायुम् हठप्रदी. २. ७१;...चकं नैव तु पूरकं वा नासाग्रभागे स्थितमेव वायुम् सं. ४१.

५. सुनिश्चलं धारयते क्रमेण हठप्रदी. २. ७१; सुनिश्चलं धारयति क्रमेण. ख्यमेतं प्रव... सं. ४१

७. हठप्रदी. २. ७१; निःसार्यनासा... शून्य इवा... सं. ४२

९. सं. ४२; निरुध्य सं ( निरुच्छ्वसं ) तिष्ठति रुद्धवायुः हठप्रदी. २.७२.

११. पमा. १. १. पृ. २९२, वीमि. २७३, स्मृच. १४२, वै. ३२४; उच्छ्वासोऽयन्तः पूरक अप. ४५; नासिकागत उच्छ्वासो ध्मातुः पूरक स्मृत. ३८५; ... सो धृतः पूरक आर. ३९

१२. स्मृत. ३८५, अप. ४५;...श्वासो रिच्यमानस्तु वीमि. २७३, पमा. १. १. पृ. २९३, स्मृच. १४२, वै. ३२४, आर. ३९

१ नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् ।
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत् ॥२३॥

कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम् ।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥२४॥

५ रेचकेनेश्वरं ध्यायेल्ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम् ॥२५॥

यदा निरोधसंयोगाद्देवतात्रयचिन्तनात् ।
अग्नेर्वायोरपां योगादात्मा शुद्ध्येत वै त्रिभिः ॥२६॥

निरोधाज्जायते वायुर्वायोरग्निश्च जायते ।
१० अग्नेरापोभिजायन्ते ततोऽन्तः शुद्ध्यते त्रिभिः ॥२७॥

---

१. नीलोत्पलश्यामनिभं नाभिदेशे प्रति... वीमि. २७३, अप. ४५; नाभिदेशे व्यवास्थितम् आर. ३९; योगिसंहितावचनामिति याज्ञ. वीमि. ६९; अतसीपुष्पसंकाशं ध्यानाबिन्दूप. ३०
२. वीमि. २७३, अप.४५; पूरकेनैव आ.; पूरकेण विचिन्तयेत् आर. ३९; ध्या. ३०; योगिसंहितावचनामिति याज्ञ. वीमि.६९
३. वीमि. २७३, अप. ४५, आर. ३९, ध्या. ३१
४. वीमि. २७३; गौरसर्वाङ्गं अप. ४५; ब्रह्माणं गौरवर्णं च चतु... आर. ३९; रक्तगौराभं ध्या. ३१
५. रेचकेन तु विद्यात्मा ललाटस्थं ध्या. ३२;... श्वरं विद्याल्ललाटस्थं महेश्वरम् वीमि. २७३, अप. ४५, आर. ३९; योगिसंहितावचनामिति याज्ञ. वीमि. ६९
६. निष्फलं पापनाशनम् ध्या. ३२; वीमि.२७३, अप. ४५, आर. ३९
९. बौ. ४. १. २६; प्रजायते अत्रि.१.६; प्राणरोधात्तु वायुः स्याद्वायोरग्नि ... अग्नि. २१६. ४६;... ग्निर्हि.... वसिष्ठस्मृ. २५.६.
१०. अग्नेरापश्च जायन्ते अत्रि. १. ६; अग्नेरापस्ततः शुद्धिस्ततश्चाचमनं चरेत् अग्नि. २१६. ४७; अग्नेरापश्च जायन्ते स्मृच. १४२; तापेनापोभिजायन्ते बौ. ४. १. २६; तापेनापोथ जायन्ते वसिष्ठस्मृ. २५.६



१ सव्याहृतिप्रणवका: प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥२८॥

प्राणायामा ब्राह्मणेन त्रयोऽपि विधिवत् कृताः ।
व्याहृतिप्रणवैः सार्द्धं(र्धे) विज्ञेयं परमं तपः ॥२९॥

५ दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥३०॥

अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥३१॥

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
१० प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥३२॥

यथा पर्वतधातूनां दोषान् दहति पावकः ।
एवमन्तर्गतं चैनः प्राणायामेन दह्यते ॥३३॥

---

१. मनु. ११. २४८; सव्याहृतिकाः बौ. ४. १. २९, शङ्ख. १२.१८, अत्रि. २. ५; सव्याहृतिः सप्रणवाः आ.
२. मनु. ११. २४८, शङ्ख. १२. १९; ... रहर्यता: बौ. ४.१.३१, अत्रि. २. ४
३. ब्राह्मणस्य त्रयोपि मनु. ६. ७०
४. व्याहृतिप्रणवैर्युक्ता मनु. ६. ७०
५-६. मनु. ६.७१
७. मनु. ६. ६९; अह्नरात्र्या आ.
८. मनु. ६.६९
९. मनु. ६.७२; शङ्ख. ६. १३
१०. मनु. ६. ७२; ध्यानेनानैश्वरान् शङ्ख. ७. १३

१ विरजं चतुर्गुणं कृत्वा नियतात्मा जितेन्द्रियः ।
प्राणायामैश्चतुर्भिस्तु मुच्यते ह्युपपातकात् ॥३४॥

मन्त्रैर्होमैर्मार्जनाभ्युक्षणैश्च प्राणायामैर्योगसिद्धिं
जयन्ति ।

५ निर्धूतपापा विरजा विशुद्धा योगाग्निना
दग्धबीजा व्रजन्ति ॥३५॥

प्राणायामशतं कार्यं सर्वपापप्रणाशनम् ।
उपपातकजातीनामनादिष्टस्य चैव हि ॥३६॥

यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
१० त्रिकालसंध्याकरणात् प्राणायामैर्व्यपोहति ॥३७॥

ब्रह्महा च सुरापश्च अगम्यागमने रतः।
सुवर्णस्तेयि चौरश्च गोघ्नो विस्रम्भघातकः ॥३८॥

शरणागतघाती च कूटसाक्षी ह्यकार्यकृत् ।
एवमादिष्वथान्येषु पापेष्वभिरताश्चिरम् ॥३९॥

१५ प्राणायामशतं कुर्युः सूर्यस्योदयनं प्रति ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥४०॥

सूर्यस्योदयनं प्राप्य निर्मला गतकिल्विषाः ।
भवन्ति भास्कराकारा विधूमा इव पावकाः ॥४१॥

---

७. सर्वपापानुतये याज्ञ. ३. ३०५
८. याज्ञ. ३. ३०५
९. यमवचनमिति मिताक्षरा ५. ३०७
१०. त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यति याज्ञ. ३. ३०७
१५. प्राणायामत्रयं कृत्वा स्मृच. १४२, वै. ३२५
१६. स्मृच. १४२
१७. धौतकल्मषाः अत्रि. ८.१२
१८. भास्कराभास्ते अत्रि. ८. १२



१ ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ॥४२॥

पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिकं ।
रेचनेन तृतीयेन प्राप्नुयादैश्वरं पदम् ॥४३॥

५ न प्राणेनाप्यपानेन वेगाद्वायुं समुत्सृजेत् ।
येन सक्तून् करस्थांश्च प्राणा(ण)योगेन चालयेत्॥४४॥

शनैर्नासापुटैर्वायुमुत्सृजेन्न च वेगतः ।
न कम्पयेच्छरीरं तु स योगी परमो मतः ॥४५॥

प्राणस्यायमनं कृत्वा आचमेत् प्रयतोऽपि सन्
१० आन्तरं स्त्रियते यस्मात्तस्मादाचमनं स्मृतम् ॥४६॥

एवं त्रिविधमुद्दिष्टं प्राणायामस्य लक्षणम् ।
स्मृतिदृष्टं भवेदेतत् सिद्धान्ते त्वेतदन्यथा ॥४७॥

मात्राप्रमाणयोगेन प्राणापाननिरोधनात् ।
ओंकारेणैव कर्तव्यः प्राणायामो यथोदितः ॥४८॥

१५ मात्रायोगप्रमाणेन प्रणवं परिचिन्तयेत् ।
मृदुमध्योत्तमत्वाच्च त्रिविधः सोऽपि कथ्यते ॥४९॥

एवं तु त्रिविधं कृत्वा प्राणायामं विधानतः ।

---

१. अत्रि. ८. १३
२. ध्यानेनेह विशुद्ध्यति अत्रि. ८. १३
३. स्मृच. १४२, वै. ३२४
४. रेकेन स्मृच. १४२, वै. ३२४
७. ...न्नतु वेगतः स्मृच. १४२
८. स्मृच. १४२
९. वीमि. २७७, आप. ४६, स्मृत. ३८६
१०. वीमि. २७७, आ ४६: अन्तर स्मृत. ३८६
११. याज्ञवल्क्यवचनमिति वीमि. २७४
१४. ओंकारेनैव आ.

१ प्रत्याहारं ततः पश्चाच्चिन्तयेत्तन्निबोधत ॥५०॥

वायुर्बाह्यो यथा देहे गृहीतस्तत्र (तः स तु) कोष्ठगः
शनैः शनैर्निरोद्धव्यः प्रत्याहारः स उच्यते ॥५१॥

इन्द्रियाणां तु सर्वेषां या वृत्तिस्तु प्रकीर्तिता।
५ मनसा प्रतिहर्तव्या प्रत्याहारस्ततः स्मृतः ॥५२॥

सर्वाङ्गाणि यथा कूर्मो दृष्ट्वा संकोचयेत् क्षणात्
तथेन्द्रियाणीन्द्रियार्थात् तानि प्रत्याहरेद्बुधः ॥५३॥

संकल्पोऽध्यवसायश्च अभिमानस्तथैव च।
तथैव वायवः सूक्ष्मा निरोद्धव्याः प्रयत्नतः ॥५४॥

१० अतीतानागतेभ्यश्च कामेभ्यस्तु पुनः पुनः।
एकत्र धारयेद्यस्तु सोऽमृतत्वाय कल्पते ॥५५॥

शतत्रयं तु श्लोकानामष्टात्रिंशाधिकं तथा।
स्नानस्य निर्णयः प्रोक्तः शिष्याणां
हितकाम्यया ॥५६॥

१५ इति श्रीबृहद्योगियाज्ञवल्क्ये प्राणायामप्रत्याहार-
निर्णयो (नाम) अष्टमोऽध्यायः ॥८॥

---

१. इ.; पश्चात्येतान्निबोधत आ.
२. कोष्ठगः आ.
१०. इ.; कामेभ्यश्च सहैव तु आ.
१२. शतत्रयेण श्लोकानामष्टात्रिंशाधिकस्तथा इ.
१५.-१६. निर्णयः अष्टमोध्यायः आ.; योगयाज्ञवल्क्ये प्राणायामप्रत्याहार-
मवेत् (?) इ.

## नवमोऽध्यायः

ध्यानस्य तु विधिं वक्ष्ये शृण्वन्तु ऋषयः सदा।
एभ्यस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ॥१॥
ध्यानं कृत्वा चतुर्थं तु न भूयो जन्म चाप्नुयात्।
५ ततः सम्यक् प्रवक्ष्यामि प्राणायामचतुर्थकम् ॥२॥
बाह्यस्तु विषयाक्षेपचित्तविक्षेपवर्जितः।
मानसं विमले शान्ते स्थितं विष्णुं हृदि क्षिपेत् ॥३॥
तद्ध्यानं तत्तु वै योगो मोक्षमार्गप्रसाधकम्।
ओं भूर्भुवः स्वर्महर्जनस्तपः सत्यमित्येवं ब्रह्म
१० वैदिकम् ॥४॥

एतदुच्चार्य वै विप्रः परे धाम्नि नियोजयेत्।
हृद्यग्निश्चैव वायुश्च जीवशः समुदाहृतः ॥५॥
एषां ह्यन्तःशरीरस्थं ओंकारेणोपलक्ष्यते।
ओंकारं पद्मनालेन उद्धृत्योपरि योजयेत् ॥६॥
१५ आ(अ)प्राणाच्छून्यभूतं तु चेतोऽङ्गं जीवसंज्ञकम्।
जप(जाय)ते तु यतस्तस्मात् पुनस्तत्र निवेशयेत् ॥७॥
घण्टाशब्दवदोंकारमुपासीत समाहितः।
पुरुषं निर्मलं शुद्धं पश्यत्यत्र न संशयः ॥८॥
कुण्डलाकारसंस्थानं प्रसुप्तोरगसंनिभम्।
२० तन्मध्ये संस्थितो ह्यात्मा धामात्मा
बिन्दुलक्षणः ॥९॥

वक्रं तु भवति ह्यादौ ओंकारं चतुरक्षरम्।
ऋजुत्वं संप्रपद्येत पदं प्राप्य तु पञ्चमम् ॥१०॥

---

२२. वक्रं तद्भवति तृया. २.८

१ मध्यमस्तु भवेद्बिन्दुर्मूर्धन्येवावतिष्ठते ।
तत्र वाचो निवर्तन्ते सर्वे वर्णास्तथैव च ॥११॥
तस्मात् सर्वे प्रसूयन्ते वर्णास्तत्र विशन्ति च ।
वर्णात्मा हीनवर्णस्तु सर्ववर्णेषु जीवनम् ॥१२॥
५ न घोषं नैव चाघोषं दन्तौष्ठ्यं नैव तालुजम् ।
न मूर्धन्यं न चान्तःस्थं न स्वरं व्यञ्जनं न च ॥१३॥
न कण्ठ्यं(ण्ठ्यं) नैव चोष्माणं न वर्गं न विसार्गिणम् ।
जिह्वामूलमुपध्मानमनुस्वारं न चैव हि ॥१४॥
हृद्याकाशनिविष्टस्तु सोऽक्षरत्वं निगच्छति ।
१० अक्षराणि त्रिषष्टिर्वै स्थानयोगाद्भवन्ति हि ॥१५॥
एतत्तु परमं ध्येयं व्योममध्ये व्यवस्थितम् ।
व्योम्नश्चोपरि मध्यस्थमनन्ताकाशमव्ययम् ॥१६॥
यस्याकाशमयं कोष्ठमनन्तं परमालयम् ।
संयोगश्चेतनोऽस्माकं प्रकाशश्चाग्निसूर्ययोः ॥१७॥
१५ यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१८॥
अन्तरेऽस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् ।

---

१. मूर्द्धन्ये... आ.
४. ...सर्वे वर्णेषु... आ.
८. जिह्वा आ.
९. निगछति आ.
१०. त्रिषष्टिर्वे आ.
१२. व्योम यस्य च मध्यस्थं इ.
१३. ...कोष्ठामनन्तं आ.
१५. गीता १५.१२
१६. गीता १५.१२; यश्चाग्नौ आ.



१ अग्रं च मूलकं ब्रह्म सर्वेषां चान्तरास्थितम् ॥१९॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥२०॥
तस्मादंशं विनिष्क्रान्तं जीवभूतं सनातनम् ।
५ ब्रह्मणः परमं ब्रह्म ज्योतिषां ज्योतिरुत्तमम् ॥२१॥
हृदये सर्वभूतानां जीवभूतः स तिष्ठति ।
स एव भगवान् विष्णुर्वेदान्तैरुपगीयते ॥२२॥
ईश्वरं रुपाख्यं तु सत्यधर्माणमव्ययम् ।
भर्गाख्यं विष्णुसंज्ञं तु यं ज्ञात्वाऽमृतमश्नुते ॥२३॥
१० हृद्योम्नि तपते ह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नौ वा धूमके ह्येष ज्योतिश्चित्रतरङ्गवत् ॥२४॥
हृद्याकाशे तु यो जीवः साधकैरुपगीयते ।
स एवाऽऽदित्यरूपेण बहिस्तम(र्नभ)सि राजते ॥२५॥
तस्य चान्तर्गतं धाम सूक्ष्मं प्राकाश्यमेव च ।
१५ स चात्मा सर्वभूतानां चेतोमात्रस्वरूपकः ॥२६॥
एकधा यो विजानाति ज्ञात्वा चैनमुपासते ।
स परं विद्यते व्योम ब्रह्माणं समुपाश्नुते (?) ॥२७॥
ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषम् ।
पृथग्भावे न सिध्येत उभे तस्मात् समाश्रयेत् ॥२८॥

---

१. अनग्रमूलकं ब्रह्म सर्वेषु परिसंस्थितम् इ.
२.-३. गीता. १५.६
१८. याज्ञ. चौमि. ३६०, दीप. ८९
१९. तात तस्मात् दीप. ८९

१ ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।।
तस्माद्द्वयोरेव भवेत सिद्धि-
र्न ह्येकपक्षो विहगः प्रयाति ।।२९।।

५ गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
निःसृतं कर्मचरितं पुनस्तस्यैव भेषजम् ।।३०।।

एवं सति शरीरस्थः सर्पिवत्(र्वत्) परमेश्वरः ।
विना चोपासनादेव न करोति हितं नृषु ।।३१।।

कर्माणि ह्यविनाशीनि बीजवत् प्रभवन्ति च ।
१० तानि योगाग्निदग्धानि न प्ररोहन्ति वै पुनः ।।३२।।

एतस्मात् कारणाद्ध्यानं धारणां प्राणसंयमम् ।
कुर्याद्यत्नेन योगज्ञः कर्मसंन्यासचिन्तनम् ।।३३।।

परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः ।।३४।।

१५ यमैश्च नियमैश्चैव आसनैः प्राणसंयमैः ।
प्रत्याहारेण ध्यानेन धारणाभिः समाधिना ।।३५।।
अष्टाङ्गेन तु योगेन उपास्यात्मा विमुच्यते ।
अणिमादि तथैश्वर्यं प्रत्यक्षं जायते ध्रुवम् ।।३६।।

---

१.-४. दीप. ८९
५. स्मृत. ३८२; यथा स...स्थं गवां न कुरुते बलम् ग. २३५.२
६. ...कर्मसंयुक्तं पुनस्तासां तदौषधम् स्मृत. ३८३; निर्गतं कर्मसंयुक्तं दत्तं तासां महाफलम् ग. २३५.३
७. तथा विष्णुः शरीरस्थो न करोति हितं नृणाम् ग. २३५.३
८. स्मृत. ३८३; विनाराधनया देवः सर्वगः परमेश्वरः ग. २३५.४
१३. स्मृत. ३८३; ...रेतज्ज्ञानस्य लक्षणम् आ.



१ प्रणवव्याहृतिभ्यां च सावित्र्या त्रितयेन च ।
उपास्यं त्रितयं ब्रह्म आत्मा ह्यत्र प्रतिष्ठितः ।।३७।।

विद्या जपश्च चिन्ता च एतद्धि त्रितयं स्मृतम् ।
एतेन त्रितयेनाथ उपास्यात्मा विमुच्यते ।।३८।।

५ प्रणवाद्या भवेद्विद्या प्राणायामस्तपः स्मृतम् ।
ध्यानं च धारणा चैव चिन्ता ह्येषा उदाहृता ।।३९।।

सावित्र्याश्चैव माहात्म्यं ज्ञात्वा चैव यथार्थतः ।
तस्यां यदुक्तं चोपास्य ब्रह्मभूयाय कल्पते ।।४०।।

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।
१० उदाहृते तु तच्छब्दे यच्छब्द उदितो भवेत् ।।४१।।

देवस्य सवितुर्यच्च भर्गमन्तर्गतं विभुम् ।
ब्रह्मवादिन एवाहुर्वरेण्यं तच्च धीमहि ।।४२।।

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ।।४३।।

१५ बुद्धेर्बोधयिता यस्तु चिदात्मा पुरुषो विराट् ।
सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।।४४।।

हिरण्यवर्णं पुरुषं ध्यायेम विष्णुसंज्ञकम् ।
भेति भासयते लोकान् रेतिरञ्जयते प्रजाः ।।४५।।

---

१. ...गायत्र्या त्रितयेन च स्मृत. ३८३
२. उपास्यं परमं ब्रह्म आत्मा यत्र स्मृत. ३८३
११. इ.;...र्यस्यभर्ग... आ.;... सवितुर्वर्चो भर्गमन्त... स्मृत. ३८३
१२. ...ण्यं चास्य धीमहि स्मृत. ३८३
१३. स्मृत. ३८३
१४. स्मृत. ३८३; मदी. २०; बुद्धिवृत्ती... आ.
१५. बुद्धेश्चोदयिता स्मृत. ३८३
१८. लोकानितिरंजयते आ. भेति भासयते लोकान् रेति रञ्ज... मदी. २०

१ गइत्यागच्छतेऽजस्रं भरगा(णा)द्भर्ग उच्यते ।
अग्नीषोमात्मकं बिभ्रद्वैश्वरूपेण कर्मणा ॥४६॥

जगदाधानसिद्ध्यर्थं सूर्यात्मा जगतोऽपि च ।
शश्वत्प्रसूयणात् सूर्यः पावनात् पवनः स्मृतः ॥४७॥

५ आप्यायनात्तु वरुणः श्रेष्ठत्वादिन्द्र एव सः ।
भौमान्तरिक्षं दिव्यं च आ(अ)प आहू
रवीन्धनम् ॥४८॥

एता गभस्तिभिः पीता दीप्यन्ते रविमण्डले ।
एतैः पर्यायशब्दैस्तु एक एव सदोच्यते ॥४९॥

१० भ्राजते च यदा भर्गः पुरुषत्वाच्च पूरुषः ।
सर्वात्मा सर्वभावस्तु आत्मा तेन निगद्यते ॥५०॥

तत्सवितुर्वरेण्यं च चेतनात्मा महेश्वरः ।
आ(अ)पः संक्षिप्य सवितुस्ततः सर्गः प्रवर्तितः॥५१॥

सर्वेषामेव भूतानामापोज्योतिरिहोच्यते ।
१५ भ्रस्ज पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ ॥५२॥

भ्राजते दीप्यते यस्माज्जगदन्ते हरत्यपि ।
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ॥५३॥

भ्राजते स्वेन रूपेण तस्माद्भर्ग इति स्मृतः ।
दीव्यते क्रीडते यस्माद्द्योतते रोचते दिवि ॥५४॥

---

१. गत्यागच्छत्यजस्रं यो भगवान् भर्ग उच्यते मदी. २०
१५. भ्रस्रो पाके आ.
१६. ..जगच्चान्ते मदी. २०
१८. भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते मदी. २०
१९. मदी. १९ दीप्यते क्रीडते यस्मादुद्यते द्योतते दिवि आ.



१ तस्मादेव इति प्रोक्तस्तूयते सर्वदैवतैः ।
सविता सर्वभूतानां सर्वभावान् प्रसूयते ॥५५॥

सवनात् पावनाच्चैव सविता तेन चोच्यते ।
वरेण्यं वरणीयं च जन्मसंसारभीरुभिः ॥५६॥

५ आदित्यान्तर्गतं भर्गः सेव्यते वै मुमुक्षुभिः ।
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ॥५७॥

ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्यमण्डले ।
मन्त्रोऽर्थमपि वेदादौ स्थापयत्येवमेव हि ॥५८॥

हिरण्मयेन पात्रेण सत्यस्याऽपिहितं मुखम् ।
१० तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥५९॥

योऽसावादित्ये पुरुषः सोऽसावहम् ।
कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः॥६०॥

सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं
तमसः परस्तात् ।

---

१. मदी. १९
२. मदी. १९; सर्वभावांश्च जायते आ.
३. मदी. १९
४. स्मृत. ३८३;...संसारभयभीरुभिः मदी. १९
५. ...गतं यच्च भर्गाख्यं तन्मुमु...स्मृत. ३८३;...गतं यच्च भर्गाख्यं या मुमु..मदी. २०
६. त्रितयस्य च स्मृत. ३८३
७. यश्च द्रष्टव्यः स्मृत. ३८३
८. ...मपि चैवायं ज्ञापयत्येवमेव हि स्मृत. ३८३
९.-१०. ईश. १५, मैआ. ६.३५
११. मैआ. ६.३५;...दित्यपुरु...आ.
१२.-१३. गीता. ८.९

१ भर्गस्तु पुरुषो ह्यात्मा ईश्वराख्यः शुचिस्तथा ॥६१॥
हिरण्यगर्भो विष्णुश्च शुक्रश्चैव ह्यलिङ्गकः ।
ईशिता सर्वभूतानां कर्मदोषाशयैरपि ॥६२॥
न परामृश्यते यस्माद्विशेषादीश्वरः स्मृतः ।
५ शोधनाच्छुद्धनाच्चैव अक्लिन्नत्वाच्छुचिः स्मृतः ॥६३॥
हिरण्मयस्य गर्भोऽभूत् हिरण्यस्य च गर्भजः ।
तस्माद्धिरण्यगर्भेति पुराणे विनिगद्यते ॥६४॥
हैरण्यमण्डं संदीप्तं तपोज्ञानात्तु वै पुरा ।
एकं द्वादशधा गर्भमदितिर्विष्णुमजीजनत् ॥६५॥
१० तस्योल्वा (ल्ब)ह्यस्थितो मेरुरुदरात् सप्त सिन्धवः ।
पर्वताश्च जरायूस्तथा नद्यो धमनिसंज्ञिकाः ॥६६॥
दिवश्च पृथिवी चैव कपाले द्वे व्यवस्थिते ।
मध्येऽन्तरिक्षमभवत् त्रैलोक्यस्यैष संभवः ॥६७॥
एते ह्यण्डकपाले द्वे अपां मध्ये निवेशिते ।
१५ एकोऽधस्तात् समभवत् द्वितीयं नन्दनं वनम् ॥६८॥
तन्मध्याद्यः शिशुर्जातो मार्तण्डः सवितेति सः ।
सर्वाणि चास्य भूतानि ह्युपासन्ते समन्ततः ॥६९॥
एतस्य ब्रह्मणा न्यस्तं स्तूयते स(सा)र्वलो(लौ)किकम् ।
रौद्र(द्रं) तेजः स्वकीयं च अग्नीषोमौ तथैव च ॥७०॥
२० द्वादशानां तु यत्तेजस्तदेकस्य निवेशितम् ।
पौरुषं चैव यद्धाम परमं ह्यत्र तिष्ठति ॥७१॥

२०. इ; निवेशनम् आ.
२१. इ; परमात्मं च आ.



१ अमृतं चैव मृत्युश्च प्राकृतं वैकृतं तथा ।
द्विधा गर्भो भवत्येष हिताय जगतोऽस्य च ॥७२॥
वेदाश्चैवात्र चत्वारस्तपन्ते मण्डले स्थिताः ।
ऋग्यजुःसाममूर्तिस्तु रश्मयस्तस्य शब्दिताः ॥७३॥
५ रसानि यानि मेध्यानि रश्मिभिः संप्रकर्षति ।
दिव्या शिवतमा ह्यापः सौम्यास्ताः
संभवन्ति हि । ॥७४॥
अक्षेत्रेभ्यश्च एतेभ्यो ह्यमेध्याद् गृह्यते रसः । (?)
अथर्वाङ्गिरसेभ्यश्च संभवेद्वैकृतं जगत् ॥७५॥ (?)
१० अश्माशनिरवश्याया नागकूष्माण्डराक्षसाः ।
स्तेनास्तेन हि जीवन्ति सौम्येन सुरमानवाः ॥७६॥
अन्नदः सर्वभूतानां भूर्भुवःस्वर्निवासिनाम् ।
द(वृ)ष्टिप्रकाशे(शा)वश्यायनीहाराशनिमारुतैः ॥७७॥
तामसान् यक्षभूतानि नागकूष्माण्डनैर्ऋतान् ।
१५ तदन्नेन बिभर्त्येकोऽमृतवृष्ट्या चराचरान् ॥७८॥
एष धाता विधाता च ब्रह्मा विष्णुर्महेश्वरः ।
धनदः पावकः कालो वरुणेन्द्रानिलाः शशी ॥७९॥
मित्रो धाता भगस्त्वष्टा पूषार्यमांशुरेव च ।
पर्यायनामभिश्चैष एक एव निगद्यते ॥८०॥
२० विशनात् सर्वभूतानां विष्णुरित्यभिधीयते ।
पश्यते सर्वभूतानां कर्म एष शुभाऽशुभम् ॥८१॥

५. रमभिः संप्रकर्षति आ.

१ छिन्दते पूर्वदेहस्थं विपाकं वै शुभाऽशुभम् ।
तस्माद्धाता विधाता च कीर्त्यते वेदचिन्तकैः ॥८२॥
बृहत्वाद् बृंहणत्वाच्च सामऋग्यजुषां तथा ।
त्रयाणां धारणाच्चैव ब्रह्मा तेन निगद्यते ॥८३॥
५ रोदनाद्रावणाद्रागाद्रंहणाद्रुद्र उच्यते ।
महानीशश्च भूतानां महेश्वर इति स्मृतः ॥८४॥
सहस्रकरपन्मूर्तिर्दृश्यते सर्वतो यतः ।
सर्वस्यैवोपरिष्टस्य पूरणात् पुरुषः स्मृतः ॥८५॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
१० आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥८६॥
सविता श्रियः प्रसविता धनदस्तेन चोच्यते ।
वायुः कर्म च कालौ च शुद्धेः कर्तॄणि देहिनाम् ॥८७॥
पावयेद्रश्मिभिः सर्वं पावकस्तेन चोच्यते ।
सूर्य आत्मा तु जगतः प्राणाख्यो हृदि संस्थितः ॥८८॥
१५ सर्वात्मा कथ्यते तज्ज्ञैर्जीवभूतः सनातनः ।
द्वितीयेन तु रूपेण साक्षिवत्तिष्ठते तु सः ॥८९॥
आदानात् सर्वभूतानामादित्य इति कीर्तितः ।
आर्यः स्वाम्यस्य जगतो ह्यर्यमा तेन चोच्यते ॥९०॥
संरक्षिता च भूतानां सविता तेन स स्मृतः ।

---

१. चित्तं यत् पूर्वदेहस्थं विपाके तु शुभाशुभम् इ.
२. कीर्त्यते दैवचिन्तकैः इ.
९. मनु. ३.७६
१०. मनु. ३.७६



१ भगसंज्ञा धनस्योक्ता स ददाति ततो भगः ॥९१॥
विश्वेषां कर्मणां कर्ता विश्वकर्मा ततः स्मृतः ।
करैर्भासयते विश्वं भास्करस्तेन चोच्यते ॥९२॥
पुष्णाति हि जगत् सर्वं पूषा तेन निगद्यते ।
५ अंशुभिर्व्याप्यते विश्वमंशुस्तेन उदाहृतः ॥९३॥
निमेषादि क्षणः कालस्तस्मादुत्पद्यते यदा(तः) ।
कालकर्ता ततो ज्ञेयः कालाख्यो विष्णुरव्ययः ॥९४॥
सहस्रच्छिद्रसंकीर्णा आपो रेतोमया घटे ।
हिरण्मयेन्तरे तिष्ठन् रविस्तेन निगद्यते ॥९५॥
१० इडासुषुम्णे द्वे नाड्यौ रश्मिसंज्ञे व्यवस्थिते ।
पाचिकाप्यायिके ह्येते अग्नीषोमात्मके स्मृते ॥९६॥
एतौ तु पार्श्वगौ ज्ञेयौ पंथानौ ह्यग्निहोत्रिणाम् ।
देवपित्रात्मकौ ह्येतौ शाश्वतौ जगतः समौ ॥९७॥
तयोर्मध्ये अमा ह्येषा यत्र संतिष्ठते शशी ।
१५ कलावशिष्टो भूयोऽपि वृद्धिं गच्छति भास्करात् ॥९८॥
तत्र तत् परमं धाम उदधेरिव निःसृतम् ।
यस्मिल्लवणवद्योगी विशत्येवैकतां गतः ॥९९॥
सा सूर्ये चैव हृदये परे ब्रह्मणि संस्थिता ।
तया गच्छन्ति विद्वांसो ब्रह्म ब्रह्मविदो जनाः ॥१००॥

---

२. इ.; विश्वं करोति कर्माणि आ.
४. पुष्णाप्याति जगत्सर्वं आ.
८. सहस्रछिद्र आ.
१०. आप्यायनाचके ह्येते इ.
१४. संतिष्ठते आ.

श्रद्धायुक्ता ये ह्युपासन्ते अरण्ये
शांता विद्वांसो ब्रह्मचर्यं चरन्ति ।
ते सूर्यस्य द्वारेण विरजाः प्रयान्ति
यत्रासौ तिष्ठति पुरुषोऽव्ययात्मा ॥१०१॥
५ हन्त्यज्ञानं ततो हंस अश्रान्तपरिवर्तनात् ।
एवं पर्यायशब्दैस्तु एक एव निगद्यते ॥१०२॥
ऋग्यजुःसाममूर्तिस्तु बिम्बं यस्य त्रयीमयम् ।
ऋग्भिस्तु तपते प्रातर्मध्याह्ने यजुभिस्तथा ॥१०३॥
सामभिश्चापराह्ने वै अथर्वाङ्गिरसो निशि ।
१० ऋचोऽस्य मण्डलं ह्येतत् सामान्यर्चींपि
यानि तु ॥१०४॥
यजुः शुक्ला च गुह्या च तनुः सूक्ष्मा च मण्डले ।
यश्च मण्डलमध्यस्थो यं च वेत्थ हुताशने ॥१०५॥
पुरुषं मण्डलान्तस्थं दीप्तिमन्तं हिरण्मयम् ।
१५ ज्वालासहस्रसंकीर्णमग्निरूपं समन्ततः ॥१०६॥
स सूर्ये ज्योतिरित्युक्तं बहिस्तेजो विनिर्गतम् ।
पुरुषान्तर्गतं सूक्ष्मं शुक्लाच्छुक्लतरं हि तत् ॥१०७॥
भूर्भुवः स्वरिति यः सूर्ये ज्योतिरितीति च ।

---

१. तपःश्रद्धे ये ह्युपवसन्त्यरण्ये मुण्डक. १. २. ११
२. विद्वांसो भैक्ष्चर्यां चरन्तः मुण्डक. १. २. ११
३. सूर्यद्वारेण ते विरजाः मुण्डक. १. २. ११
४. यत्रामृतः स पुरुषो ह्यव्ययात्मा मुण्डक १. २. ११
१०-११यजूंषि मण्डले गुह्य सामान्यर्चींषि यानि तु इ.
१२. यजूंषि शुक्लगुह्यानि तनुः सूक्ष्मा तु मण्डले इ.



१ अग्निर्हो(हो)त्रतनुर्ह्येष पुरुषाकृतिमण्डले ॥१०८॥
ओमापो ज्योतिरित्येतद्यजुश्चात्र प्रतिष्ठितम् ।
अष्टपादं शुभं हंस(सं) त्रिमात्रमजमव्ययम् ॥१०९॥
त्रिरात्मानं तैजसं च सर्वं पश्येत्तमव्ययम् ।
५ तस्य यद्धृदयावस्थं ज्योतिः सूर्यः स उच्यते ॥११०॥
शुक्लं तत् पुरुषं ज्ञेयमलिङ्गं ज्योतिरूपकम् ।
सत्यधर्माण(णं)भर्गं तु ईश्वरं विष्णुसंज्ञकम् ॥१११॥
तस्मिन् प्रतिष्ठितं सर्वं त्रयस्त्रिंशद्गुणं हि तत् ।
अग्निमध्यगतं चैव अग्नौ ज्योतिरुदाहृतम् ॥११२॥
१० अग्नावग्निः स एवोक्तस्तस्य चैवात्र हूयते ।
अग्निहोत्रे च संप्राप्ते चिन्तयेच्चैकमानसम् ॥ ११३॥
लेलिह्यमानं संदीप्तं निर्धूमं पावकः(कं) सदा ।
ज्योतिश्चित्रतरं ह्येतत्तद्ब्राह्मं वह्निसंज्ञकम् ॥११४॥
तदाऽस्य मध्यगं ध्यायेत् पुरुषं चाप्यलिङ्गकम् ।
१५ स सत्यज्योतिर्ब्रह्मा च आदित्यश्च निगद्यते ॥११५॥
ब्रह्मभूतं हि संचिन्त्य जुहुयात् सुसमाहितः ।
अवमृज्य ततो हस्तावाद्भिरामणिबन्धनात् ॥११६॥
दीर्घं प्रणवमुच्चार्य चित्तं तत्र निवेश्य च ।
यजुषा मनसा चैव जुहुयाद्विधिवद् बुधः ॥११७॥
२० ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।

---

११. ...च्चैक मानसः इ.
१२. पावकस्तथा इ.
२०. गीता ४.२४

१ ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥११८॥
ज्योतिषां ज्योतिरित्याहुः सत्यं सत्येषु चैव हि ।
ब्रह्मणः परमं ब्रह्म आदित्यादित्य एव हि ॥११९॥
एवं यः कुरुते विप्रः अग्निहोत्रमतन्द्रितः ।
५ शासितं ज्ञानकर्मभ्यामभिसंध्य फलेन च ॥१२०॥
स दग्धकिल्बिषो भूत्वा वैश्वानरसमप्रभः ।
विशते पुरुषं दिव्यं शुक्लीभूत्वा ह्यलिङ्गकम् ॥१२१॥
अणिमाद्यैस्तु संयुक्तस्तेनैव सह मोदते ।
न च्यवते न व्यथते पुनर्वा जायते न च ॥१२२॥
१० एवंविधं चिन्तयेत्तु आत्मयज्ञे ह्युपास्थितं ।
जीवं वैश्वानरं ध्यायेद्धृदये पद्मसंपुटे ॥१२३॥
उदरे गार्हपत्योऽग्निः पृष्ठदेशे तु दक्षिणः ।
आस्ये आहवनीयोऽग्निस्त्रिधा ह्येवं निवेशयेत् ॥१२४॥
शून्योऽग्निः सत्यसंज्ञस्तु मूर्धन्येवाश्रितः सदा ।
१५ यः पञ्चाग्नीनिमान् वेद आहिताग्निः स उच्यते ॥१२५॥
केशबर्हि(:)समाच्छन्नमुरोवेद्यां प्रतिष्ठितम् ।
चेतोत्माधाममात्रं तु निर्भासं चात्मभासकम् ॥१२६॥
एतद्धि सोममध्यस्थममृतं ज्योतिरूपकम् ।
२० हृदिस्थः सर्वभूतानां चेतनः श्रूयते ह्यसौ ॥१२७॥
पञ्चमण्डलमध्यस्थो द्रष्टव्यो योगचक्षुषा ।

---

१४. मुर्द्धन्ये ...आ..
१८. लोमबर्हि...इ..



२ रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ॥१२८॥
तेजोमध्ये स्थितः सत्यः सत्यमध्ये स्थितोऽच्युतः ।
अग्निमध्ये रविस्थानं रविमध्ये च चन्द्रमाः ॥१२९॥
तस्य मध्येंकुसं(?) विद्यात्ततः सृष्टिः प्रजायते ।
५ सूर्यं भित्त्वा यथा चन्द्रश्चन्द्रमाश्च तथामृतम् ॥१३०॥
तन्त्रस्थं च शुभं वर्णं तद्दृष्ट्वाप्यमृती भवेत् ।
अन्नं प्राणो मनश्चैव विज्ञानानन्द एव च ॥१३१॥
प्राणो व्यानो ह्यपानश्च समानोदान एव च ।
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमम् ॥१३२॥
१० पञ्चमध्यगतः षष्ठो भुङ्क्ते देहगतान् गुणान् ॥१३३॥
शब्दादीनां च पञ्चानामुपलब्धिस्तु या स्थिता ।
चेतसा यस्तु गृह्णाति बुद्ध्यवस्थितमीश्वरम् ॥१३४॥
पुरुषाख्यः स विज्ञेयो भोक्तृभावः स उच्यते ।
अव्यक्तेन च रूपेण वैश्वानरमुखेन च ॥१३५॥
१५ अन्नं रसमयं कृत्स्नं प्रकृत्याऽऽपादितं च यत् ॥
सर्वं प्रत्युपभोगार्थं वर्तते परमात्मनः ॥१३६॥
त्रिविधान्नं त्रिधा भोक्ता वेदितव्यं प्रयत्नतः ।
शरीरमापः सोमश्च त्रिविधं ह्यन्नमुच्यते ॥१३७॥
प्राणस्त्वग्निस्तथाऽऽदित्यस्त्रिभोक्ता एवमेव तत् ।
२० अमृतं कल्पयित्वा च यदन्नं समुपागतम् ॥१३८॥

---

२. स्थितोऽव्ययः इ.
१०. देहस्थितो गुणान् इ.

१ प्राणाग्निहोत्रविधिना भोज्यं तद्वदघापहम् ।
महाव्याहृतिभिश्चैवमभिमन्त्र्य पुनस्ततः ॥१३९॥
उच्छिष्टमिष्टोपहतमित्यनेनाभिमन्त्रयेत् ।
आपोशानं(न)क्रियापूर्वं जुहुयाद्वायवे हविः ॥१४०॥
५ प्राणो व्यानस्तथाऽपानः समानोदान एव च ।
ओंकारपूर्वाःस्वाहान्ताः पञ्च दद्यात्तथाऽऽहुतीः ॥४१॥
वाग्यतः शेषमश्नीयाद्भुक्त्वाऽऽचम्य पुनः पुनः ।
प्राणोऽग्निर्विश्व इत्याभ्यां प्रत्याहारं विचिन्तयेत् ॥४२॥
ओं प्राणोऽग्निपरात्मानं पञ्चवायुभिरावृतः ।
१० स ईशः सर्वजगतः प्राणः प्रीणाति विश्वभृत् ॥१४३॥
विश्वोसि वैश्वानर विश्वरूप
त्वं विश्वमाधारयसि याजमानः।
विश्वं च पीत्वाहुतयश्च यत्र
प्रादेशमात्रः पुरुषः स्मृतस्तु सः ॥१४४॥
१५ एषा विश्वभृतीनां तनुर्विष्णोः सनातनी ।
अन्नरूपेण विज्ञेया ययेदं धार्यते जगत् ॥१४५॥

---

१. प्राणाग्निहोत्रविधिना भोज्यं अन्नं तच्च अघापहम् इ.
६. स्वाहान्तैः इ.
७. इ.; वाग्यज्ञः आ.
८. प्राणोऽग्नि विश्वोसीति च द्वाभ्यामात्मानमभिध्यायेत् मैआ. ६.९
९. प्राणोऽग्निः परमात्मा पञ्च...इ.; प्राणोऽग्निः परमात्मा पञ्चवायु...प्राणाग्निहोत्रोपनिषद् १.१२; प्राणोऽग्निः परमात्मा वै पञ्चवायुः समाश्रितः मैआ. ६.९
१०. स प्रीतः प्रीणातु विश्व विश्वभुक् मैआ. ६.९
११.–१२. विश्वोसि वैश्वानरो विश्वरूपं त्वया धार्यते जायमानम् प्राणाग्निहोत्रोप.२; विश्वोसि वैश्वानरोसि विश्वं त्वया धार्यते जायमानम् मैआ. ६.९
१३.–१४ विशन्तु त्वामाहुतयश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसि मैआ.६.९



१ अन्नकामेन संसृष्टं ब्रह्मणा चाखिलं जगत् ।
तस्मादन्नात् परं तत्त्वं न भूतं न भविष्यति ॥१४६॥
अन्नार्थी पवते वायुरन्नार्थी ज्वलतेऽनलः ।
अन्नार्थी चाप्ययं सूर्यो रसान् गृह्णाति रश्मिभिः ॥१४७॥
५ यथा हि क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतानि आत्मयज्ञ(न्यग्न)मुपासते ॥१४८॥
यो ह्यविद्वान् समश्नाति अन्नं मोहसमन्वितः ।
भस्मनीव हुतं हव्यं तद्वदन्नममन्त्रकम् ॥१४९॥
एवं ज्ञात्वा तु यो विप्रो विधिनान्नं समश्नुते ।
१० आत्मानं च तथान्नं च दातारं चैव तारयेत् ॥१५०॥
तर्पितं च भवेत्तेन विश्वं भुवनसप्तकम् ।
दैव्ये पित्र्ये च यद्दत्तं तदक्षय्यं भवत्यपि ॥१५१॥
एवं हि सर्वभावस्थं विदित्वा परमेश्वरम् ।
काष्ठादौ हि तृणान्ते च पाषाणान्तर्गतेऽपि च ॥१५२॥
१५ ब्रह्मादिस्तम्बपर्यन्तमेवं व्याप्य स तिष्ठति ।
पाषाणमणिधातूनां तेजोरूपेण संस्थितः ॥१५३॥
वृक्षौषधितृणानां च रसरूपेण तिष्ठति ।
तन्मात्रभूतो भूतानां निश्वरूपेण संस्थितः ॥१५४॥
एवं वेत्ति य आत्मानमेकधा संप्रतिष्ठितम् ।
२० ज्ञात्वा चोपासते सम्यक् सोऽमृतत्वाय कल्पते ॥१५५॥
आदित्ये हृदये चैवमग्नौ व्योम्नि तथा परे ।
एक एव भवेदात्मा पञ्चधाऽवस्थितस्तु सः ॥१५६॥

---

५.–६. यथेह...एवं...भूतान्यग्निहोत्रमुपासते छा. उ. ५. २४. ५
बृ. स्मृ. ८

१ आदित्ये चैव हृदये चैकीभूतं विचिन्तयेत् ।
सर्वोपनिषदां चैव उपास्यैषा उदाहृता ॥१५७॥
आदित्यो ब्रह्म इत्येतन्मित्राद्युपनिषत्सु च ।
छान्दोगे बृहदारण्ये तैत्तिरीये तथैव च ॥१५८॥
५ एतदेव मनुप्रोक्तं देवानां चोपजीवनम् ।
पार्श्वे बाह्ये तथा पृष्ठे द्यौरस्य परिकल्पिता ॥१५९॥
अन्तरिक्षमधश्चैव पुत्राश्चास्य मरीचयः ।
ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः । ॥१६०॥
कल्पभाष्यपुराणानि उपवेदास्तथैव च ।
१० गुह्योपनिषदश्चैव पुपुष्पाणि (पुष्फुसाः)
परिकीर्तिताः ॥१६१॥
ऋचो यजूंषि सामानि मधून्येतानि कुर्वते ।
तद्वेदैः संभृतं दिव्यं रसं तदमृतं मधु ॥१६२॥
वसवश्च तथा रुद्रा मरुतोऽङ्गिरसादयः ।
१५ पूर्वादिदिग्विभागेन स्वकीयैः सवनैः स्थिताः॥१६३॥
मुखमेकं समालोक्य रथनीडे स्थिता विभोः ।
तृप्तिं समधिगच्छन्ति नाश्नन्ति न पिबन्ति च॥१६४॥
नीडमध्यगतं सूर्यं न च पश्यन्ति चक्षुषा ॥१६५॥
अर्चींषि केवलान्येव उच्चरन्ति मुहुर्मुहुः ।
२० संर(ल)क्षयन्ति कुहरे नीडान्तःस्थं घटोपमम् ॥१६६॥
हृद्याकाशगतो यो हि पद्मसंपुटमध्यगः ।
अनन्ता रश्मयस्तस्य दीपवद्यो स्थितो हृदि ॥१६७॥

४. छन्दोगे इ.



१ सिताऽसिताः कद्रुनीलाः कपिलाः पीतलोहिताः ।
ऊर्द्ध्वमेकःस्थितस्तेषां यो भित्वा सूर्यमण्डलम् ॥१६८॥
ब्रह्मलोकमतिक्रम्य ते यान्ति परमां गतिम् ।
यदस्य स्याद्रश्मिशतमूर्द्ध्वमेव(क ?)मत्रास्थितः ॥१६९॥
५ तेन देवनिकायानां स्वधामानि प्रपद्यते ।
ये चैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ॥१७०॥
इह कर्मप्रभोगाय तै संसरति सोऽवशः ।
एतद्यो न विजानाति मार्गद्वितयमात्मनः ॥१७१॥
दंदशूकः पतङ्गो वा भवेत् कीटोऽथवा क्रिमिः ।
१० अलाबुतन्तुसदृशं शिराजालं तु संततम् ॥१७२॥
सपद्मसंपुटं चित्रं छिद्रितं कर्णिकोज्वलम् ।
तस्य मध्यगतो ह्यात्मा रश्मिभिः परिवारितः॥१७३॥
प्रदीपतापप्रकाश्यै(शै)रवाप्नोति न चान्तरम् ।
अङ्गुष्ठपरिमाणं च ज्वलते स्वेन तेजसा ॥१७४॥
१५ प्रादेशमात्रं तपते वितस्तिं च प्रकाशते ।
तत्प्रदेशस्थितो ह्यात्मा चेतनः सर्वतो विभुः ॥१७५॥
तत्त्वानि तत्र वै देवे तिष्ठन्त्यत्र समन्ततः ।
आप्यायन्ते च तेनैव दर्शनान्नात्र संशयः ॥१७६॥
न च पश्यन्ति पुरुषं ह्यन्तस्थं परमं विभुम् ।
२० तं चिन्तयेत् समाधिस्थो यं ज्ञात्वा विप्रमुच्यते॥१७७॥
मुक्तो न जायते भूयः प्राप्य विष्णोः परं पदम् ।

१७. तिष्ठन्तेऽत्र आ.: तत्त्वानि तत्र वेदे वा तिष्ठन्ति तु समन्ततः इ.
१८. आप्यायन्तं हि तेनैव दर्शनेनात्र संशयः इ.

१ ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ॥१७८॥
श्वपाकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ।
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ॥१७९॥
ध्यानमेव परं शौचं तद्धाम(द्ध्यानं) परमं स्मृतम् ।
५ सर्वपापप्रसक्तोऽपि ध्यायेन्निमिषमच्युतम् ॥१८०॥
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः ।
ध्यानमेव प्रवक्ष्यामि करणैः क्रियते यथा ॥१८१॥
बुद्ध्यहंकारमनसां विषयानिन्द्रियाण्यपि ।
एकस्थाननिरोधेन ध्यानमित्यभिधीयते ॥१८२॥
१० इन्द्रियाणीन्द्रियार्थांश्च बुद्धावेव निवेशयेत् ।
मनो बुद्धिरहंकारो भूतानि प्रकृतावपि ॥१८३॥
प्रधानं पुरुषे योऽयं स न्यासः परिकीर्तितः ।
इन्द्रियेभ्यः परे ह्यर्था अर्थेभ्यः परमं मनः ॥१८४॥
मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः ।
१५ महतः परमव्यक्तमव्यक्तात् पुरुषः परः ॥१८५॥
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।
ऐशान्यभिमुखो भूत्वा उपविश्याऽऽसने शुभे ॥१८६॥

---

८. बुद्ध्यहंकारविषया इन्द्रियाणि मनस्तथा इ.
१०. इन्द्रियाणीन्द्रियार्थांश्च बहिरेव निवेशयेत् इ.
१३. पराह्यर्था कठ. १. ३. १०
१४. मनसश्च कठ. १. ३. १०
१५. कठ. १. ३. ११
१६. कठ. १. ३. ११
१७. एवान्याभि आ.; ईशान्यभि इ.



१ नात्युच्छ्रिते नातिनीचे चैलाजिनकुशोत्तरे ।
तत्रोपविश्य सुमु(मु)खं गुरुं चादौ नमस्य च ॥१८७॥
पद्मासनं च बध्वा वै दीर्घं प्रणवमुच्चरेत् ।
ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ॥१८८॥
५ उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ।
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तान्न संस्पृशेत् ॥१८९॥
तालुस्थाऽचलजिह्वश्च संवृतास्यः सुनिश्चलः ।
संनियम्येन्द्रियग्रामं पाषाण इव निश्चलः ॥१९०॥
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ।
१० ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥१९१॥
धारयेत्तत्र चात्मानं धारणं धारयेद्बुधः ।
मोहजालमपास्याथ पुरुषो दृश्यते हि यः ॥१९२॥
सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रधा ।
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥१९३॥
१५ हिता नाम हि ता नाड्यस्तासां मध्ये शशिप्रभम् ।
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ॥१९४॥
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ।
अन्तर्धानं स्मृतिः कान्तिर्दृष्टिश्रोत्रज्ञता परा ॥१९५॥
निजं कायं समुत्सृज्य परकायप्रवेशनम् ।
२० अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् ॥१९६॥
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ।
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं
विशिष्यते ॥१९७॥

१ ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनुत्तमा ।
ध्यानप्रकरणं ह्येतत् षडशीत्यधिकं शतम् ॥१९८॥
इति श्रीवृद्धयोगियाज्ञवल्क्ये अध्यात्मनिर्णयो नाम
नवमोऽध्यायः ॥९॥

---

१.-२. च्छान्तिरन्तरम् गीता. १२. १२.; इतः परं 'मार्जनं प्राण...' इत्या (१०. १) यर्धमनन्तरं ध्यानप्रकरणं ह्येतदित्या (९.१९८) यर्धं तदनन्तरं 'योगयाज्ञवल्क्यध्यानप्रकरणं नाम ॥०॥ इति समाप्तिद्योतकं वाक्यम् ड.

३.-४. इति श्रीयोगयाज्ञवल्क्ये अध्यात्म........आ.



मार्जनं प्राणसंरोधो ध्यानं च समुदाहृतम् ।
उपस्थानं प्रवक्ष्यामि सूर्यस्य क्रियते यथा ॥ १ ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
५ सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २ ॥
उदुत्यं चित्रमित्याभ्यां प्रक्षिपेदुदकाञ्जलिः ।
गायत्र्यास्तु जपं कृत्वा पूर्वमेव यथाविधि ॥ ३ ॥
उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ।
वक्ष्यमाणैः प्रयत्नेन सूर्यस्य विपयाद्बुधः ॥ ४ ॥
१० उदुत्यं चित्रं देवानामुद्वयं तमसः परि ।
तच्चक्षुर्देव इति च जपं कुर्यात्तु वै ऋचा ॥ ५ ॥
उद्गादित्ययं मन्त्र आकृष्णेनेति वै ऋचा ।
इष्टं मनः प्रयुञ्जीत भक्त्या तानि जपेत् सदा ॥ ६ ॥
एतैर्मन्त्रैः प्रयुञ्जीत शक्त्याऽन्यानि जपेत् सदा ।
१५ दश त्रिंशत् शतं वापि गायत्र्याः परिवर्तयेत् ॥७॥
अहोरात्रं कृतं ह्येनस्तत् सर्वं विप्रणश्यति ।

---

२.-३. याज्ञ. १. २२, वीमि. २६९,२७०, योगीश्वरवचनामिति, मद. ६१
८. सं. ५७, वासिष्ठवचनामिति पमा. १. १. पृ. २९७
१० सं. ५७
११. ...इति च ह्येकचकेति वैधि च सं. ५७
१२. सं. ५७
१३. तृप्तात्मा संप्रयुञ्जीत शक्त्यान्यानि जपेत् सदा ।
संध्याद्वयेप्युपस्थानमेवमाहुर्मनीषिणः ।
तदसंयुक्तपाणिर्वा ह्येकपादो द्विपादपि ॥ सं. ५७

१ पूर्वां संध्यां जपंस्तिष्ठेन्नैशमेनो व्यपोहति ॥८॥
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ।
जपिनां होमिनां चैव ध्यायिनां तीर्थसेविनाम् ॥९॥
न पर्युषन्ति पापानि ये च स्नाताः शिरोव्रतैः ।
५ नास्ति गङ्गासमं तीर्थं न देवः केशवात् परः ॥१०॥
गायत्र्यास्तु परं जप्यं न भूतं न भविष्यति ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥११॥
गायत्रीं च जपन् विप्रो न स पापेन लिप्यते ।
पूर्वां संध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात् ।
१० पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥१२॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥१३॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥१४॥

---

१. मनु. २. १०२
२. मनु.२. १०२
३. वसिष्ठस्मृ. २६. १३
४. न परिवसन्ति वसिष्ठस्मृ. २६. १३
६. यमवचनमिति स्मृच. १५१
७. अत्रि. २.९
८....त्रीं यो जपेद्विप्रो अत्रि. २. ९; ...त्रीं च जपेन्नित्यं सर्वपापप्रणाशिनीम् स्मृच. १५१
११.–१२. मनु. २. ८६, वसिष्ठस्मृ. २६. ११
१३.–१४. मनु. २. ८५; आरम्भयज्ञाज्जप...अत्रिस्मृ. २. ७, वसिष्ठस्मृ. २६. १



१ जपेनैव हि संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥१५॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥१६॥
५ गायत्रीजप्यनिरता ब्राह्मणा ब्रह्मचिन्तकाः ।
सूर्योपस्थाननिरतास्तस्य सायुज्यभागिनः ॥१७॥
एवंविधास्तु ये संध्यामुपतिष्ठन्ति ते द्विजाः ।
नोदकस्य तु विक्षेपात् संध्या भवति सिद्धिदा ॥१८॥
ओंकारस्य तु गायत्र्या व्याहृतीनां शिरस्यपि ।
१० प्राणायामस्य संध्याया आत्मज्ञानस्य चैव हि ॥१९॥
मार्जनस्य च जप्यस्य ब्रह्मणः परिचिन्तनात् ।
चतुर्णां चैव वेदानां साङ्गानां पारगो भवेत् ॥२०॥
स भवेत् सर्वविद्यानां पारगो नात्र संशयः ॥४॥

इति श्रीबृहद्योगियाज्ञवल्क्ये सूर्योपस्थाननिर्णयो नाम दशमोऽध्यायः ॥१०॥

---

१.–२. बृया. ७. १३०; जप्येनैव तु... उच्यते मनु. २.८७; वसिष्ठस्मृ २६. १२.; जप्येनैव...मन्त्रो ब्रा.... ब्रह्मसूत्र शां. भा. ४. ३.३८
३.–४. अत्रिस्मृ. २. १०; वसिष्ठस्मृ. २६. १७
१३. अत्र आदर्शपुस्तके ॥४॥ इत्ययं संकेतः किमर्थमागत इति न ज्ञायते ।

## एकादशोऽध्यायः

सर्वधर्मान् परित्यज्य योगधर्मं समाचरेत् ।
सर्वे धर्माः सदोषास्तु पुनरुत्पत्तिकारकाः ॥१॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
५ स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥२॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥३॥
आत्मज्ञानं हि यो वेत्ति स सर्वज्ञः स सर्वकृत् ।
एवं ज्ञात्वा प्रयत्नेन योगयुक्तः सदा भवेत् ॥४॥
१० अकृतान्येव यज्ञाश्च दानानि च तपांसि च ।
तेषां फलं तु संयोज्य लोकान् सोमानव(नु?)क्रमात् ॥५॥
भुक्त्वा गच्छति तत्स्थानं यद् गत्वा न निवर्तते ।
पुरुषो भुनक्ति भोगाननौपम्यान् गुणोदयान् ॥६॥
सर्गप्रलयकाले तु न नश्येन्न भवेत्तु सः ।
१५ ऋचोऽक्षरे परमे व्योम्नि यस्मिन् देवा अधिविश्वे निषेदुः ॥
यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥७॥
रथ्याघोषेण संतुष्टो वाक्प्रलापरतः सदा ।
२० रात्रिंदिवं प्रलपते मत्तो मार्जारवद्यथा ॥८॥

४.-५. गीता २. ४०
६.-७. गीता २. ४६
१६.-१७. ...परमे व्योमन् ऋ. १., १६४. ९



१ वेदादौ यो भवेद्वर्णः पञ्चवर्णसमन्वितः ।
तस्यान्ते तु पदं षष्ठं तज्ज्ञात्वा वेदविद्भवेत् ॥९॥
अगतिं च गतिं चैव भूतानां विन्दते तु यः ।
प्रकृतीनां विकाराणां स भवेद्वेदपारगः ॥१०॥
५ पारं गतस्तु तत्त्वानां तत्त्वातीतं तु वेत्ति यः ।
स पारग इति प्रोक्तो न स्वाध्यायस्य पारगः ॥११॥
समाम्नायैकदेशं तु गुह्योपनिषदादि च ।
विन्दते पठते चैव ह्यनुतिष्ठति कर्मणा ॥१२॥
स मे बहुमते(तो) भाति बहुविद्यासुशोभितः ।
१० स मुक्तिभाक् स एवैकः श्रद्धायुक्तो जितेन्द्रियः ॥१३॥
षडङ्गं षट्पदं वर्णं हृत्पद्मस्थं तु वेद यः ।
षडङ्गवित् स विज्ञेयो नाङ्गयोगी षडङ्गवित् ॥१४॥
केवलं लोकवृत्त्यर्थं पठितं वृत्तिहेतुकम् ।
१५ कदर्थयति वेदांश्च कुप्रतिग्रहयाजनैः ॥१५॥
असंयमेन येऽधीता न त्रायन्ति कदाचन ।
ऋगेका संयमस्थेन अधीता पारयत्यपि ॥१६॥
आमपात्रे यथा न्यस्तमापो मधु घृतं पयः ।
नश्यन्ति पात्रदौर्बल्यात्तं रसास्तस्य भाजनम् ॥१७॥
२० एवं ह्यपात्रसंयोगात्तदधीतं विनश्यति ।
पात्रदोषेण संदुष्टमपवित्रं भविष्यति ॥१८॥

९. सुशोभितः आ.
१७. संयमस्तेन आ.

१ न वेदबलमाश्रित्य पापं कर्म समाचरेत् ।
अज्ञानाद्धि कृतं पापं वेदाभ्यासेन शुद्ध्यति ॥१९॥
आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः ।
५ छन्दांस्येनं मृत्युकाले त्यजन्ति
नीडं शकुन्ता इव जातपक्षाः ॥२०॥
गायत्रीमात्रसंतुष्टः श्रेयान् विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी ॥२१॥
न विद्यया केवलया तपसा वा पवित्रता ।
१० यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥२२॥
यथा रथो विनाश्वैः स्यादश्वाश्च रथिना विना ।
एवं तपो ह्यविद्यस्य विद्या चाप्यतपस्विनः ॥२३॥
यथान्नं मधुसर्पिभ्यां संयुक्तं स्वादुतां व्रजेत् ।
एवं विद्यातपोयोगैर्ब्राह्मणः पात्रतां व्रजेत् ॥२४॥
१५ द्विविधं तु समुद्दिष्टं गुह्यं ब्रह्म सनातनम् ।
स्थूलसूक्ष्मं च बोद्धव्यं ब्राह्मणेन प्रयत्नतः ॥२५॥

---

१. पापकर्मरुचिर्भवेत् मनु. १२. १०१ प्रक्षिप्तः
२. अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् मनु. १२. १०१ प्रक्षिप्तः
३.-६. वसिष्ठस्मृ. ६. ३
७. मात्रसारोऽपि वरं विप्रः मनु. २. ११८
८. तस्त्रिवेदोऽपि सर्वाशी मनु. २. ११८
११. यथाऽश्वा रथहीनास्तु रथाश्चाश्वैर्विना यथा अत्रि. २. ११; हारीतवचनमिति अप. ९६२; यथाऽश्वा रथहीनाः स्यू रथो वाऽश्वैर्विना यथा वसिष्ठस्मृ. २६. १८
१२. एवं तपोऽप्यविद्यस्य अत्रि. २. ११; हारीतवचनमिति अप. ९६२; तपस्त्वविद्यस्य विद्या वाप्यतपस्विनः वसिष्ठस्मृ. २६. १८



१ ऋचो यजूंषि चान्यानि सामानि विविधानि च ।
एवं ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२६॥
आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स तु ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२७॥
५ पलालधान्यशूकादि तुषकणसमन्वितम् ।
यत् स्थूलं तादृशं ज्ञेयं सूक्ष्मं तण्डुलवत् स्मृतम् ॥२८॥
वाक्प्रपञ्चं तु यत् स्थूलं शब्दब्रह्म महत्तरम् ।
त्रिवर्गफलदं ज्ञेयं यदि सम्यगधीयते ॥२९॥
वेदोऽधीतो ददच्छुद्धिं श्रंशितो नरकप्रदः ।
१० न्यायेनेष्टो ददत् स्वर्गं पुनरावृत्तिकारकम् ॥३०॥
सूक्ष्मं तत् परमं गुह्यं त्रयं ब्रह्म सनातनम् ।
वेदवेदान्तयोः सारं त्रिविधं ब्रह्मणो मुखम् ॥३१॥
मोक्षदं तु समुद्दिष्टं विदितं नात्र संशयः ।
षट्कर्मणामनुष्ठानादाश्रमाणां च सेवनात् ॥३२॥
१५ तपसा वा सुतीव्रेण सर्वविद्याविवेचनात् ।
मोक्षावाप्तिस्तु न भवेदृते ज्ञानाच्च कर्मणः ॥३३॥
इज्याचारो दमोऽहिंसा दानं स्वाध्यायकर्म च ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥३४॥
चत्वारो वेदधर्मज्ञा यत्र त्रैविध(द्य)मेव वा ।

---

१०. ...ष्टो नयेत् स्वर्गं इ.
१५. तपसा याजनात् ध्यानात् इ.
१६. ॥३४॥आ. इतःपरमादर्शपुस्तके श्लोकसङ्ख्या मुद्रितसङ्ख्यातः एकाधिका
१७. ...चारदमाहिंसादानस्वाध्यायकर्मणाम् याज्ञ. १. ८
१८. याज्ञ. १. ८
१९. ...धर्मज्ञाः पर्षत्त्रैविद्य... याज्ञ. १. ९

१ स ब्रूते यः स धर्मः स्यादेको वाध्यात्मवित्तमः ॥३५॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः ॥३६॥
ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः ।
५ कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥३७॥
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥३८॥
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।
निःश्रेयसकरं ज्ञेयं द्विजानामिह सर्वशः ॥३९॥
१० कर्मणां समनुष्ठानमाश्रमाणां च सेवनम् ।
पुत्रदारादिसंसक्तिः प्रवृत्तं कर्म चोच्यते ॥४०॥
नियमानामनुष्ठानं सम्यगात्मविचिन्तनम् ।
सुतादिष्वनभिष्वङ्गो निवृत्तं कर्म वैदिकम् ॥४१॥
प्रवृत्तं सेवमानस्तु स्वर्गलोके महीयते ।
१५ निवृत्तं सेवमानस्तु ब्रह्मभूयाय कल्पते ॥४२॥
न तमः कारणं किञ्चिद्योगधर्मे प्रवर्तते ।
आनन्तर्यात् प्रमाणं तु सर्वमेतदकारणम् ॥४३॥

---

१. ब्रूते यं स याज्ञ. १. ९
२.–३. मनु. १. ९६
४.–५. मनु. १. ९७
६.–७. मनु. १.८५; ॥४०॥ आ. इतः परमादर्शपुस्तके श्लोकसङ्ख्या मुद्रितसङ्ख्यातः द्व्यधिका ।
८...त्तं च निवृत्तं च...मनु. १२. ८८
१४. प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् मनु. १२. ९०
१५. निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै मनु. १२. ९०



१ ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
आत्मज्ञानेन मुच्यन्ते यत्र तत्राऽऽश्रमे रताः ॥४४॥
स्वकर्मणामनुष्ठानात् सम्यगात्मनि दर्शनात् ।
वेदान्तानां परिज्ञानाद् गृहस्थोऽपि हि मुच्यते ॥४५॥
५ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमेवार्च्य सिद्धिं प्राप्नोति मानवः ॥४६॥
कर्मसंन्यासयोगेन ब्राह्मणः सिद्धिमाप्नुयात् ।
कर्मणां नियतानां तु त्यागो नैव विधीयते ॥४७॥
तेषां कर्मफलत्यागः स त्याग इति कीर्त्यते ।
१० ब्रह्मप्रधानकर्मस्था न सीदन्ति कदाचन ॥४८॥
मृत्तोयैः शुद्ध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टाः संन्यासेन द्विजोत्तमाः ॥४९॥
गण्डोपलादयो भूत्वा पदमन्यद्विगच्छति ।
ध्यानेनात्मनि संपश्येद् गतिमस्यान्तरात्मनः ॥५०॥
१५ प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥५१॥

---

३. अप. ९६०; कर्मणां स्वमनु...आ.
४. ...पि विमुच्यते अप. ९६०; गृहसंस्थोपि मुच्यते इ.
५.–६. तमभ्यर्च्य सिद्धिं विन्दति गीता. १८. ४६
८. ...तु योगेनैव आ. नियतानां तु कर्मणां त्यागो नैवेह विद्यते इ.
११.-१२. मनु. ५. १०८
१४. ध्यानयोगेन संप...मनु. ६. ७३
१५.–१६. मनु. ६. ७९

१ ।ध्यानेनात्मनि पश्येच्च सर्वांश्च सुसमाहितः ।
पश्यन् हि योगयुक्तात्मा मुनिर्मोक्षपरायणः ॥५२॥
खं संनिवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ।
पङ्क्तिदृष्टयोः परं तेजः स्नेहयोगश्च मूर्तिषु ॥५३॥
५ वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ।
मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ॥५४॥
प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥५५॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
१० इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥५६॥

इति श्रीबृहद्योगियाज्ञवल्क्ये ( योगधर्मनिर्णयो नाम ) एकादशोऽध्यायः ॥११॥

३. मनु. १२. १२०
४. पाक्ति....स्नेहेऽपो गां च मूर्तिषु मनु. १२. १२०
५.-६. मनु. १२. १२१
७.-८. मनु. १२. १२२
९.-१०. मनु. १२. १२३
११. कुण्डालितः पाठः आदर्शपुस्तके नास्ति ।



न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते ।
सर्वं विनिःसृतं शास्त्रं वेदशास्त्रात् सनातनात् ॥१॥
दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते ।
५ तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम ॥२॥
पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥३॥
सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विचालयेत् ॥४॥
१० सांख्यस्य कर्ता कपिलः परमार्थः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥५॥
पञ्चरात्रस्य सर्वस्य वक्ता नारायणः स्वयम् ।

२. वीमि. परि. २०
३. निःसृतं सर्वशास्त्रं तु वेद...वीमि. परि. २०
४. दुर्बोध्यं वीमि. परि. २०; ... ध्येतुंनैव आ.
५. वीमि. परि. २०
६. पुराणन्याय ... याज्ञ. १. ३, वीमि. परि. २०
७. वीमि. परि. २०
८. वीमि. परि. २१; योगः पञ्च... अप. १. ७ ; शान्ति.३४९.६४
९....नं विरोधयेत् वीमि. परि. २१; ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै शान्ति. ३४९.६४
१०. वक्ता कपिलः परमर्षिः स...शान्ति. ३४९.६५, वीमि. परि. २०
११. वाचस्पतियोगटीका १. १; योगस्य वेत्ता शान्ति. ३४९.६५, वीमि. परि. २१
१२. पाञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान् स्वयम् शान्ति. ३४९.६८; वक्ता तु भगवान् वीमि. परि. २१

१ अपान्तरतमश्चैव वेदाचार्यः स उच्यते ॥६॥
प्राचीनगर्भं तमृषिं प्रवदन्ति हि केचन ।
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः ॥७॥
प्रोक्तवानिदमत्युग्रं ज्ञानं पाशुपतं हरः ।
५ अत ऊर्ध्वं तु ये केचिद्वेदशास्त्राण्यनेकशः ॥८॥
बौद्धः कापिलकुहकौ लोकायतिकभिक्षकाः ।
वेदबाह्यास्तथान्ये तु तामसा आशिवास्तु ते ॥९॥
नैरात्म(त्म्य)वादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
वेदशास्त्रं तु बाधन्ते पौरुषेयास्तु ते स्मृताः ॥१०॥
१० आसुरेयाः पाशुपता बृहस्पतिकृतास्तु ये ।
शुक्रं रूपं समास्थाय देवानां हितकाम्यया ॥११॥
प्रजापतिकृताश्चान्ये असुराणां प्रमोहनाः ।
येनेदं वाङ्मयं दुग्धमधर्मे विफलीकृतम् ॥१२॥
आत्मानं भूषयेन्नित्यं भोजनाच्छादनादिभिः ।
१५ स्वदेहमेव दैवत्यमन्यन्नैवात्र विद्यते ॥१३॥
असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम् ।
अयं लोकोऽस्ति न परः पुनः संभवनं कुतः ॥१४॥
जलबुद्बुदवच्चायं संभवेच्च पुनः पुनः ।
स्वेच्छयोत्पद्यते चैव स्वेच्छया च प्रलीयते ॥१५॥

१. बीमि. परि. २१;...तमाध्येव शान्ति. ३४९. ६६
२. वीमि. परि. २१ ; प्रवदन्तीह शान्ति. ३४९. ६७
३. उमापतिर्भूतपातिः वीमि. परि. २१, शान्ति. ३४९.६७
४. उक्तवानिदमध्यग्रो...पतं शिवः वीमि. परि. २१, शान्ति. ३४९.६७
१६. गीताकारमोरपाठः;...ष्ठं ते जग...गीता. १६. ८



१ जातिप्राधान्यकं नास्ति एकजातिसमुद्भवः ।
न वेदा नैव यज्ञाश्च न दानं न तपांसि च ॥१६॥
न कार्यं नैव चाकार्यं सर्वं कुर्यादशङ्कया ।
एतदासुरकं भावं समाश्रित्य विनश्यति ॥१७॥
५ नैयायिकार्थमालोक्य तथाहीश्वरकारणम् ।
प्रतिष्ठानानि वेदस्य एते तर्का उदाहृताः ॥१८॥
प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥१९॥
यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।
१० स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥२०॥
तस्माद्वेदादृते नान्यदध्येतव्यं द्विजन्मना ।
वेदबाह्यं तु यत् किञ्चिन्नाध्येतव्यं कदाचन ॥२१॥
या वेदबाह्याः स्मृतयो याः काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥२२॥
१५ उत्पद्यन्ते व्ययन्ते च यानि तानि तु कानिचित् ।
एतान्यर्वाक्कालिकानि निष्फलान्यनृतानि च ॥२३॥
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥२४॥
मूलस्तम्भो भवेद्वेदः शाखाश्चान्यानि यानि तु ।

१. एतावानेव ग्रन्थांशः समुपलभ्यते इ. पुस्तके ।
७.-८. मनु. १२. १०५
९.-१०. मनु. २. ७.
१३.-१४ याश्च काश्च कु...मनु. १२. ९५
१७.-१८. मनु. १२.१६८

१ मूले ह्युपासिते सम्यक् फलं भवति नान्यथा ॥२५॥
उच्छिन्नशाखा याः काश्चित्तथा वेदान्तराणि च ।
अन्तर्धानगतानीह स्मृत्वा तु स्मृतयः कृताः॥ २६ ॥
एकमेव हि विज्ञेयं श्रुतिस्मृतिविचक्षणैः ।
५ तस्मात्तुल्यबलत्वात्तु विकल्पश्च क्वचित् स्मृतः ॥२७॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥२८॥
योऽवमन्येत ते तूभे हेतुशास्त्राश्रयो द्विजः ।
स विद्वद्भिर्बहिः कार्यो नास्तिको वेदनिन्दकः ॥२९॥
१० हेतुशास्त्राणि योऽधीते वेदबाह्यो भवेद्द्विजः ।
तेन नास्तिक्यभावेन सर्वे(र्वं)मन्येत सोऽन्यथा ॥३०॥
तीर्थं दानं व्रतं यज्ञा वेदा विप्राश्च देवताः ।
स्वर्गापवर्गहेतूनि कुदृष्ट्या पश्यतेऽनृतम् ॥३१॥
नास्तिक्यभावान्मूढात्मा पापेषु कुरुते मतिम् ।
श्रुतिस्मृत्युदितं त्यक्त्वा ततो नरकमृच्छति ॥३२॥
१५ अज्ञानतमसाऽन्धानां भ्रामितानां कुदृष्टिभिः ।
न प्रत्यक्षं भवेत्तेषां वेदविद्यान्तरं तु यत् । ॥३३॥
वेदांश्चैव तु वेदाङ्गान् वेदान्तानि तथा स्मृतिः(तीः)।
अधीत्य ब्राह्मणः पूर्वं शक्तितोऽन्यांश्च संपठेत् ॥३४॥
आत्मज्ञाननिमित्तं तु सिद्धान्तानि विचिन्तयेत् ।

६-७. मनु. २. १०
८...ते मूले.. श्रयाद् द्विजः मनु. २. ११
९. साधुभिर्ब...मनु. २. ११
१९. निमित्तं हि सिद्धांता (न् हि ) नि...अप. १६



१ केवलानि तु योऽधीते वेदबाह्यो भवेद् द्विजः ॥३५॥
वेदान्तान्यः पठेद्विप्रश्चतुरश्चानुपूर्वशः ।
तथा शाखोपशाखानि गुह्यान्यादेशकानि च ॥३६॥
सर्ववेदप्रणीतानि मन्त्रांश्चापि पवित्रकान् ।
५ स सर्वविद्भवेद्विप्रो वेदवेदान्तपारगः ॥३७॥
तथा चात्मगुणैर्युक्त आत्मोपासनतत्परः ।
वेदतुल्यो भवेत् सोऽपि ऋषितुल्यो द्विजोत्तमः ॥३८॥
एकेनापि भवेत्तेन सर्वधर्मविनिश्चयः ।
पङ्क्तिं पावयते चैव उद्धरिष्यत्यनुग्रहात् ॥३९॥
१० अनन्तं चाप्रमेयं च वेदशास्त्रं सनातनम् ।
वेदितव्यं प्रयत्नेन सर्ववर्गफलप्रदम् ॥४०॥
वेदमेव समभ्यस्येद्वेदश्चक्षुः सनातनम् ।
भूतं भव्यं भविष्यं च सर्वं वेदप्रतिष्ठितम् ॥४१॥
अनन्तं चाप्रमाणं च सर्वं वेदात् प्रसिध्यति ।
१५ इति संचिन्त्य मुनिना वेदाचार्येण धीमता ॥
याज्ञवल्क्येन विप्राणां त्रयीमार्गः प्रदर्शितः ॥४२॥
येन गच्छन्ति विद्वांसः सत्पथा ब्रह्मणोऽन्तिकम् ।
असत्पथेन विप्रस्य गमनं हि विरुध्यते ॥४३॥
वेदान्तानां हि सर्वेषां या निष्ठा समुदाहृता ।
२० उपास्या यादृशी चैव मुनिना समुदाहृता ॥४४॥
ओंकारस्याथ गायत्र्या व्याहृतीनां शिरस्य च
स्नानस्य चैव संध्यायाः प्राणायामस्य चैव हि ॥४५॥

१. केवलानि यदाधीते अप. १७

१ प्रत्याहारस्य ध्यानस्य मार्जनान्तर्जलस्य च ।
उपस्थानस्य होमस्य आत्मज्ञानस्य यो विधिः ॥४६॥
विद्याऽविद्याविचारं च त्रयीविद्याभिशंसनम् ।
तत् सर्वं मुनिना प्रोक्तं विप्राणां हितकाम्यया ॥४७॥
५ य इदं धारयेद्विप्रः स्वधीतं शृणुयाच्च यः ।
मया स ते तु यः प्रोक्तं(?)सोऽमृतत्वाय कल्पते॥४८॥
सर्वाणि भूतानि ममान्तराणि सर्वेषु भूतेष्वहमन्तरस्थः।
पश्यन्ति ये योगविदो मनुष्यास्तेषां प्रदेयं न तु
योऽन्यथा स्यात् ॥४९॥

१० इति श्रीबृहद्योगियाज्ञवल्क्ये ( विद्याऽविद्या-
निर्णयो नाम ) द्वादशोऽध्यायः॥१२॥

---

११ ...ध्यायःसमाप्तः आ, कुण्डलितः पाठः आदर्शपुस्तके नास्ति। ॥श्रीरस्तुः॥ ॥कल्याणमस्तुः॥ ॥ शुभं भवतुः॥ इतिवाक्यत्रयमाधिकम् आ.

## परिशिष्टम् १

[ अत्र परिशिष्टे आदर्शपुस्तकेऽनुपलभ्यमानानां परन्तु निबंधकारैर्योगियाज्ञवल्क्यीयत्वेन निर्दिष्टानां वचनानामकाराद्यनुक्रमेण सङ्ग्रहः कृतः । तत्र च श्लोकाधस्तात् (  ) एतादृककुण्डलमध्ये संपादकसंकलिता टिप्पणी वर्तेत इत्यवधेयम् । ]

१. अग्नौ हुतं च दत्तं च देवतार्चनमेव च ।
हस्तन्यासप्रभावेन सर्वं भवति वाऽक्षयम् ॥
स्मृच. १९८

२. अङ्गुष्ठस्य तु मध्यस्थं परिवर्तं समाचरेत्
( परिवर्तं, भ्रमणमित्यर्थः ) आर. ४७

३. अङ्गुष्ठे चैव गोविन्दं तर्जन्यां तु महीधरम् ।
मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥
कनिष्ठिक्यां न्यसेद्विष्णुं हस्तमध्ये च माधवम् ।
स्मृच. १९८

४. अजा गौर्महिषी चैव ब्राह्मणी च प्रसूतिका ।
भूमेर्नवोदकं चैव दशरात्रेण शुद्ध्यति ॥
सम. ९२

५. अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ॥
मद. २९२

६. अधौतेन च वस्त्रेण नित्यनैमित्तिकीं क्रियाम् ।
कुर्वन् फलं न चाप्नोति दत्तं भवति निष्फलम् ॥
स्मृत. ३६४

७. अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नर ॥
हे. ३. १. पृ. ९१९, आर. २४, वीमि. ३४४, स्मृच. १९२,
याज्ञवल्क्यवचनमिति मद. २९०

८. अनामिकामध्यरेखामादिं कृत्वा क्रमेण तु ।
तर्जन्यादिगताऽन्ते च अक्षमाला करे स्थिता ॥
मद. ८१

९. अनोङ्कृत्य कृतं सर्वं न भवेत् सिद्धिकारणम् ।
आर. ४ *

१०. अपसव्यं ततः कृत्वा भूत्वा च पितृदिङ्मुखः ।
पितॄन् दिव्यानादिव्यांश्च पितृतीर्थेन तर्पयेत् ॥
मद. २९२

११. अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥
मद. २९९

१२. अरुणिदवा चरेत् स्नानं मध्याह्नात् प्राग्विशेषतः ।
प्रयतो मृदमादाय दूर्वामार्द्रं च गोमयम् ॥
मद. २४३

१३. अर्घ्यश्चतुर्थ्या दातव्यः पञ्चम्याऽऽचमनीयकम् ।
षष्ठया स्नानं प्रदातव्यं सप्तम्या वस्त्रमेव च ॥
मद. ३००

( चतुर्थ्या पुरुषसूक्तीयर्चा इति शेषः एवमग्रेऽपि पञ्च-म्यादौ योज्यम् ।)

१४. अर्चयित्वा तु देवेशं षोडश्या तु विसर्जयेत् ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥
मद. ३००

१५. अलाभे देवखातानां सरितां सरसां तथा ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥
आर. २७



१६. आचमनं स्वकीयमार्गेण कृत्वा ऋषिच्छन्दोदेवता-स्मरणपूर्वकं आपोहिष्ठादितृचस्यादितः सप्तभिः पादै-रूर्ध्वं सप्त विप्रुष उत्क्षिप्य अष्टमेनैकां विप्रुषमूर्ध्वं उत्क्षिपेत् ।
. ३१५

१७. आथर्वणे समुद्दिष्ट उदात्तो नात्र संशयः
आर. ४०

१८. आद्ययाऽऽवाहयेद्देवं कृत्वा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥
मद. २९९

[ आद्यया, पुरुषसूक्तीयया ऋचा इति शेषः ]

१९. आनुष्टुभस्य सूक्तस्य त्रिष्टुभं तस्य देवता ।
पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ॥
मद. २९९

२०. आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते ॥
अप. ४४६

२१. आपोहिष्ठेति तिसृभिर्ऋग्भिस्तु प्रयतः शुचिः ।
नवप्रणवयुक्ताभिर्जलं शिरसि निःक्षिपेत् ॥
वीमि. २७१, मद. ६९,...ऋग्भिःसंप्रयतः शुचिः स्मृच. १३७,
शिरसि मार्जयेत् आर. ४०

२२. आसत्यर्धु च पूर्वे द्वे त्रिष्टुभौ कवयो विदुः ।
गायत्री तु तृतीया स्याच्चतुर्थी जगती तथा ॥
वै. ३७८

२३. इडया वायुमारोप्य ग्राह्यं द्वादशमात्रकम् ।
पूरयित्वोदरं तेन नासाग्रनयनद्वयम् ।
ध्यायन् विरेचयेत् पश्चान्मन्दं पिङ्गलया पुनः ॥
वै. ३२४

२४. इन्द्रो धाता भगः पूषा मित्रोथ वरुणो यमः।
अर्चिर्विवस्वान् त्वष्टा च सविता विष्णुरेव च ॥
एते वै द्वादशादित्या देवानां प्रवरा मताः ॥
मद. २९३

२५. उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी।
ब्राह्मणैः समनुज्ञाता गच्छ देवि यथासुखम्॥
मद. ७५ स्मृत. ३९०

२६. उपस्थानादिर्यस्तासां मन्त्रवान् कीर्तितो विधिः।
निवेदनान्तं तत् स्नानमित्याहुर्ब्रह्मवादिनः ॥
वीमि. १९२; ३४०; वृया. ७. १०८

२७. उभावप्यशुची स्यातां दम्पती शयनं गतौ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥

२८. उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥
आर. ४५ *

२९. उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥
मद. २८४

३०. उभाभ्यामपि हस्ताभ्यामपराजितादिङ्मुखः।
संपृक्ताङ्गुष्ठकाभ्यां तु सव्योत्र क्रममेव वा ॥
स्मृच. १९१; सव्योपग्रहमेव वा हे. ३. १. पृ. ९२९

३१. उष्णिक् तच्च क्षुराद्यस्य छन्द इत्युच्यते बुधैः।
हिरण्यस्तूप इत्येष ऋषिर्देवोत्र भास्करः।
वै. ३७६

३२. एकहस्तेन तोयेन न कुर्यात् पितृतर्पणम्।
पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः ॥
मद. २८४



३३. एतेषां संभवे वापि कुर्यात् सूर्यादिदर्शनम्।
आचम्य वा जपेत् शेषं कृत्वा वा प्राणसंयमम् ॥
आर. ४५*
(एतेषां श्वनीचादीनामित्यर्थः)

३४. एवं न्यासविधिं कृत्वा पश्चाद्योगो विधीयते।
मद. २९९

३५. ओंकारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च।
गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः।
एषा संपुटगायत्री सर्वपापप्रणाशिनी ॥
वै. ३३८-३९

३६. कामात् मोहात् भयाल्लोभात् संध्यां नातिक्रमेत् द्विजः।
संध्यातिक्रमणाद्विप्रो ब्राह्मण्यात् पतितो यतः ॥
वै. ३१२

३७. कौशेयं वाऽथवा चर्म चैलं मूलमथापि वा।
आर. ३८
(आसनं परिकल्पयेदित्यध्याहारः)

३८. क्रोधो मदः क्षुधा तन्द्रा निष्ठीवनविजृम्भणे।
श्वनीचदर्शनं निद्रा प्रलापश्च जपद्विषः ॥
आर. ४५*

३९. गङ्गायां यमुनायां च कावेर्यां च शतद्रुतौ।
सरस्वत्यां विशेषेण अस्थीनि विसृजेत् सुतः ॥
वै. ६०९

३९अ. गुणा दश स्नानपरस्य साध्ये रूपं च तेजश्च
बलं च शौचम्।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च
तपश्च मेधा॥
हे. ३.१. पृ. ८५०

४०. ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥
स्मृच. १२०, वीमि. १६६. वै. २७०, हे. ३. १. पृ. ८६०

४१. घृतयुक्तैस्तिलैर्वह्नौ हुत्वा तु सुसमाहितः ।
गायत्र्याः प्रयतः शुद्धः सर्वपापैः प्रमुच्यते ॥
वै. ३३६

४२. चतुर्णामपि वेदानां गायत्री जननी भवेत् ।
तामुपास्ते तु (यो) नित्यं स विप्रः पङ्क्तिपावनः ॥
वै. ३३५

४३. चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥
पमा. १.२. पृ. १५३, योया. १.२९

४४. जपेद्वेदादिमेकाग्रस्तटे ब्रह्माञ्जलिः शनैः ।
ब्रह्मयज्ञप्रसिद्ध्यर्थं ब्रह्मविद्यामथापि वा ।
जप्त्वा वा प्रणवं शक्त्या ततस्तर्पणमाचरेत् ॥
स्मृच. १९१, हे. ३. १. पृ. ९१७

४५. जपे होमे तथा दाने दैव्ये पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्ष्यां शेषे काले यथेच्छया ॥
अप. ४६१

४६. जलपूर्णं तु चुलुकं नासिकाग्रे विधृत्य च ।
प्राणान्निरुन्धन् द्रुपदां पठित्वा तज्जलं क्षिपेत् ॥
आर. ४१

४७. जानुमूलं तु वस्त्रं स्यात् त्रिकच्छं धारयेद्बुधः ।
आर. ३४

४८. ततः सूर्यमुपस्थाय सम्यगाचम्य च स्वयम् ।
अभ्युक्षणं समादाय संयतात्मा गृहं व्रजेत् ॥
मद. २९७



४९. तर्पणं शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः
स्मृत. ५०१

५०. तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ।
वै. २४९

५१. तिष्ठन् यदा जपं कुर्याद्धस्तौ हृदयसंमितः ।
आसीन जप एव स्याज्जानुमात्रेण संमितः ॥
आर. ४५*

५२. तिसृभिर्मध्यमाभिर्मध्यमाभिर्मुखं पूर्वं तिसृभिः
समुपस्पृशेत् ।
( मध्यमाभिरिति । अङ्गुलीभिरिति शेषः )
वै. २२६

५३. तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥
पमा. १. १. पृ. २७९, वै. २९७, स्मृच. १२१;
आचम्य च ततः वीमि. २३१; आचम्य तु स्मृत. ३५६

५४. तृचस्यान्तेऽथवा कुर्यादृषीणां मतमीदृशम् ।
आर. ४१*

५५. तृप्यन्त्विति समुच्चार्य तृप्यतामित्यथापि वा ।
विधिज्ञः प्रक्षिपेत्तोयं देवादीनामशेषतः ॥
मद. २८८;...दिन विषे...स्मृच. १९१;
जातुकर्ण्यवचनमिति हे. ३. १. पृ. ९३८

५६. त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ॥
मद. २९९
( त्रयोदशीमिति । पुरुषसूक्तस्यां ऋचमिति शेषः )

५७. त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन ॥
मद. २४७; दशम्यां चैव सर्वदा आर. २९*

५८. त्रयोदश्यां तृतीयायां प्रतिपन्नवमीद्वये ।
तैलाभ्यङ्गं न कुर्वीत कुर्युर्वा नवमीं विना ॥
हे. ३. २. पृ. ७१९ ; वीमि. सम. २५३

५९. दग्धं जीर्णं च मलिनं मूषकोपहृतं तथा ।
खादितं गोमहिष्याद्यैस्तत्त्याज्यं सर्वथा द्विजैः ॥
आर. ३३ *
( दग्धादि वासः परिधानाय त्याज्यमित्यन्वयः। )

६०. दर्शे स्नानं न कुर्वीत मातापित्रोश्च जीवतोः ।
पुत्रः कुर्वन्निराचष्टे तयोरुन्नतिजीविते ॥
मद. २४७; पित्रोस्तु जीवतोः आर. २९* सुजीवतोः वीमि. १६२

६१. द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदाक्षिणम् ॥
( पुरुषसूक्तस्य ऋचा इति शेषः ) मद. ३००

६२. धात्रीफलैरमावास्या-सप्तमी-नवमीषु च ।
यः स्नायात्तस्य हीयन्ते तेज आयुर्धनं सुताः ॥
वीमि. १७९, स्मृच. १२६; न स्नायात्तस्य...सुतः
वै.२८०; ...फलेन यः स्नायात् सप्तमी हे. ३.२. पृ. ७१५

६३. ध्रुवोऽध्रुवश्च साम्यश्च आपश्चैवानिलोऽनलः ।
प्रत्यूपश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
मद. २९२

६४. न गायत्र्या समो मन्त्रो न जपो वैदिकात् परः ।
वासुदेवात् परो देवो नेति व्यासः समब्रवीत् ॥
मद. ८३

६५. न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत् ।
मद. २९४

६६. न तावत् पापमेधीत यन्नाम्ना न हतं हरेः ।
अतिरेकभयादाहुः प्रायश्चित्तान्तरं वृथा ॥
वै. ३५१; मधेत वै. ९३४



६७. नद्यामस्तमिते स्नानं वर्जयेत्तु सदा बुधः ।
नद्यां स्नात्वा नदीमन्यां न प्रशंसेत धर्मवित् ॥
वै. १५७

६८. आपोहिष्ठेति तिसृभिर्ऋग्भिः संप्रयतः शुचिः ।
नवप्रणवयुक्ताभिर्जलं शिरसि निक्षिपेत् ॥
स्मृच. १३७; अयं श्लोकः पूर्वोत्तरार्धयोर्व्यत्यासेन दृश्यते वै. ३१५

६९. नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं कण्ठदेशे वामबाहौ ततः परम् ॥
मद. २९९

७०. निवेदयेत्तदात्मानं तद्विष्णोरिति मन्त्रतः ।
आर. ८०

७१. पञ्चमीं वामजानौ तु षष्ठीं वा दक्षिणे न्यसेत् ।
सप्तमीं वामभागे तु अष्टमीं दक्षिणे न्यसेत् ॥
( पुरुषसूक्तीयानृचामिति शेषः ) मद. २९९

७२. पञ्चम्यां च चतुर्दश्यां सप्तम्यां रविसंक्रमे ।
द्वादशीं सप्तमीं षष्ठीं तैलस्पर्शे विवर्जयेत् ॥
वे.मि. सम. २५३; पञ्चदश्यां...तैलस्पर्शं हे. ३.२ पृ ७१९

७३. पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः ।
वासो गृहान्तिके देयमनुवासश्च रक्षणम् ॥
मद. ८४३; देयमन्नं वासः सरक्षणम् याज्ञ. ३.२९६

७४. परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्म्ये कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥
वीमि. परि. ८२; अप. ४६१; स्मृत. ३६४
ह्यासुरी मता, याज्ञवल्क्यवचनमिति आर. ३४
धर्मकर्माणि, याज्ञवल्क्यवचनामिति हे. दान. ९१

७५. पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत् ।
अनन्तर्गर्भितं नाग्रच्छिन्नं प्रादेशसंमितं ॥

मद. ५७'१; अन्तर्दर्भे कुशाच्छिन्ने कौशे स्मृच. श्रा. ४४५, पमा. १ ४०६; अन्तर्गर्भे कुशच्छन्ने कौशे अप. ४८०; स्थेतिमन्त्रेण....नान्तर्गर्भे कुशाच्छिन्ने कौशे प्रादेशसम्मिते हे. ३.१. पृ. ६३५

७६. प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्॥
( पुरुषसूक्तीयामृचमिति शेषः ) मद. २९९

७७. प्रणवादिसमायुक्तं नमस्कारान्तकीर्तितम्।
स्वनाम सर्वदेवानां मन्त्र इत्यभिधीयते॥
अनेनैव विधानेन गंधपुष्पे निवेदयेत्।
स्मृत. ३९८

७७अ. प्रथमे कर्कटे देवी त्र्यहं गङ्गा रजस्वला।
सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी॥
हे. ३. १. पृ. ८७१

७८. प्रसार्य पादौ न जपेत् कुक्कुटासन एव च।
गतासनः शयानो वा रथ्यायां शूद्रसंनिधौ॥
आर. ४५

७९. प्राणायामत्रयं कार्यं संध्यास्वथ तिसृष्वपि।
सायमग्निश्चमेत्युक्त्वा प्रातः सूर्यश्च मा पिबेत्॥
आपः पुनन्तु मध्याह्वे ततश्चाचमनं चरेत्॥
अप. ४६

८०. प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः।
यतेस्त्रिषवणं स्नानं सकृत्तु ब्रह्मचारिणः॥
मद. ६१; प्रातः संक्षेपतः स्नानं ग. २१३. ५९-६०

८१. प्रातःसंध्याङ्गभूतेन गायत्र्या जपितेन च।
यथासंख्येन जप्येन ब्रह्मा मे प्रीयतां रविः॥
७५. मद
( अनेन मन्त्रेण जप्यनिवेदनं कुर्यादिति शेषः। )



८४. प्रातस्तिष्ठन् जपेत्।
वै. ३३७

८५. बाह्यानि करणानि प्रत्याहृत्यान्तःकरणं चात्मनि प्रतिष्ठाप्य स्फटिकमणिकल्पे चित्तदर्पणे प्रतिबिम्बमात्मानमुपाधेर्निष्कृष्य स्वे महिम्नि स्थितं सच्चिदानंदमहमस्मि इति किंचित्कालं ध्यायेत्।
वै. ३२०

८६. ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत्।
वानप्रस्थो यतिश्चैव सहस्राद्धिकं जपेत्॥
स्मृच. १५१, आर. ४६,* वै. ३३८, पमा. १.१.३०८

८७. ब्रह्मणोपास्यते संध्या विष्णुना शंकरेण च।
कस्मान्नोपासयेद्देवीं श्रेयस्कामो द्विजोत्तमः॥
वै. ३१०

८८. ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्।
जप्त्वा च प्रणवं वापि ततस्तर्पणमाचरेत्
मद. ९८१

८९. ब्राह्मणं विनियोगं च छन्द आर्षं च दैवतम्।
अज्ञात्वा पश्च यः कुर्यात् न स तत्फलमश्नुते॥
वै. ३१६, स्मृच. १३६

९०. भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम्।
ततोऽपि सारस पुण्यं तस्मान्नादेयमुच्यते॥
तीर्थतोयं ततः पुण्यं ततो गाङ्गं तु सर्वतः॥
आम. २५

९१. मत्स्यकच्छपमण्डूकास्तोयमग्ना दिवानिशम्।
वसन्ति चैव ते स्नानान्नाप्नुवन्ति फलं क्वचित्॥
स्मृच. १८१, पमा १.१. २७१; वसन्तोऽपि च ते...नादेनि कर्हिचित्। हे. ३.१. पृ. ८८३

९२. मध्यमादिद्वयं पर्व जपकाले तु वर्जयेत् ।
एवं मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वयम् ॥
मद. ७५

९३. मध्यमाभिर्मुखं पूर्वं तिसृभिः समुपस्पृशेत् ॥
स्मृचौः स्मृच. ९७; चन्द्रिकायां योगयाज्ञवल्क्यः आर. १७*

९४. मृदा स्नानं न कुर्वीत रात्रिसंध्यागृहेषु च ।
विधिज्ञः स्नानकालेषु तथा भौमार्कवारयोः ॥
मद. २४५

९५. मोहात् प्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः सह हीयते ॥
हे. ३.२ पृ. ७१९ वीमि. सम. २५३

९६. यज्ञोपवीतमष्टम्या नवम्या त्वनुलेपनम् ।
पुष्पं दशम्या दातव्यं एकादश्या तु धूपकम् ॥
(अष्टम्या पुरुषसूक्तीयया ऋचा इति शेषः। एवमग्रेऽपि नवम्यादौ बोध्यम्)
मद. २००

९७. यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुपवीतं स्याद्वस्त्रालाभे तदिष्यते ।
मद. २७५

९८. यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत् ।
अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः ।
स्मृत. ३१९

९९. यस्तु तां केवलां संध्यामुपासीत स पुण्यभाक् ।
तां परित्यज्य कर्माणि कुर्वन्नाप्नोति किल्बिषम् ॥
वीमि. २५८, वै. ३१२.

१००. याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति
वै. २४५, स्मृच. १०९



१०१. येऽर्चयन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते ॥
स्मृच. २००

१०२. रजोदुष्टेम्भसि स्नानं वर्ज्यं नद्यादिषु द्विजैः ।
कदर्थितं रजस्तेषां संध्योपास्तिश्च तर्पणम्॥
सम. ९२

१०३. रिक्तभूम्यां च खट्वायां न जपेज्जापकः स्वयम् ।
आसनस्थो जपेत् सम्यक् मन्त्रार्थगतमानसः ॥
आर. ४५

१०४. रौद्रपित्र्यासुरान् मन्त्रांस्तथा चैवाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥
वीमि. परि. ९१
दैवाभिचारिकान्, याज्ञवल्क्यवचनमिति हे. दान पृ. १०७,व्रत. पृ.३९

१०५. वसून् रुद्रांस्तथादित्यान्नमोङ्कारसमन्वितम् ।
वै. ३७८

१०६. वापीकूपगृहस्नाने सूतके मृतके तथा ।
मासोच्चारं न कुर्वीत तज्जलं रुधिरं भवेत्॥
आर. ५९

१०७. वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्यदृक्
सहस्राष्टाधिकां जप्त्वा गायत्रीं जलसंस्थितः ॥
मद. ७३८; दिवा तिष्ठन् ...जप्त्वा सहस्रं गायत्र्याः शुद्ध्येद्ब्रह्मवधादृते याज्ञ. ३.३११; वायुभक्षो दिनं स्थित्वा...त्वा तु सूर्यदृक्। जप्त्वा सहस्रं गायत्र्याः शुचिर्ब्रह्मवधादृते वै. ३३५.

१०८. विधिदृष्टं तु यत् कर्म करोत्यविधिना तु यः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥
वीमि. परि. ७१; न फलं हे. ३.१ पृ. ८८६

१०९. विधिहीनं भवेद्दुष्टं कृतमश्रद्धया तु यत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः ॥
स्मृत. ४७८; भावदुष्टं...द्धया च यत्...ह्यकृतात्मनः हे. दान. ८८; त्वकृतात्मनः हे. ३.१ पृ. ८८४

११०. विश्वतश्चक्षुरिति मन्त्रेण जपान्ते भास्करं द्विजः ।
कुर्यात् प्रदक्षिणं चैव उपविश्यासने ततः ॥
देवा गातुविदो मन्त्रात् कुर्याज्जपविसर्जनम् ॥
मद. ७५

१११. वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां त्वाध्यात्मिकीं जपेत् ॥
स्मृच. १९०

११२ शिरसः प्रजापतिऋषिर्यजुश्छन्दो विवक्षितम् ।
ब्रह्माग्निवायुसूर्याश्च देवताः समुदाहृताः ।
प्राणायामप्रयोगे तु विनियोग उदाहृत ॥
वै.३२५ बृया. ४.९

११३. शिवे निवेदितं भक्तं सालग्रामादिवेष्टिते ।
तद्भक्तभोजने चान्द्रं कृतवान्नात्र संशयः ।
अन्यथा मांसतुल्यं स्यात्तत्तोयमसृजा समम् ॥
वै. ९१२

११४. श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥
स्मृच. ४७६, हे. दान. ८८; शुचि शुद्धेन हे.३.१ पृ. ८८४

११५. षडङ्गन्यास इत्येके उत्तरे पुरुषसूक्तके । अद्भ्यः संभूत इति हृदयाय नमः । वेदाहमिति शिरसे स्वाहा । प्रजापतिश्चरतीति शिखायै वषट् । यो देवेभ्य इति कवचाय हुम् । रुचं ब्राह्ममिति नेत्रत्रयाय वौषट् । श्रीश्चेत्यस्त्राय फट् ।
आर. ८०



११६. संध्ययोरुभयोः काले ध्यात्वा विष्णुं सनातनम् ।
निर्मलात्मा स्थितो दर्भे गायत्रीमारभेत्ततः ॥
वै. ३२०

११७. सकृदावर्तयन् विप्रः संसारादपि मुच्यते ।
(गायत्रीमिति शेषः)
वै. ३२६

११८. संक्रान्त्यादिनिमित्तेषु स्नानाङ्गे तर्पणे द्विजः ।
तिथिवारानपिद्धेपि तिलैस्तर्पणमाचरेत् ॥
आर. ६३

११९. सप्तव्याहृतिपूर्वां चेदाद्यन्तप्रणवान्विताम् ।
मनसा वा जपेच्चैव दशकृत्वो वरः स्मृतः ॥
वै. ३३८

१२०. सप्तव्याहृतिभिः सार्द्धं सप्रोंकारसमन्वितम् ।
शिरसा सहितां देवीं प्राणायामे नियोजयेत् ॥
आर. ३०

१२१. सव्याहृतिकां गायत्रीं प्रणवं वा जले जपेत् ।
ध्यायेन्नारायणं देवं सर्वपापप्रशान्तये ॥
वै. ६२१

१२२. स हन्ति सूर्यं संध्याया नोपास्तिं कुरुते तु यः ।
ये हिंसन्ति सदा सूर्यं मोक्षद्वारमनुत्तमम् ।
कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम् ॥
वै. ३१२

१२३. सहस्रकृत्वः सावित्रीं जपेदव्यग्रमानसः ।
शतकृत्वोऽपि वा सम्यक् प्राणायामपरो यदि ॥
वै. ३३८

१२४. स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याच्छ्राद्धं भोजनसत्क्रियाः ॥
स्मृच. ११४; ...द्धभोजन हे.३.१ पृ.९१३

१२५. हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥
वै. २७७

# परिशिष्टम् २

## टिप्पणी

[ अत्र परिशिष्टे मूलस्थाः केचन श्लोका विवृताः संपादकेन । ]

### प्रथमोऽध्यायः

**श्लोकसंख्या**

२३. **स्मृतिसिद्धान्तयोरपीति** । स्मृतयः प्रसिद्धा मन्वादिप्रणीताः । सिद्धान्तास्तु हिरण्यगर्भ--कपिलादिप्रोक्ता मतविशेषाः । ते च द्वितीयाध्याये ( बृया. २. ६७-६८ ) वक्ष्यन्ते । स्मृतिसिद्धान्तयोरित्यत्र द्विवचनं तु प्रातिस्विकजात्यैक्याभिप्रायेणेति वेदितव्यम् ।

२७. **वेदितव्यमिति** । अत्र आर्षादिज्ञानमेवावश्यकत्वेन प्रतिपादितं न तु कर्मकाले तत्पठनमपीति सुधीभिर्विभावनीयम् । ऋग्वेदसर्वानुक्रमण्यामपि ' ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो...न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः । मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छतीति । एताभ्यामेवानेवंविदो यातयामानि च्छन्दांसि भवन्ति । स्थाणुं वर्च्छति, गर्तं वा पात्यते, प्रमीयते वा पापीयान् भवतीति विज्ञायते । ' इति प्रस्तावे एतदेव प्रतिपादितं वेदितव्यम् । एवं च कर्मकाले ऋष्यादिपठनं नावश्यकम् । अत एव वीरमित्रोदये ( परि. पृ. ८९ ) ' एतेषां ज्ञानमात्रं शास्त्रार्थः न तु तत्प्रतिपादकशब्दोच्चारणं मानाभावात् । प्रत्युत तत्पाठे न्यायप्राप्तानन्तर्यबाधात् कर्मवैगुण्यम् ' इति प्रतिपादितं संगच्छते ।

३० **श्रुतिनिदर्शनमिति** । अत्र श्रुतिः ' यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात् । ' इति आर्षेयब्राह्मणे ( १.१ ) प्रसिद्धा । स्मृतिरप्यत्रविषये

' अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वाऽपि पापीयान् जायते तु सः ॥



ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥ '

इति ऋग्वेदसायणभाष्यप्रस्तावनायामुपलभ्यते ।

३४. **रहस्येषु**, रहस्यजपादिकर्मस्वित्यर्थः ।

४०. **आत्मा संछादितो देवैरित्यादि** । अत्रात्मशब्दस्य देहवाचकत्वं स्पष्टमेव । अत्र श्लोके प्रतिपादितमैतिह्यं ' देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम् ' इत्यत्र छान्दोग्ये ( १.४.२ ) समुपलभ्यते । अन्यदप्यैतिह्यं ' प्रजापतिरग्निमचिनुत । स क्षुरपविर्भूत्वाऽतिष्ठत् । तं देवा बिभ्यतो नोपायन् । ते छन्दोभिरात्मानं छादयित्वोपायन् । तच्छन्दसां छन्दस्त्वम् । ' इति तैत्तिरीयाः ( तैसं. ५.६.६.१ ) समामनन्ति ।

४४. **पञ्चविधं योगमिति** । ऋषिच्छन्दोदेवताविनियोगब्राह्मणानां पञ्चानां मन्त्रेण संबन्धं जपकाले स्मरेदित्यर्थः । **अन्तर्जले** अन्तर्जलकार्ये स्नानादावित्यर्थः । " **योगे** योगाङ्गप्रणवजपादौ " इति वीरमित्रोदये ( वीमि. परि. पृ. ८८ )

### द्वितीयोऽध्यायः

**श्लोकसंख्या**

३.-५. अत्र प्रणवस्यार्षादिप्रतिपादकम्—

' प्रणवस्य ब्रह्म ऋषिर्देवोऽग्निस्तस्य कथ्यते ।
गायत्री च भवेत् छन्दो नियोगः सर्वकर्मसु ॥ '( स्मृत. ३८६ )

इति संवर्तवचनमनुसंधानार्हम् ।

४३. **क्लेशकर्मेत्यादि** । अत्र ' क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति योगसूत्रम् ( १.२४ ) अनुसंधानार्हम् । सूत्रेऽस्मिन्नाशयशब्दो दृश्यते, बृया.स्मृतौ तु तत्स्थाने वासनाशब्दः इति यद्यपि वैरूप्यं तथापि एतत्सूत्रस्थाशयपदव्याख्यानावसरे ' तदनुगुणा ( विपाकानुगुणा ) वासना आशयाः ' इति व्यासभाष्ये प्रतिपादितत्वात् वैरूप्यमिदमुपेक्षार्हमित्यवधार्यम् । पुरुषं

**हीश्वरंश्रुतिरिति** । एतादृगीश्वरप्रतिपादिका श्रुतिः कुत्र वर्तत इत्यन्वेषणीयमेव ।

४४. **वाचकः प्रणवः स्मृत इति** । अत्र ' तस्य वाचकः प्रणवः ' इति योगसूत्रम् ( १.२७ ) अनुसंधानार्हम् ।

६८. **भेदैस्त्रिषष्टिभिरिति** । एते च भेदा अस्मिन्नेवाध्याये इतःप्रभृति १०५तमश्लोकपर्यन्तं विस्तरेण प्रतिपादिताः । ' एवं त्रिषष्टिभेदैस्तु ' इति १०६तमश्लोके उपसंहारदर्शनात् ।

७८. **स्वरितोदात्त इति** । अत्र एतत्समानार्थकानि वचनान्यधिमाण्यनुसंधानार्हाणि--
' स्वरितोदात्त एकाक्षर ओंकार ऋग्वेदे, त्रैस्वर्योदात्त एकाक्षर ओंकारो यजुर्वेदे, दीर्घप्लुतोदात्त एकाक्षर ओंकारः सामवेदे, ह्रस्वोदात्त एकाक्षर ओंकारोऽथर्ववेदे । ' ( गोपथब्रा पू १.२५ )

' ऋग्वेदे स्वरितोदात्त उदात्तश्च यजुःश्रुतौ ।
सामवेदे स विज्ञेयो दीर्घः स प्लुत एव च ॥ '
( वृद्धपराशरः, आर ४०० )

१०२. **त्रिव्यूह इति** । अत्र

' एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः ।
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ॥ '

इति महाभारतस्थं (शान्ति. ३४८५७. ) वचनमनुसंधानार्हम् ।

११३. **दश नामानीति** । एतेषां तु नैरुक्तमस्मिन्नेवाध्याये अव्यवहितोत्तरश्लोकमारभ्य १२६तमश्लोकपर्यन्तं वर्णितं वेदितव्यम् ।

१३१. अत्र श्लोके भगवानिति याज्ञवल्क्यविशेषणदर्शनादस्याः स्मृतेः संकलनकर्ता याज्ञवल्क्यभिन्नः कश्चिदस्तीति तर्क्यते । यद्यपि स्वनामनिर्देशपूर्वकं स्वमतोल्लेखः स्वग्रन्थे दृष्टचरः, तथापि तादृशे स्थले भगवानित्यादि गौरवद्योतकं विशेषणं ग्रन्थकारैर्न प्रयुज्यते इति विभावनीयम् । अमात्रः प्रणवो माण्डूक्यादौ ' अमात्रश्चतुर्थो ' इत्यादिरूपेण ( माण्डू १२ ) प्रतिपादित एव ।

१४१.–१५१. अत्र श्लोके **प्रोक्षणे**त्यादि सप्तम्यन्तानां 'ओमित्यादौ प्रयुज्यते ' इत्यनेनान्वयः । **प्रोक्षणे**त्यत्र प्रोक्षणं ' ओं प्रोक्ष ' इति ब्राह्मणः अध्वर्युं प्रति



प्रैषः । पोषणेत्यत्र पोषणम् 'ओं प्रणय' इति ब्रह्मणोऽध्वर्युं प्रति प्रैष इति प्रतिभाति । **प्रतिष्ठाने**त्यत्र प्रतिष्ठानं नाम ' ओं प्रतिष्ठ ' इति ब्रह्मणोऽध्वर्युं प्रति प्रैषः । **प्रतिग्रहे**त्यत्र प्रतिग्रहो नाम ऋत्विग्भिर्दक्षिणाप्रतिग्रह इत्यवधेयम् । **आश्रावणे**त्यत्र आश्रावणम् नाम ' आश्रावय ' इत्यध्वर्योराग्नीध्रं प्रति प्रैषः । **वषट्कारे**त्यत्र वषट्कारो नाम 'वौषट् ' इति होतुर्याज्यान्ते उक्तिविशेषः । **प्रत्याश्रावे**त्यत्र प्रत्याश्रावो नाम 'अस्तु श्रौषट् ' इति देवानुद्दिश्य आग्नीध्रप्रोक्त उक्तिविशेषः । **स्तोत्रशस्त्रयोरि**त्यत्र स्तोत्रं तृचे गीयमानः सामविशेषः, शस्त्रं तु सूक्तशंसनमित्यवधेयम् । अत्र आश्रावणादीनां प्रणवपूर्वकत्वप्रतिपादनं ' ओश्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओंशोमिति शस्त्राणि शंसन्ति ' ( तै. उ. १.८ ) इत्यादिश्रुतिप्रतिपादितमेव । याज्ञिकैस्तु " वौषट् " " अस्तु श्रौषट् " एतौ प्रैषौ प्रणवरहितावेव प्रयुज्येते । श्रौतसूत्रकारा अपि याज्ञिकसंप्रदायमेवानुमोदन्ते । एवं च मूले प्रत्याश्रावे वषट्कारे च यदुक्तमोङ्कारपूर्वकत्वं तत् कथं संगच्छते इति चिन्तनीयम् ।

## तृतीयोऽध्यायः

श्लोकसंख्या

६. **महाव्याहृतयस्त्विति** । अत्र भूरादीनां सप्तानां महाव्याहृतित्वं प्रतिपादितम् । एतच्च ' आद्यास्तिस्रो महा प्रोक्ताः सर्वत्रैव नियोजनात् ' इति बृहत्पराशर ( बृप. २.६२ )वचनविरुद्धमित्यवधेयम् । एतास्तु सप्त ( व्याहृतयः ) एते उपर्युपरि संस्थिता लोका इत्यन्वयः । उपर्युपरिस्थितानां भूर्भुवःस्वर्महर्जनस्तपःसत्यमिति सप्तानां लोकानां नामधेयान्येव सप्त व्याहृतय इत्यर्थः ।

## चतुर्थोऽध्यायः

श्लोकसंख्या

६. **वेदोपनिषच्छाखास्विति** । अत्र ' गायत्री वा इदं सर्वं भूतं यदिदं किं च ' इति छान्दोग्ये ( ३.१२.१ ) ' गायत्री वा इदं सर्वं यदिदं किं च ' इति नृसिंहपूर्वतापिन्युपनिषत्सु ( ४.३ ) च दृश्यमानं वचनमनुसंधेयम् ।

१८. अस्य श्लोकस्यार्थो नातीव स्फुटः ।

२१. अत्र श्लोके चतुर्थः पादः ' अलक्ष्यः शान्तिमांस्तु सः ' इत्यपि भवितुमर्हति ।

२९. **तेजोऽसीति विधानत इति** । तेजोऽसि तेजो मयि धेहीति मन्त्रेणेत्यर्थः ।

३५. अत्रत्या श्येनरूपेण गायत्र्याः सोमाहरणकथा ' कद्रूश्च वै सुपर्णी च ' (तैसं. ६.१.६) इत्यनुवाके ' तृतीयस्यामितो दिवि सोम आसीत् (तैब्रा. ३.२.१) इत्यनुवाके च प्रसिद्धा ।

५४. **रुद्रकूष्माण्डेत्यादि** । मन्त्रविशेषसंज्ञा एताः । तत्र रुद्रजप्यं प्रसिद्धं शत-रुद्रीयाख्यम् ' नमस्ते रुद्र मन्यव ' इत्यादि । कूष्माण्डमन्त्राः ' यद्देवा देव हेडनम् ' इत्याद्याः । सौरा मन्त्राः 'नमो मित्रस्य' इत्यादयः । आर्णका मन्त्राः ' ऋचं वाचं प्रपद्ये ' इत्याद्या आरण्यकमन्त्राः ।

५५. **विरजाजप्यै**रित्यत्र विरजाजप्यम् विरजामन्त्राः ' ज्योतिरहं विरजा विपाप्मा ' इत्यादयः ।

५५–५६. अत्र ब्रह्महत्या, सुरापानं, सुवर्णस्तेयं, गुरुदारगमनं चेति चत्वार्येव महापातकानि निर्दिष्टानि । ततश्च 'संसर्गश्चापि तैः सह' (मनु.११.५४) यश्च तैः सह संवसेत् (याज्ञ. ३.२२७) इत्यादिना मन्वादिभिरुक्तं महापातकिसंसर्गिणां महापातकित्वमस्य ग्रंथकारस्य संमतं नवेति विचारणी' यमेव । इतःपरं ६१तमे श्लोकेऽपि महापातकिसंसर्गिणां नास्त्युल्लेख इत्यवधेयम् ।

५६. **संकीर्णमिति** । अशुद्धमित्यर्थः ।

६१. **गोघ्नेत्यादि** । अत्र गुरुतल्पगादीनां महापातकित्वं यद्यपि सर्वसंमतं तथापि गोघ्नस्य न तथात्वम् मनुस्मृतौ (११.५९) याज्ञवल्क्यस्मृतौ (३.२३४) च गोवधस्य उपपातकेष्वेव परिगणनात् । एवं च महापातकिनां पङ्क्तौ प्रथमत एव गोघ्नस्योल्लेखः कथं संगच्छते इति चिन्तनीयम् । इतः पूर्वं ५५ तमे ५६ तमे च श्लोके चत्वार्येव महापातकानि प्रतिपादितानि सन्ति । तत्र गोवधोल्लेखः न दृश्यते ।

## षष्ठोऽध्यायः

**श्लोकसंख्या**

५. **ऋचस्तिस्र इति** । ' आपो हि ष्ठा मयोभुव ' इत्येका ' यो वः शिवतम- इत्यपरा ' तस्मा अरं गमाम ' इत्यन्या एवं तिस्रः । अघमर्षणं सूक्तम् ' ऋतं च सत्यं च ' इत्यादि ।

१२–१५. **मंदेहा नाम राक्षसा इति** । इतः प्रभृति श्लोकचतुष्टयेन प्रतिपादि-



तोऽर्थः ' रक्षांसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त ' इत्याद्यनुवाके तैत्तिरी-यारण्यकस्थे (२.२) समुपलभ्यते ।

२८. **शन्न आपास्त्वित्यादि** । शन्न आपो धन्वन्याः इत्यादि मन्त्रेणेत्यर्थः । **द्रुपदा** इत्यनेन द्रुपदादिवेन्मुमुचान इत्यादि मन्त्रः सूचितः । **आपोहिष्ठे**-त्यनेन आपो हिष्ठेत्यादि मन्त्रत्रयात्मकं सूक्तं विवक्षितम् । अघमर्षणसूक्तं तु ऋतं च सत्यं चेत्यादि ऋक्त्रयात्मकं प्रसिद्धमेव । **एतैश्चतुर्भिरिति** । यद्यपि आपोहिष्ठेत्यादि मन्त्रत्रयं मन्त्रत्रयं चाघमर्षणीयामिति सर्वं मेलयित्वा संपूर्णा मन्त्रसंख्या अष्टपरिमिता भवन्त्यनश्चतुर्भिरिति न समञ्जसं तथापि ' आपोहि-ष्ठेति ऋक्त्रयात्मकसूक्तस्य अघमर्षणसूक्तस्य चैकत्वाभिप्रायेण चतुर्भिरित्युक्ता संख्या संगमनीया । ' इति वीरमित्रोदये (आह्निक पृ. १९४) समाधान-मस्याः शङ्काया वेदितव्यम् ।

## सप्तमोऽध्यायः

**श्लोकसंख्या**

१. **यत्त्वयोक्तमिति** । अयं खलु मुनीनां योगियाज्ञवल्क्यं प्रति प्रश्नः । स च स्नानमब्दैवतैर्मन्त्रैरिति प्रतीकेन सूचित एव । तच्च अस्यामेव स्मृतौ (६.२९) उपलभ्यते । तथापि तस्या उक्तेरतिसमीपभूतकालीनत्वात् ' पुरा त्वया उक्तम् ' इत्युल्लेखो न संगच्छते । अतः ' स्नानमब्दैवतैः ' इत्यादि याज्ञवल्क्यस्मृतिस्थ(१.२२)विधानपरामर्शकोऽयं प्रश्न इत्यङ्गीकर-णीयम् । तथा सति विद्यमानयाज्ञवल्क्यस्मृतिप्रणयनानन्तरं तेनैव याज्ञवल्क्ये-नेयं योगयाज्ञवल्क्यस्मृतिर्निबद्धा इत्यापतति । परंतु याज्ञवल्क्यस्मृतिस्थात् 'योगशास्त्रं च मत्प्रोक्तं ज्ञेयं' (३.११०) इति वचनादियं स्मृतिर्याज्ञव-ल्क्यस्मृतितः पूर्वं तेन प्रणीता इत्यापतति । विसंवादस्यास्याभिज्ञैः परिहारः करणीयः ।

६. **नदीमिति** । अत्र नदीलक्षणम् ' धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः ॥ ' इति कात्यायनोक्तादव-गन्तव्यम् ।

७. **उरुंहीति** । उरुं हि राजा वरुणश्चकारेत्यादि ऋचा इत्यर्थः ।

८. **सुमित्रिया इति** । सुमित्रिया न आप ओषधयः सन्त्विति यजुषा इत्यर्थः अयं च मन्त्रपाठः वाजसनेयीसंहितायाम् (३५.१२) दृश्यते । तैत्तिरीये तु

ज्ञानं च परमं गुह्यं यथावद्ब्रूहि मे प्रभो ।
मयैवमुक्तो द्रुहिणः स्वयंभूर्लोकनायकः ॥१९॥

मामालोक्य प्रसन्नात्मा ज्ञानकर्मण्यभाषत ।

ज्ञानस्य द्विविधौ ज्ञेयौ पन्थानौ वेदचोदितौ ॥२०॥

अनुष्ठितौ तौ विद्वद्भिः प्रवर्तकनिवर्तकौ ।
वर्णाश्रमोक्तं यत्कर्म कामसंकल्पपूर्वकम् ॥२१॥

प्रवर्तकं भवेदेतत्पुनरावृत्तिहेतुकम् ।
कर्तव्यमिति विध्युक्तं कर्म कामविवर्जितम् ॥२२॥

येन यत्क्रियते सम्यक् ज्ञानयुक्तं निवर्तकम् ।
निवर्तकं हि पुरुषं निवर्तयति जन्मतः ॥२३॥

•प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् ।
वर्णाश्रमोक्तं कर्मैव विध्युक्तं कामवर्जितम् ॥२४॥

---

१९/१-२-"ग१," लेखे प्रथमा पंक्तिः । १९/१-गर२—स्थानं च ———; गर३-यज्ञानां ——— । १९/३-ग४, ५, ६, क—मयैवमुक्तो दाक्षिण्यात् ; न४-ज्ञानानां गर२—मयैवमुक्तो हृषितः । १९/४-न१, ८-स्वयंभूर्लोकभावनः ।

२०/१-न१, २, ६, ७—समालोक्य—। २०/२-न१, २, ५, ७—कर्मज्ञानमभाषत ; ग१-ज्ञानं सर्वमभाषत ; गर२—ज्ञानमर्मं प्रभाषत ; न४-त्यक्तु(?)कर्माण्यभाषत ; ग१-कर्माण्यभाषत । २०/३-४-न४, ग३-× × × × । २०/३-न१, २, ७, ग१, २—जातस्य ——— । २०/४-ग६, त———श्रुतिचोदितौ ; गर२———श्रुतिवेदितौ ; न३ वेदनोदितौ ।

२१/१-न५, ७, ग५, ६ ——— च विद्वद्भिः ; गर२ ——— हि—; गर३——— तु——। २१/३-ग५, ६, क-वर्णाश्रमाणां यत्कर्म । २१/४-गर२-काम्य ———— ; ग६-कार-(?काम-) ————।

२२/३-४-न१, २— × × × × × × × ×।

२३-२७-"न१, २" लेखयोरेतेषु श्लोकेष्वतीव क्रमविपर्ययः सांकर्यं च दृश्येते । २३/१-न३, ४, ५, ६, ७, ८, ग३ ———— नित्यं ; ग५, ६, क— ———— कर्म : गर२-येन यत्क्षीयते सम्यक् । २३/४-न७—निवर्तयति जन्मना; ग१, २, ४, ५, ६, त———— जन्मनः ।

२४/१-गर२, ३, ४, न५, ६, ८, क-प्रवर्तकं तु सर्वत्र ; न४-प्रवर्तकं हि सर्वज्ञ (?); ग६-प्रवर्तयति सर्वत्र । २४/३-न६-वर्णाश्रमोक्तं सर्वत्र ; ग५, न८-वर्णाश्रमाणां कर्मैव ; क-वर्णाश्रमाणां कर्मैवं । २४/४-गर२- ———— काम्यवर्जितम् ; ग ४, ५—विधिवत्कामपूर्वकम् ; ग६-विध्युक्तं कामनार्जितम् ।



विधिवत्कुर्वतस्तस्य मुक्तिर्गार्गि करे स्थिता ।
वर्णाश्रमोक्तं कर्मैव विधिवत्कामपूर्वकम् ॥२५॥

येन यत्क्रियते तस्य गर्भवासः करे स्थितः ।
संसारभीरुभिस्तस्माद्विध्युक्तं कामवर्जितम् ॥२६॥

विधिवत्कर्म कर्तव्यं ज्ञानेन सह सर्वदा ।
जाताश्च त्रिषु लोकेषु आनुलोम्येन मानवाः ॥२७॥

ते देवानामृषीणां च पितृणामृणिनस्तथा ।
ऋषिभ्यो ब्रह्मचर्येण पितृभ्यश्च सुतैस्तथा ॥२८॥

कुर्याद्यज्ञेन देवेभ्यः स्वाश्रमं धर्ममाचरन् ।
चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ॥२९॥

क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः ।
अधीत्य वेदं वेदार्थं साङ्गोपांगं विधानतः ॥३०॥

---

२५/१-२-ग१, ४, ५, न४, त, क × × × × × × × ×। २५/१-गर२-विधिवृत्तवधस्तस्य(?); न३-विधिवत्कर्मतस्तस्य ; ग३-विधिवत्कर्मभिस्तस्य । २५/२-न३, गर२-मुक्तिमार्गः करे स्थितः ; ग३—मुक्तिं गार्गि करोति सा; ग६-मुने मुक्तिः करे स्थिता । २५/३-४-ग४- × × × × × × × ×। २५/३-ग५, ६, त-वर्णाश्रमोक्तं यत्कर्म। २५/४-न४, ग५, क × × × × ।

२६/१-२—न८, क × × × × × × × ×। २६/२—गर२, ३—भववासः करे स्थितः; ग१-गर्भवासो न संशयः; ग४-गर्भवासकरं स्थितम्। २६/३-४-गर२, ५, ६, त, क × × × × × × × × × ×।

२७/२-न४- × × ने सह सर्वदा ; ग३—ज्ञानिनः सह —— ; त-सह ज्ञानेन सर्वशः। २७/३-न१, ४, ५, ७, ८, ग४, ५, ६, क — ———— वर्णेषु ; ग१—तत्र च त्रिषु वर्णेषु ; गर२-जातस्य —— ; न३ ग३ —— जातश्च ——— ; न६-धाराश्च(?)——। २७/४-न१, २, ३-त्वानुलोम्येन मानवाः ; न८-त्वानु —— मानुषाः ; ग१-अनुलोमेषु —— ; गर२, ५, ६, न७-चानुलोम्येन ——— ; न ६—आनुलोम्येन मानवैः ; ग४-त्वानुलोम्येन मानुषाः ।

२८/१-न८-तथैवाहमृषीणां च(?) । २८/२-न२-पितृणामृणिनस्तदा ; त—पितृणामनृणाः स्मृताः ; न३-पितृणां च(?) ऋणिनस्तथा ; ग४ न८, क—पितृणामृणिनः सदा ; ग६-पितृणामर्यमा स्थितः । २८/३-४—ग४- × × × × × × × ×। २८/४-ग५, ६, क—पितृभ्यः स्वधया तथा ; न८-पितृभ्यः स्वसुतैस्तथा ; ग१-पितृभ्यः पुत्रयोगतः।

२९/१-न१, २, ४, ७, ग३—मुच्येद्यज्ञेन ———; ग४-कुर्युर्यज्ञेन ———— । २९/२-न१, २, ३, ४, ५, ६, ७, गर२, ३, ४, ५, ६—— धर्ममाचरेत् । २९/४-गर२, ४, ५, ६, न८, क—स्वाश्रमाः श्रुतिचोदिताः ।

३०/२-ग४, ५, ६, न७, ८, क—द्वावेको ———— । ३०/३-गर२, ३, न६—अधीत्य वेदं वेदांगं । ३०/४-न३, ४, ७, ८, क-सांगोपांगविधानतः ; न६—सांगं सार्थं——।

स्नायाद्विध्युक्तमार्गेण ब्रह्मचर्यव्रतं चरन् ।
संस्कृतायां सवर्णायां पुत्रमुत्पादयेत्ततः ॥३१॥

यजेदग्नौ तु विधिवद्भार्यया सह वा विना ।
कान्तारे विजने देशे फलमूलोदकान्विते ॥३२॥

तपश्चरन्वसेन्नित्यं साग्निहोत्रः समाहितः ।
आत्मन्यग्नीन्समारोप्य संन्यसेद्विधिना ततः ॥३३॥

संन्यासाश्रमसंयुक्तो नित्यं कर्म समाचरन् ।
यावत्क्षेत्री भवेत्तावद्यजेदात्मानमात्मनि ॥३४॥

क्षत्रियश्च चरेदेवमासंन्यासाश्रमात्सदा ।
वानप्रस्थाश्रमादेवं चरेद्वैश्यः समाहितः ॥३५॥

शूद्रः शुश्रूषया नित्यं गृहस्थाश्रममाचरेत् ।
शूद्रस्य ब्रह्मचर्यं च मुनिभिः कैश्चिदिष्यते ॥३६॥

---

३१/१—ग५—स्नात्वा विध्युक्तमार्गेण । ३१/२—न१, ३, ४, ग३—ब्रह्मचर्य व्रतं चरेत् । ३१/३—त, क ———— स्ववर्णायां; न६—स्वीकृतायां ——— । ३१/३-४—न३— × × × × × × × ×।

३२/१—ग४, न६—यजेदग्नौ तु विधिना ; ग५—क—यजेदसौ च— ; न३—यजेदाग्नेय— ; ग६—यजेदाग्नि च ——; न८—यजन्नाग्नौ तु—। ३२/२—न१, ४, ७—भार्यया सह वासितः ; न२, ५———— वासिनः ; न६, ८, ग४, ६, क——— वासिना ; ग२—भार्यया सहसा विना। ३२/१-२—ग३— × × × × × × × ×। ३२/३—न३—कान्तारे निर्जने देशे। ३२/३-४—ग३— × × × × × × × ×।

३३/१—ग१—तपश्चरेत्सपत्नीकः ; न६—तपश्चरन्निराहारः । ३३/२—न४—अग्निहोत्रसमन्वितः ; ग१—तां विना वा सहाग्निभिः ; न६—सर्वधर्मसमन्वितः ; न३—साग्निहोत्रसमन्वितः। ३३/१-२—ग३ × × × ×। ३३/३—न३, ग५—स्वात्मन्यग्नीन्समारोप्य । ३३/४—त—अभ्यसेद्विधिना ततः ३३/३-४—ग३— × × × × × × × ×।

३४/२—न३, ८, ग५, ६, क—नित्यं कर्म समाचरेत् ; न२ ———— समाचरे। ३४/१-२ ग३ × × × × × × ×। ३४/३—ग१—यावत्क्षेत्रं भवेत्तावत्; ग५, ६, त, क—यावत्क्षेमी —; न४—यावत्क्षेत्रे——; ग३—यावत्क्वेत्र (?त्क्षेत्र)———; न६—यावत्क्षेत्र × × ×। ३४/४—न१, २, ५, ७—यजेदात्मानमात्मना ।

३५/१—न३, ६, ग३———क्षत्रियस्तु चरेदेवं । ३५/२—ग१, २, ४, त—आसन्यासाश्रमात्तदा; न३, ६, ८—आसन्यासाश्रमं तथा; न४, ग३—आसन्यासाश्रमात्तथा; ग५, क—आसन्यासाश्रमं सदा; ग६—आसन्यासाश्रमं तदा । ३५/३—न३—वानप्रस्थाश्रमं नैवं ; ग३—वानप्रस्थाश्रमादेवं ; ग५, ६, न८, क—वानप्रस्थाश्रमात्पूर्वं ; त—वानप्रस्थाश्रमात्सर्वं ।

३६/१—ग१, ५—शूद्रः शुश्रूषयेन्नित्यं ; ग२—शूद्रः शुश्रूषयेदेवं ; न६—शूद्रः शुश्रूषते नित्यं ; न३—शुश्रूषय च तं नित्यं । ३६/२—ग२—गृहस्थाश्रममाचरन् । ३६/३—न६————ब्रह्मचर्या तु ; ग३————ब्रह्मचर्ये च । ३६।४ ग२—मुनिभिः कैश्चिदीर्यते ; ग३————कैश्चिदुच्यते ।



आनुलोम्यप्रसूतानां त्रयाणामाश्रमास्त्रयः ।
शूद्रवच्छूद्रजातानामाचारः कीर्तितो बुधैः ॥३७॥

चतुर्णामाश्रमस्थानामहन्यहनि नित्यशः ।
विध्युक्तं कर्म कर्तव्यं कामसंकल्पवर्जितम् ॥३८॥

तस्मात्त्वमपि योगीन्द्र स्वाश्रमं धर्ममाचरन् ।
श्रद्धया विधिवत्सम्यक् ज्ञानकर्म समाचर ॥३९॥

इति मे कर्मसर्वस्वं योगरूपं च तत्त्वतः ।
उपदिश्य ततो ब्रह्मा योगनिष्ठोऽभवत्स्वयम् ॥४०॥

श्रुत्वैतद्याज्ञवल्क्योक्तं वाक्यं गार्गी मुदान्विता ।
पुनः प्राह मुनिश्रेष्ठमृषिमध्ये वरानना ॥४१॥

*गार्ग्युवाच—

ज्ञानेन सहयोगीन्द्र विध्युक्तं कर्म कुर्वतः ।
त्वयोक्तं मुक्तिरस्तीति तयोर्ज्ञानं वद प्रभो ॥४२॥

---

३७/१-२—न३, ६, ८— × × × × × × × ×। ३७/१ न१, २, ५, ७, ग२—अनुलोम-प्रसूतानां : ग३—अनन्तोमे प्रसूतानां (?)। ३७/२ न१, २, ४, ७, ग३—त्रयाणामाश्रमाश्च ये ; ग५ क—वर्णानामाश्रमास्त्रयः ; त—वर्णानामाश्रमाः स्मृताः । ३७/३—न४, ग३—नान्यस्तु शूद्रजातीनां ; ग५, ६, क—स्त्रीजातीनां शूद्रवद्वा ; त—स्त्रीजातीनां च सर्वेषां । ३७/४—न१, २, ५, ७—आश्रमाः कीर्तिता बुधैः ; ग२, ५, त, क—आचारः कीर्त्यते———; न४, ग३—आश्रम(?) कीर्तितो———; ग५—आचारः कथ्यते———। ३७/३-४न३, ६, ८— × × × × × × × ×।

३९/१—न७————योगीन्द्रे ; न३, ५, ग४, ५, ६, क————विप्रेन्द्र ;— ३९/२—न१, २, ३, ४, ५, ६, ७, ग२, ३, ६, त, क—स्वाश्रमं धर्ममाचर । ३९/४—न२, ५, ६, ७, ग२, त—ज्ञानकर्म समाचरन् ; ग५—ज्ञानं कर्म समाचर ; ग६—ज्ञात्वा कर्म समाचर ।

४०/१—ग२—एवं मे————; ग४, न८——— इति मे योगसर्वस्वं । ४०/२—ग४, न८—कर्मयोगं च तत्त्वतः । ४०।३—न२— ————तदा—; ग५, क— ————तथा——— । ४०/४ न३—योगयुक्तोऽभवत्स्वयम् ।

४१/१—ग२—श्रुत्वैवं—; न६—श्रुत्वैदं(?)——— । ४१/२—न७—गार्गी मुनिमुदान्विता । ४१/४—न६—ऋषिमध्ये वरांगना । *ग२, ३, त— × × × ×; ग४—गार्गी ; ग५—गार्गिः ।

४२/३—न४—यत्त्वयोक्तं मुक्तिरिति । ४२/४—ग१, ३—तस्माज्ज्ञानं वद प्रभो ; ग५, ६—वद ज्ञानं मम प्रभो; त—यदज्ञानं(?) मम प्रभो ; ग२—ततो ज्ञानं वद प्रभो ; न३, ६—तयोर्ज्ञानं वदस्व भो ; ग४—तथा ज्ञानं वद प्रभो ; न८—यथा ज्ञानं वद प्रभो ।

भार्यया त्वेवमुक्तस्तु याज्ञवल्क्यस्तपोनिधिः ।
तां समालोक्य कृपया ज्ञानरूपमभाषत ॥४३॥

*याज्ञवल्क्य उवाच—

ज्ञानं योगात्मकं विद्धि योगश्चाष्टाङ्गसंयुतः ।
संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ॥४४॥

वक्ष्याम्यङ्गानि ते सम्यग्यथा पूर्वं मया श्रुतम् ।
समाहितमना गार्गि ऋषिभिः सह संश्रृणु ॥४५॥

यमश्च नियमश्चैव आसनं च तथैव च ।
प्राणायामस्तथा गार्गि प्रत्याहारश्च धारणा ॥४६॥

ध्यानं समाधिरेतानि योगाङ्गानि वरानने ।
यमश्च नियमश्चैव दशधा संप्रकीर्तितः ॥४७॥

आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम् ।
प्राणायामस्त्रिधा प्रोक्तः प्रत्याहारश्च पंचधा ॥४८॥

---

४३/१–न१, २, ६, ७, ग१, २, ३, ४, ६, त—भार्ययाप्येवमुक्तस्तु; न३–भार्यया त्वेव-मुक्तो हि ; ग५, क–भार्यया ह्येवमुक्तस्तु ; न८–भार्यया चैवमुक्तस्तु । ४३/२–ग२–याज्ञवल्क्यो महामुनिः । ४३/३–न५–स तामालोक्य कृपया ; क–त्वं समालोक्य विधिना(?) । ४३/४–ग१–ज्ञानजातमभाषत । *न१, ग१, २, ३, ४, त–भगवानुवाच ; न३, ६,–श्रीभगवानुवाच ; ग५, ६, न८– × × × ×।

४४/२–ग३, ४, ५—योगं चाष्टांगसंयुतम् ; क–योगं त्वष्टांगसंयुतम् ।

४५/३–ग४, न८–समाहितमना भूत्वा । ४५/४–त–मुनिभिः सहिता श्रृणु ; ग५, ६—मुनिभिः सह संश्रृणु ।

४६/२–न५–आसनानि———— । ४६/३–न१, ५, ८, ग१, २, ४, ५, क–प्राणायामा-स्तथा गार्गि ; न४–प्राणायामस्तथा प्रोक्तः । ४६/४–ग५—प्रत्याहारस्तु धारणा ।

४७/३–ग५—नियमश्च यमश्चैव । ४७/४–न६–दशधानुप्रकीर्तिताः ; ग४, ५–दशधानु-प्रकीर्तितः ; ग६–दशधा तु प्रकीर्तितौ ; न४–दशधा संप्रकीर्तितौ ; ग२, त—दशधा सुप्रकीर्तितः ; ग१–द्विधा संपरिकीर्तितौ ।

४८/२–ग१, ५, ६, न६–त्रयस्तेषूत्तमोत्तमाः ; न३, ४, ५, ७—त्रयमेतेषूत्तमोत्तमं ; ग४, न८, क–त्रयस्तेषूत्तमाः स्मृताः ; ग२–त्रीणि तेषूत्तमानि तु । ४८/३–ग१, २, ४, न५, ७–प्राणा-यामास्त्रिधा प्रोक्ताः ; ग३, ६—प्राणायामास्त्रयः प्रोक्ताः । ४८/४–न ४, ५, ६, ७, ८, ग३, ४, ५, ६, क—प्रत्याहारस्तु पंचधा ; ग१, २–प्रत्याहारश्चतुर्विधः ।



धारणा पंचधा प्रोक्ता ध्यानं षोढा प्रकीर्तितम् ।
त्रयं तेषूत्तमं प्रोक्तं समाधिस्त्वेकरूपकः ॥४९॥

बहुधा केचिदिच्छन्ति विस्तरेण पृथक् शृणु ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥५०॥

क्षमाधृतिर्मिताहारः शौचं त्वेते यमा दश ।
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ॥५१॥

अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ।
विध्युक्तं वेदहिंसा स्यात्क्लेशजन्मैव जन्तुषु ॥५२॥

वेदेनोक्तेऽपि हिंसास्यादभिचारादि कर्म यत् ।
सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् ॥५३॥

कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा ।
अस्तेयमिति सा प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ॥५४॥

---

४९/२–न४ ग३—ध्यानं च परिकीर्तितम् (न४–लेखकस्य टिप्पणी–ध्यानमपि पंचधेत्यर्थः ।) न५–ध्यानं षोढा च कोर्तितम् । ४९/३–ग१, ३, ४, ५, ६, न८, त, क–त्रयस्तेषूत्तमाः प्रोक्ताः ; ग२–त्रीणि तेषत्तमानि स्युः ; न४–त्रोगि तेषूत्तमान्याहुः । ४९/४–ग३, ४, न६, ८, त, क–समाधिस्त्वेकरूपतः ; ग२–समाधेस्त्वेकरूपता ।

५०/१–न४, ग३–मुनयः केचिदिच्छन्ति ; ग४ न८–बहुधा कैश्चिदुच्यन्ते (?)।

५१/२–न३, ग५, ६–शौचं चैते यमा दश ; क–शौचं चैते यमादयः न६, ८–शौचं चेति——। ५१/४–ग१—सर्वावस्थासु सर्वदा ।

५२/१–ग२–अक्लेशजनकं प्रोक्तं ; न३, ८, क–अक्लेशजननं प्रोक्ता। ५२/२–न६–अहिंसा गार्गि योगिभिः ; न१, २, ५, ६–अहिंसात्वेव योगिभिः ; न३–अहिंसा चैव योगिभिः । ५२/१–२–न४– × × × × × × × ×। ५२/३–त–विध्युक्ता चेर्दहिंसा स्यात् ; न५–विध्युक्तवेदहिंसा——; न४–अयुक्तं चेर्दहिंसा——; ग४–अयुक्ते————। ५२।४–न२–क्लेशं जन्मापि————; न१, २, ७–क्लेशजन्मापि————; ग५, ६, क–क्लेशगर्भैव——: त–क्लेशगर्भं च———; न६–क्लेशजन्मेव————। न८–केचिदिच्छन्ति——। ५२/३–४–न३– × × × × × × × ×।

५३/१–ग२–विधिनोक्तेन हिंसा स्यात् ; न६–चोदनोक्तेषु————; ग४–चोदनोक्तेष्व-हिंसा——; ग५–चोदनोक्तोऽपि (?)————; ग६–चोदनोक्तापि————; न३, ग१, त— × × × × । ५३/२–ग२–अभिचारादिकर्मकृत् ; ग५, ६, क– ———कर्मवत् ; ग४, न८–आभिचारादि कर्मसु; न३, ग१, त– × × × ×। ५३/३–ग४–सत्यं परहितं प्रोक्तं ; न८——————भाति (?भूत–)हितं———— । ५३/४–ग१, त–नियतार्थाभिभाषणम्; ग२–यथार्थं साभिभाषणम्; ग४–यथा न्यायाभिभाषणम्; न३–तद्यथार्थाभिभाषणम्; न८, क–स यथा-र्थाभिभाषणम् ।

५४/२–न१–परद्रव्येंषु निःस्पृहम्; ग३–परद्रव्येषु नित्यदा ; न७, ग५———————निःस्पृहः । ५४/१–२–ग२, न४– × × × × × × × × । ५४/३–ग६–अस्तेयमिति संप्रोक्तं ; न१, २, ५, ग३————————तत्प्रोक्तं । ५४/४–ग४, न८, क—मुनिभिस्तत्त्वदर्शिभिः । ५४/३–४–न४– × × × × × × × × ।

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ॥५५॥

ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ।
ब्रह्मचर्यं तु तत्प्रोक्तं तथैवारण्यवासिनाम् ॥५६॥

ऋतावृतौ स्वदारेषु संगतिर्या विधानतः ।
ब्रह्मचर्यं तु तत्प्रोक्तं गृहस्थाश्रमवासिनाम् ॥५७॥

राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्तितम् ।
विशां वृत्तवतां चैव केचिदिच्छन्ति पण्डिताः ॥५८॥

शुश्रूषैव तु शूद्रस्य ब्रह्मचर्यं प्रकीर्तितम् ।
शुश्रूषा वा गुरोर्नित्यं ब्रह्मचर्यमुदाहृतम् ॥५९॥

गुरवः पंच सर्वेषां चतुर्णां श्रुतिचोदिताः ।
माता पिता तथाचार्यो मातुलः श्वशुरस्तथा ॥६०॥

---

५५/१–४–त, न३– × × × × × × × ×। ५५/२–३–ग३– × × × × × × × ×। ५५/४–ग४–ब्रह्मचर्यं प्रकीर्तितम् ।

५६/१–ग१–ब्रह्मचर्याश्रमस्थस्य । ५६/२–ग१–यतेरारण्यवासिनः ; न४ग३—यतीनां नैष्ठिकं स्मृतं। ५६/३–न१, २, ४–ब्रह्मचर्यं तु सैवोक्ता; ग३, त, क–ब्रह्मचर्यं तु सा प्रोक्ता; न–३– ——सदैवोक्तं ; ग४, ६, न८– ———— तथैवोक्तं ; ग५————यथैवोक्तं ; न६— ब्रह्मचर्यं तु सैवोक्ता । ५६/४–ग१–गृहस्थाश्रमवासिनाम् ; न४–तथैवारण्यवासिनः ; न५, ७— सर्वेषां योगिनां तथा ; ग४–तथैवाश्रमवासिनाम् ।

५७/१–न८, क–ऋतावेव————— । ५७/२–न१–गमनं च विघानतः ; ग१– संगं कुर्यात्————; ग२–कुर्यात्संगं। ५७/३–न१, २, ४, ५, ६, ७, ग१, ३——— ब्रह्मचर्यं तु सैवोक्ता ; न३————सदैवोक्तं ; ग४, न८– ————तथैवोक्तं ; ग५, ६, क————तु सा प्रोक्ता । ५७/३–४–त– × × × × × × × × ।

५८/१–२–ग१, त– × × × × × × × × ; ग६————गृहस्थानां ; ग५– राज्ञश्चैव गृहस्थानां ; न८–राज्ञां चैव गृहस्थस्य; ग२–राज्ञश्चचैवं गृहस्थस्य । ५८/२–ग५— ब्रह्मचर्यमुदाहृतम् । ५८/३–न१, २, ५, ६, ७——विशां वृत्तिमतां चैव ; ग१–राज्ञश्चैवं वृत्तवतः; ग३—दिशां वृत्तवतां——; त–राज्ञश्चैवं नीतिवतां। ५८/४–ग१–विशश्चेच्छन्ति पण्डिताः।

५९/१–न३, ५, ग४—शुश्रूषैव च शूद्रस्य ; ग६–शुश्रूषा इति शूद्रस्य । ५९/१–२–न४, ग३– × × × × × × × ×। ५९/३–न१, ५–शुश्रूषावान्गुरोर्नित्यं ; न२, ७, ग६, त, क– शुश्रूषया गुरोर्नित्यं ; ग१–शुश्रूषा च——; ५९/४–न१, त–ब्रह्मचर्यं प्रकीर्तितम् । ५९/३–४– ग४– × × × × × × × ×।

६०/२–न१–श्रुतिप्रेरिताः ; न३, ४–श्रुतिनोदिताः । ६०/४–त–मातुलः स्वगुरुस्तथा ; न६— मातुलश्वसुरो तथा । ६०।३–४–ग३– × × × × × × × × ।



एषु मुख्यास्त्रयः प्रोक्ता आचार्यः पितरौ तथा ।
एषु मुख्यतमस्त्वेक आचार्यः परमार्थवित् ॥६१॥

तमेवं ब्रह्मविच्छ्रेष्ठं नित्यकर्मपरायणम् ।
शुश्रूषयार्चयेन्नित्यं तुष्टोऽभूद्येन वा गुरुः ॥६२॥

दया च सर्वभूतेषु सर्वत्रानुग्रहः स्मृतः ।
विहितेषु तदन्येषु मनोवाक्कायकर्मणाम् ॥६३॥

प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ।
प्रियाप्रियेषु सर्वेषु समत्वं यच्छरीरिणाम् ॥६४॥

क्षमा सैवेति विद्वद्भिर्गदिता वेदवादिभिः ।
अर्थहानौ च बन्धूनां वियोगेष्वपि सम्पदाम् ॥६५॥

तयोः प्राप्तौ च सर्वत्र चित्तस्य स्थापनं धृतिः ।
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम् ॥६६॥

---

६१/१–न१, ५, ७–तेषां—————; ग२–एते—————;न४, ६, ८, ग३, ४, ५–एषां————; त–तेषु————। ६१/३–न१, ७–एषां मुख्यतमस्त्वेकः ; न६—एषां मुख्यतमस्त्वैकं (?); ग२, ४, त–तेषु————; ग३, न–८तेषां————; ग६, क–एषु मुख्यतमः प्रोक्तः ।

६२/१–न३, ५, ६————तमेव ब्रह्मविच्छ्रेष्ठं। ६२/२–न५, ६, ७–नित्यं कर्म-परायणम्; क–नित्यं कर्मपरायणः; ग५–नित्यकर्मपरायणः। ६२/३–न२, ७–शुश्रूषयाचरेन्नित्यं (?); ग५, ६, त, क—गुरुं शुश्रूषयेन्नित्यं ; न४, ग३–शुश्रूषयाश्रयेन्नित्यं ; ग४–शुश्रूषयार्चया(?) नित्यं ६२/४–ग५, ६, न६, क–तुष्टः स्याद्येन वा गुरुः ; ग१–(स वै) तुष्टेद्यया——; ग२–तुष्टो हृष्टो यथा——; न३–तुष्टोऽभूद्देवता——; न७—तुष्टो भवेद्येन वा——।

६३/२–ग२–सर्वदानुग्रहात्स्मृतः ; ग४, न८—सर्वत्रानुग्रहो मतः ; न२–सर्वत्रानुग्रहे(?)स्मृतः ; ग५—सर्वत्रानुग्रहस्ततः । ६३/३–ग२–अहितेषु तदन्येषु ; न३–विहितेषु वदान्येषु ; न४, ग३– विहितेषु तथान्येषु । ६३/४–न१, २, ५, ७, ८, ग२, ४—मनोवाक्कायकर्मभिः ; न४, ग३– मनोवाक्कायकर्मणा ।

६४/१–न३–प्रवृत्तौ च निवृत्तौ च। ६४/२–त–एक एवोक्तमार्जत्रम् । ६४/३–ग१–प्रियाप्रियेषु सर्वत्र। ६४/४–ग१–सहित्वं——————; ग३–समत्वे व्यवहारिणा ।

६५/१–ग५, ६–क्षमा सैवेह विद्वद्भिः ; न३–क्षमा सैवेति गदिता। ६५/२–न३, ८, क– विद्वद्भिर्वेदवादिभिः ; ग१, त–गदिता वेदवेदिभिः ; न१, २, ७–गदिता ब्रह्मवादिभिः ; ग२– गदितं वेदवित्तमैः ; न४–गदिता योगवादिभिः ; न६—गदितं वेदवेदिभिः ; ग४–गदितं योग-वेदिभिः ;। ६५/३–न६–अर्थहानौ च जन्तूनां। ६५/४–न१, २, ७—वियोगे च स्वसंपदि; ग१– वियोगे अथ संपदि ; न३, ५, ग४, ५, ६—वियोगेष्वपि संपदि ; न८, क–वियोगेष्वपि संसदि ; न६–वियोगेष्वपि संयति(?) ।

६६/१–ग१, न६, ८–भयप्राप्तौ च सर्वत्र; ग ४, ६—तेषां प्राप्तौ———— । ६६/२ न३–सचित्तस्थापनं— ; न४, ग३–चित्तस्य स्थापना धृतिः। ६६/३–न२, ग२–अष्टौ ग्रासा मुनेर्भक्ष्यं; न१, ५, ७————मुनेः प्रोक्ताः । ६६/४–ग१, न८, क–षोडशारण्यवासिनः ।

द्वात्रिंशच्च गृहस्थानां यथेष्टं ब्रह्मचारिणाम् ।
एषामयं मिताहारो ह्यन्येषामल्पभोजनम् ॥६७॥

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् ॥६८॥

मनःशुद्धिश्च विज्ञेया धर्मेणाध्यात्मविद्यया ।
आत्मविद्या च धर्मश्च पित्राचार्येण वानघे ॥६९॥

तस्मात्सर्वेषु कालेषु सर्वैर्निःश्रेयसार्थिभिः ।
गुरवः श्रुतसम्पन्ना मान्या वाङ्मनसादिभिः ॥७०॥

*इति श्रीयोगयाज्ञवल्क्ये प्रथमोऽध्यायः ॥†

---

६७/१–न१, २, ५, ८–द्वात्रिंशत्तु गृहस्थानाम् ; ग५–द्वात्रिंशशतं(?)——; ग६, क–द्वात्रिंशतं———। ६७/२–ग१, ६, क–ययेष्टं ब्रह्मवारिणाम्.। ६७/३–न३–एशामेव मिताहारः; न४, ६–एषामेष मिताहारः ; ग३–एवमेव————; न८, क–एष एव मिताहारो ; ग४–विषमोऽयं———। ६७/४–त–सर्वेशां मितभोजनम् ; न३–अन्येषां स्वल्पभोजनम् ; न४, ग३–त्वन्येषां मित भोजनम् ; न६, ग५–त्वन्येषामल्पभोजनम्; ग४–त्वन्येषां स्वल्पभोजनम् ।

६८/१–न२, ३, ५, ग३–शौचं च द्विविधं प्रोक्तं । ६८/३–ग२–मृज्जलाभ्यां स्थितं बाह्यं। ६८–४–ग१, ४, त–मनःशुद्धिस्तथान्तरम्; ग२–अन्तःशुद्धिःखान्तरम्(?); ग५, क–मनः शुद्धिर्यदान्तरम्; न७–मनःशुद्धिस्तयोत्तरे ; ग६–मनःशुद्धिर्यदन्तरम् ।

६९/१ न३, ४, ६, ग३–मनःशुद्धिस्तथा ज्ञेया ; ग४, ५, ६, न८, क–मनःशुद्धिस्तु विज्ञेया। ६९/२–ग२–कर्मेणाध्यात्मविद्यया ; न३–धर्मेगैवात्मविद्यया ; न४–धर्मेणात्मात्मविद्यया(?) । ६९/३–ग१–आत्मविद्या च धर्म्या च ; ग२–आत्मविद्यानि कर्माणि ; ग५–अध्यात्मविद्या धर्मं च । ६९/४–ग५, ६, त, क–पित्राचार्येण वा भवेत् ; ग२–पित्राचार्येण भावयेत्; न३———मानघे(?) ; न८————चानघे ; न६————वा सखे ; ग ४————श्रासयंत्(?) ।

७०/३–न२, ६, ८, क–गुरवः श्रुतिसम्पन्नाः ; त–स्वधर्मनिरताः पूज्याः ; ग२, ५, न८ (पाठान्तरत्वेन); ग६–स्वधर्मनिरतैःपूज्याः । ७०/४–न१, २, ५, ७—पूज्या वाङ्मनसादिभिः ; ग१–तोष्या——; ग२–सामान्यं (?सन्मान्या) वन्दनादिभिः ; न४, ग३–तोष्या वाक्कायमानसैः ; त–मान्यवो (?मान्या वा (ङ्) मनसादिभिः ।

*अत्र "न८" लेखे ७०/३–४ अनन्तरमधिकः श्लोकः, स इद्दशः— गुरवः श्रुतिसम्पन्नाः विद्वांसश्च, तयाविधाः । स्वधर्मनिरताः पूज्याः सदा वाङ्मनसादिभिः ॥

†हस्तलेखेष्वध्यायपरिसमाप्तिलेखानामान्तरं बाह्यं च वैविध्यमतीव दृश्यते । तल्लेखकानां बुद्धिविलासः एवेति मत्वा तेषां भेदा नास्मिन्ग्रन्थे प्रदर्शिताः ॥



## द्वितीयोऽध्यायः ॥

*याज्ञवल्क्य उवाच—

तपः संतोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥१॥

एते तु नियमाः प्रोक्तास्तांश्च सर्वान्पृथक् शृणु ।
विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ॥२॥

शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ।
यदृच्छालाभतो नित्यमलं पुंसो भवेदिति ॥३॥

या धीस्तामृषयः प्राहुः संतोषं सुखलक्षणम् ।
धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते ॥४॥

न्यायार्जितं धनं चान्नमन्यद्वा यत्प्रदीयते ।
अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम् ॥५॥

---

द्वितीयोऽध्यायः ॥

*न१, ४–याज्ञवल्क्य उवाच ; न२, ५, ७–श्रीयाज्ञवल्क्य उवाच ; न८, क–याज्ञवल्क्यः ; न३–श्रीभगवान् ।; ग६–ओम् भगवान्–; ग१, २, ३, ४, ५, न६, त– × × × × । १/१–न२, ६,७, ८, ग१, २, ४, ५, ६, त, क–तपः संतोषमास्तिक्यं । १/३–ग२–सिद्धान्तवेदान्तश्रवणं चैव(?) ।

२/१–न३, ४, ६, ८, ग३—एते च नियमाः प्रोक्ताः । २/२–न१–तं च————; त–सर्वांस्तांश्च पृथक् श्रृणु ; न५, ७–तांश्च श्रुत्वा————; ग४–तांस्तु सर्वान्पृथक्—। २/३–४–ग३– × × × × × × × ×। २/४–क–कृच्छ्रचा × × × ।

३/१–२–ग३– × × × × × × × × । ३/२–ग५–तपसां तप उत्तमम्। ३/४–ग५–अलं पुंसां भवेदिति । ३/३–४–न४, ६, ग३— × × × × × × × × ।

४/१–२–ग३– × × × × × × × × । ४/१–ग५, ६, त, क–या धीस्तां मुनयः—; न८–या भीस्तां(?)———। ४/२- न१, २, ५–संतोषं शुभलक्षणम् ; ग१–संतोषस्य च लक्षणम् ; न३, ४, त—संतोषः सुखलक्षणम् । ४/३–ग५–विश्वासो यस्तदास्तिक्यं (पाठान्तरत्वेन) । ४/४– ग५–वेदोक्तेषु च कर्मसु(पाठान्तरत्वेन) ; ग१–यस्तदास्तिक्यमिष्यते । ४/३–४–क– × × × × × × × ×।

५/१ ग३, न६–न्यायार्जितं धनं वान्नं; ग४————धनं चान्यत् ; ग६, क————धनंधान्यं ; त, न८– × × × × । ५/२–ग२–अन्यद्वा यः प्रयच्छति ; न३–वाक्य(?) यच्च प्रदीयते ; न४–वात्रेद्यया(?) यत्प्रदीयते ; ग४–अन्यस्मै————। ५/१–२–त, न८– × × × × × × × × । ५/३–ग३–अर्थित्वा श्रद्धया युक्तं ; ग४, न८–अक्षतं——— ; ग५, ६—अर्थिभ्यः श्रद्धया देयं ।

यत्प्रसन्नस्वभावेन विष्णुं वाऽप्यन्यमेव वा ।
यथाशक्त्यर्चनं भक्त्या ह्येतदीश्वरपूजनम् ॥६॥

रागाद्यपेतं हृदयं वागदुष्टानृतादिना ।
हिंसादिरहितः काय एतदीश्वरपूजनम् ॥७॥

* सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ।
द्विजवत्क्षत्रियस्योक्तं सिद्धान्तश्रवणं बुधैः ॥८॥

विशां च केचिदिच्छन्ति शीलवृत्तवतां सताम् ।
शूद्राणां च स्त्रियाश्चैव स्वधर्मस्थतपस्विनाम् ॥९॥

सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः ।
वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥१०॥

---

६/१—ग१, २, ५, ६, न६—यत्प्रपन्नस्वभावेन ; न४—यत्प्रपन्नं स्वभावेन ; ग३—यत्प्रयत्नं———; त—यत्प्रसन्नत्वस्वभावेन । ६/२—न६—विष्णुं वा चान्यमेव वा ; न१—विप्लुषाप्यन्यमेव वा ; ग२, ४, ५, ६, न३—विष्णुं वा रुद्रमेव वा ; न४—बहु वाप्यल्पमेव वा ; ग३—बहु वा अल्पमेव वा ; त—विद्ययाथ धनेन वा । ६/३—न७, ८, ग४, क—यथाशक्तयर्चयेद्भक्त्या । ६/४—ग१—चैतदीश्वरपूजनम् ; न३—त्वेतदीश्वरपूजनम् ।

७/१—न१, २, ५, ७, ग१—रागादपेतं हृदयं ; न८—रागादिरहितं चित्तं ७/२—ग३—मम द्रष्टानृतादिना(?) ग१—वागदुष्टानृतादिभिः ; न१, ५—वागदुष्टा व्रतादिना ; त— यथापृष्टं × × × ; न३—वागपे+ +नृतादिना ; न४—ममतादुष्टतादिना । ७/१—२—ग५, क—× × × × × × × × । ७/३—त—हिंसादिरहितं यत्स्यात् । ७/४—ग१—चैतदीश्वरपूजनम् ; न४—तपईश्वरपूजनम् । *ग७, त—अत्रायमधिकः श्लोकः—येन केनाप्युपायेन यस्य कस्यापि देहिनः । संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम् । ७।३—४—ग५, क—× × × × × × × × ।

८/३—न३—द्विजे च क्षत्रियस्योक्तं ; न६—द्विजवत्क्षत्रिये प्रोक्तं ; ग३—द्विजवत्क्षत्रियप्रोक्तं । ८/४—न३—वेदान्तश्रवणं बुधैः ; त—सिद्धान्तश्रवणाद्वुधैः ; ग३—पुराणश्रवणं बुधैः ।

९/१—२—ग२, ३— × × × × × × × × । ९।२—न२—शीलवृत्तमतां सताम् ; न६—शीलवृत्तमतां तसा(?); ग५, ६, त—शीलवृत्तवतां सदा ; न३—शीस्तव्रत- (?शीलव्रत) वतां । ९/३—न२—शूद्राणां च स्त्रियश्चैव ; ग१—शूद्राणां च तथा स्त्रीणां ; न६, ८, ग५, क—शूद्राणां च स्त्रियां चैव । ९/४न१—स्वधर्मस्तु तपस्विनाम् ; न२, ५, ७—स्वधर्मस्तु तपः स्मृतम् ; ग५, ६, त, क—स्वधर्मवशवर्तिनाम् । ९/३—४—ग२, ३— × × × × × × × × ।

१०/१—न१—सिद्धान्तश्रवणे प्रोक्तं ; ग५, ६, त, क—पुराणश्रवणं प्रोक्तं । १०/२—ग५, त, क—वेदान्तश्रवणं बुधैः ; न३—पुराणश्रवणं बुधाः ; ग६—सिद्धान्तश्रवणं बुधैः । १०/१—२—ग३— × × × × × × × × × । १०/३—ग३, न८, क—वेदे लौकिकमार्गेषु । १०/४—न४, ग३—कल्पितं(?) कर्म यद्भवेत् ।



तस्मिन्भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता ।
विहितेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ॥११॥

गुरुणा चोपदिष्टोऽपि वेदबाह्यविवर्जितः ।
विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥१२॥

अधीत्य वेदं सूत्रं वा पुराणं सेतिहासकम् ।
एतेष्वभ्यसनं यच्च तदभ्यासो जपः स्मृतः ॥१३॥

जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा ।
वाचिक उपांशुरुच्चैश्च द्विविधः परिकीर्तितः ॥१४॥

मानसो मननध्यानभेदाद् द्वैविध्यमास्थितः ।
उच्चैर्जपादुपांशुश्च सहस्रगुण उच्यते ॥१५॥

मानसस्तु तथोपांशोः सहस्रगुण उच्यते ।
मानसाच्च तथा ध्यानं सहस्रगुणमुच्यते ॥१६॥

---

११/१—क—यद्भवति————। ११/२—त—ह्रीस्तु सैवेति कीर्तितम् ; न६—ह्रीस्तु सैव तु कीर्तिता ; ग४ न८, क—ह्रीश्च सैव तु कीर्तिता । ११/३—त—विहितेषु च कृत्येषु : ग२, ३, न४—विहितेषु च मार्गेषु । ११/४—न३, ८, ग४, क—श्रद्धया सा मतिर्भवेत् ; ग३—शुद्धा या सा———; ग५—श्रद्धा वा सा—।

१२/१—न१—गुरुणा चोपदिष्टेऽपि ; न३—गुरुणां चोपदिष्टोऽपि : ग५, ६, क—गुरुणा चोपदिष्टार्थो ; त————चोपदिष्टार्थ ; ग४—विधिना चोपदिष्टोऽपि। १२/४—ग२——————विधिः स्मृतः ।

१३/१—ग१—अधीत वेदसूत्रे वा ; न३, ४, ६, ८—अधीत वेदेष्वंगेषु ; त—अयं स्मृतो वा सूत्रे वा(?) ; ग२—आदौ स्मृतौ(?)वा सूत्रे वा ; ग६—अथ स्मृतौ——। १३/२—ग१, २, ६, न३, ४, ६, ८, त—पुराणे सेतिहासके। १३/१—२—ग३, ४, ५, क— × × × × × × × × । १३/३—न१—एतेष्वभ्यसनं तच्च ; न५—एतेष्वध्ययनं यच्च ; न२—एतेष्वभ्यसनं यच्च; न८—यद्यध्ययनं तच्च(?) न७——————तच्च ; न४, ६—यदिहाध्ययनं तच्च ; ग२, ६—त्रेदेष्वध्ययनं पुंसां ; त—वेदस्याध्ययनं———। १३/४—न१, २, ५, ७—सदभ्यासो जपः स्मृतः ; ग१—तस्य त्वभ्यासो ;—— न६, ८—मन्त्राभ्यासो————। १३।३—४—न३, ग३, ४, ५, क— × × × × × × × × ।

१४/१—ग५, क—जपस्तु द्विविधः प्रोक्तो । १४/२—न८—मानसो वाचिकस्तथा । १४/३—न६—वाचिकोपांशुदन्तैश्च ; न३, ४, ५—वाचिको तीवा (—तीव) उच्चैश्च । १४/४—ग२— द्विविधो वाचकः (स्मृतः) ; ग४, न८—भेदाद्द्वैविध्यमाश्रितः ; न७, ग५, ६————वैविध्यमास्थितः ; ग३—त्रिविधः परिकीर्तितः ।

१५/१—न१, २—मानसो मानसध्यान—; ग२—मानसो मनसा ध्यानं ; न३, ४, ५, ६, ७, ग३————ध्यान—। १५/२——ग२—द्वैविध्यमिष्यते ; ग४——द्वैविध्यमाश्रितः। १५/१—२—न८— × × × × × × × ×। १५/३—न३—उच्चैर्जप उपांशुश्च। १५/३—४—ग३— × × × × × × × ×।

१६/१—न५, ग१, ४, ६, क——मानसश्च तथोपांशोः ; न३—मानसश्च तथा चैव ; ग५—मननं च तथोपांशोः ; १६/१—२—ग३, न८— × × × × × × × ×। १६/३—ग४—मानसस्तु तथा ध्यानं ; ग५, ६—मननाच्च तथा———। १६/३—४—न३, ४, ६, ग३— × × × × × × × ×।

उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो भवेत् ।
नीचैः श्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ॥१७॥

ऋषिं छन्दोऽधिदैवं च ध्यायन्मन्त्रं च सर्वदा ।
यस्तु मन्त्रजपो गार्गि स एव हि फलप्रदः ॥१८॥

प्रसन्नगुरुणा पूर्वमुपदिष्टं त्वनुज्ञया ।
धर्मार्थमात्मसिद्ध्यर्थमुपायग्रहणं व्रतम् ॥१९॥

इति श्रीयोगयाज्ञवल्क्ये द्वितीयोऽध्यायः ॥

---

१७/१–न१ २, ५, ७, ८, ग४, त, क–उच्चैर्जपश्च सर्वेषां । १७/२–ग५–यथोक्तं फलदो भवेत् । १७/३–न६–नीचैः श्रुतो न चेद्वापि ; ग२–नीचैः श्रुतो वचःसोऽपि । १७/४–न२, ५, ७–श्रुतश्च निष्फलो भवेत्; ग५ श्रुतश्चेन्निष्फलं भवेत्। १७/३-४–न४– × × × × × × × ×।

१८/१–न२–ऋषिच्छन्दोऽधिदैवं च ; न३————ऽधिदैवत्यं ; ग४————देवताश्च ॥ १८/२–ग५, ६, त, क–ध्यानमर्चनमेव च ; न३–ध्यायन्मन्त्रं च सर्वशः ; न४, ६–ध्यानं मन्त्रश्च सर्वदा ; ग३–ध्यानं मन्त्रं च———। १८/३–न३, ६–यस्तु मन्त्रं जपो गार्गि ; ग३–यत्तु मन्त्रजपन्गार्गि ; ग४–यस्तु तत्र जपं—; ग६——मन्त्रजपे—; न१–यत्तन्मन्त्रे भवेद्गार्गि; न२, ५–यत्तन्मन्त्रो.———; ग२–स तु मन्त्रजपो——; न४–युक्तमन्त्रजपं———। १८/४–न६–स एव तु फलप्रदः ; न१, २, ५–सर्वकामफलप्रदः ; न४, ८, ग३, ४, ५, ६, क–तदेव हि फलप्रदम् ; ग२–सदृशैव फलप्रदः ; न३, ७–सर्ववद्भि(?)फलप्रदः ।

१९/१–न१, ७–व्रतं च गुरुणा पूर्वं ; न२–वृत्तं च———— ; न८, ग४–प्रसन्नगुरुणा-सार्धं । १९/२–न२–उपदिष्टं तदज्ञया(?) ; न५————तदनुज्ञया ; ग४–उपदिष्टे त्वनुज्ञया ; न३–उपतिष्टं———। १९/३–न१, २, ग३–धर्मार्थकामसिद्ध्यर्थं ; ग५, ६–धर्मार्थमर्थसिद्ध्यर्थं ; ग४–धर्मार्थकाममोक्षार्थं ; न८, क–धर्मार्थकाममोक्षाणां । १९/४–ग२–उपायग्रहणं हितम् ; न३–उपायग्रहणायते ; न६–उपांशुग्रहणं कृतम ।



## तृतीयोऽध्यायः ॥

*याज्ञवल्क्य उवाच—

आसनान्यधुना वक्ष्ये शृणु गार्गि तपोघने ।
स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ॥१॥

भद्रं मुक्तासनं चैव मयूरासनमेव च ।
तथैतेषां वरारोहे पृथग्वक्ष्यामि लक्षणम् ॥२॥

जानोर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ॥३॥

सीवन्यास्त्वात्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरम् ॥४॥

एतच्च स्वस्तिकं प्रोक्तं सर्वपापप्रणाशनम् ।
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ॥५॥

दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ।
अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥६॥

---

तृतीयोऽध्यायः ।

*न४, ५–याज्ञवल्क्य उवाच ; ग४, न८–याज्ञवल्क्यः; ग३–श्रीयाज्ञवल्क्यः ; न६–श्रीभगवानुवाच ; न३–श्रीभगवानु । ; न१, २, ७, ग१, २, ५, ६, त, क– × × × ×।

१/१-२–न२– × × × × × × × ×।

२/१–त——————दिव्यं । २/३–न२, ७–तथा चैषां————; ग२–अथ तेषां———; न६–तद्वै तेषां————;ग६, न८, क–तथैवैषां ————।

३/१–न३, ८, क–जानूर्वोरन्तरे सम्यक् ; न४–जान्वोर्वोरन्तरे———। ३/३–न१, ३, ५–ऋजुकायः सुखासीनं ; ग३, ५, न६——————समासीनः । ३/४–न३—स्वस्तिकं च प्रचक्षते ; न६————तु————; ग४—————नित्यमभ्यसेत् ।

४/१–ग५–सीवन्या वामतः पार्श्वे ; न१, २, ३, ५, ७—सीवन्याश्चात्मनः———; ग६–सीवन्या वर्त्मनः———; ग३—निविश्या(?)चात्मनः पार्श्वे । ४/२–ग५, ६–गुल्फौ निष्पीड्च पादयोः। ४/१-२–न४– × × × × × × × ×। ४/३–न४–सव्ये दक्षिणगुल्फौ तु; ग३—सव्यदक्षिणगुल्फौ तु । ४/४–न२, ६, ग४–दक्षिणे दक्षिणोत्तरम् ; न३–दक्षिणा दक्षिणेतरम् । ४/३-४–न५– × × × × × × × ×।

५/१–ग३—एतद्वा स्वस्तिकं प्रोक्तं। ५/१-२–न५– × × × × × × × ×। ५/३–न१, २, ग१, २, त–सव्ये दक्षिणपृष्टं तु ; ग३–सव्यदक्षिणगुल्फौ तु । ५/४–न३–पृष्टं तु विनिवेदयेत् ; न६, ग४, ५, क–पृष्टपार्शे (? श्र्वे) नियोजयेत्; न८–पृष्टपार्श्वे नियोजयेत् ; न७–पृष्टपार्श्वे निवेदयेत् ।

६/१–न४–दक्षिणे तु——————; ग३–दक्षिणे तु तदा———। ६/२–ग३———गोमुखा यथा ; ग४————गोमुखं तथा ; ग२, त————गोमुखोपमम्; ग५–आसनं गोमुखं यथा । ६/३–न६, ग४–अंगुष्टं तु निबध्नीयात् ; न८–अंगुष्टे तु———; ग६–अंगुष्टेन———। ६/४–न४, ग३—हस्ताभ्यां व्युत्क्रमं तथा ।

उर्वोरुपरि विप्रेन्द्रे कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ॥७॥

एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम् ।
इतरस्मिंस्तथा चोरुं वीरासनमुदाहृतम् ॥८॥

*गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम् ॥९॥

हस्तौ च जान्वोः संस्थाप्य स्वांगुलीश्च प्रसार्य च ।
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ॥१०॥

सिंहासनं भवेदेतत्पूजितं योगिभिः सदा ।
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥११॥

---

७/१–न३, ६, ७, ग३, ५—उर्वोरुपरि विप्रेन्द्र ; ग१————विन्यसेत्(?) ; ग४, न८–उर्वोरुपरि मैत्रेयी ; न४–जंघोपरि तु विप्रेन्द्रे । ७/२–न३–कृत्वा पादतले शुभे । ७/३–न२–पद्मासनं भवेत्××। ७/४–न२++तेषामपि(?)पूजितम्; ग४, न८–पूजितं योगिभिः सदा ।

८/१–न१, ५–एकपादमप्येकस्मिन् ; न६–एकं पादं तदेकस्मिन् ; न७–एकं तु पादमेकस्मिन् । ८/२–न१, ५,–विन्यस्यस्योरुणि संस्थिते ; न४, ग३————————संस्थितः। ८/१–२–त–×××××××। ८/३–ग३–इतरस्मिंस्तदाचोरुं। ८/३–४–न६, त–××××××××। "त, ग५" लेखयोः ९–१० श्लोकौ न विद्येते, "क" लेखे च ९/३–४,१०/१–४ एतत्पंक्तित्रयं नास्ति ।

९/१–न३–गुल्फौ+वृषणस्याधः ; ग४—गुल्फेऽल्प————— ; न८–गुल्फे च——— ; ग६–तु वृषणस्याथ। गुल्फौ ९/३–ग२–दक्षिणं सव्यभागे च ; ग३—————सव्यगुल्फैश्च । ९/४–न४, ६, ८, ग४—दक्षिणेन तथोत्तरम् ।

१०/१–न१, २, ५–हस्तौ जानूपरि स्थाप्य ; न७–हस्तौ च———— ; ग३—हस्तौ तु जान्वोः संस्थाप्य । १०/२–न३, ८, ग६–स्वांगुली(:)संप्रसार्य च ; न४, ग३, ४–स्वांगुलीभिः प्रसार्य च । १०/३–न४–व्याघ्रवक्त्रो निरीक्षेत । १०/४–ग३—नासाग्रं तु समाहितः ।

११/१–२–ग५, क–××××××××। त–सिंहासनमिदमुर्व्यामासनानां विशेषतः; ग६–पूजितं सर्वयोगिभिः। "सिंहासनमिदमुर्व्यामासनं च विशेषतः" इति पाठान्तरत्वेन । *अत्र केषुचिल्लेखेष्वेको द्वौ वा श्लोकावधिकौ दृश्येते। तौ—ग५, त–

योनिस्तारकमंघ्रिमूलघटितं[1] धृत्वासनं विन्यसे[2]न्मेढ्रे पादमथैवमेव हृदये[3] धृत्वासनं विग्रहम्[4]। स्थाणुर्यद हृदयेक्षमेदचलया[5] दृष्वा-भ्रुवोरन्तरं चेदं मोक्षकपाटभेदनकरं[6] सिद्धासनं प्रोच्यते[7] ॥ अयमेव श्लोको "ग६" लेखेऽपि दृश्यते

तथापि तत्र क्षति पाठान्तराणिः च विद्यन्ते, यथा—१. घटिता ; २. ++++ ; ३. मेढ्रे पादमथैकमेक हृदये ; ४. धृत्वा समं विग्रहम् ; ५. स्थानं यत्पदवेक्षयेदचलया ; ६. चेतन्मोक्षकपाटभेदनकरं ; ७. सिद्धासनं प्रेर्यते ॥ 'त' लेखेऽपि स अशुद्ध इव दृश्यते । "ग" ५ लेखे द्वितीयोऽप्यधिकः श्लोकोऽत्र विद्यतेः। स यथा—सीवनीं गुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु । प्रसार्य जानुनोर्हस्तौ आसनं सिंहपूर्वकम् ॥ ११/३–ग४, न८, क–गुल्फे च वृषणस्याधः ; ग५–गुल्फौ तु————— ; ग६–गुल्फौ च वृषणस्याथ । ११/३–४– ××××××××।



पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥१२॥

संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमितीरितम् ॥१३॥

मेढ्रादुपरि निक्षिप्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य मुक्तासनमिदं तु वा ॥१४॥

अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयोः
हस्तयोः कूर्परौ चापि स्थापयन्नाभिपार्श्वयोः ॥१५॥

समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥१६॥

---

१२/१–ग५, ६, त–पार्श्वपादौ तु पाणिभ्यां; न ६–पार्श्वे पादौ च————। १२/२–ग१–दृढं बद्ध्वा सुनिश्चलः । १२/४–न४–सर्वव्याधिविनाशनम् ; न७–सर्वव्याधिविषापहः ; ग६–पूजितं सर्व योगिभिः (पाठान्तरत्वेन "सर्वव्याधिविषापहम्" अप्यस्त्येव) ।

१३/१–ग२–संपीड्य सीवनीं सर्वां; न३——————शुद्धां। १३/२–ग२–गुल्फेनैकेन सर्वतः ; न६–गुल्फेनैव सुसंवृतं । १३/४–ग१, न४, त–मुक्तासनमुदीरितम् ; ग२–मुक्तासनमिदं तु तत् ।

१४/१–ग१–मेढ्रस्योपरि निक्षिप्य ; ग५, ६, त–मेढ्रादुपरि विन्यस्य। १४/२–ग१, २, त–सव्यं गुल्फं ततोपरि ; । १४/३.–न१–गुल्फान्तरं तु निक्षिप्य ; न६–गुल्फान्तरं विनिक्षिप्य ; ग३—गुल्फान्तरे————; ग५–गुल्फान्तरं तु निक्षिप्तं। १४/४–न१, २, ४, ५, ७, ग३–मुक्तासनमिदं तथा ; न३, ६—मुक्तासनमितीरितम् ।

१५/२–न१, २, ५, ७–तलाभ्यां करयोर्द्वयोः ; ग१—————चाथ हस्तयोः ; न३–कराभ्यां तु करद्वयोः(?) ; न४–कूर्पराभ्यां तु(?)करद्वयोः ; न६–कराभ्यांतः(?)करद्वयोः। १५/३–ग२–हस्तयोः कूर्पकाञ्चापि ; न६–हस्तद्वयोः (?) कूर्परौ वा ; ग३, ४, ५–हस्तयोः——वापि। १५/४–न५, ६, ७, ८, ग३, ४, ५, ६—स्थापयेन्नाभिपार्श्वयोः ।

१६/१–न२, ७, ग१, ६, त–समुन्नतशिराःपादौ ; न३–समुन्नतशिरेःपादौ (?)। १६/२–ग१, ४, त—दण्डवद्व्योम्नि संस्थितम् । १६/३–ग२–मयूरमासनं प्रोक्तं ; ग६–मयूरासनमेतद्धि ; न३–मयूरासनमेतच्च ; न५—मयूरासनमेवैतत् ।

*सर्वे चाभ्यन्तरा रोगा विनश्यन्ति विषाणि च ।
यमैश्च नियमैश्चैव आसनैश्च सुसंयुता ॥१७॥

नाडीशुद्धिं च कृत्वा तु प्राणायामं ततः कुरु ॥१८॥

इति श्रीयोगयाज्ञवल्क्ये तृतीयोऽध्यायः ।

---

१७/१–न३————ह्याभ्यन्तरां रोगाः ; न४————आभ्यन्तरा—; १७/१-२–न६– × × × × × × × ×। *त–अत्र सार्धैकश्लोकोऽधिको दृश्यते । स च—

येन केन प्रकारेण सुखं धैर्यं[1] च जायते ।
तत्सुखासनमित्युक्तमशक्तस्तु समाचरेत्[2] ॥

आसनं विजितं येन[3] जितं तेन जगत्त्रयम् ॥

स एव "ग६" लेखेऽपि विद्यते किन्तु निम्नलिखिताशुद्धपाठान्तरैः :—
१. धार्यं(?)च ; २. अथतस्तत्समाचरेत् ; ३. आसनं वर्णितं(?)येन । १७/३–न१, ५, ७, ८–यमैश्च नियमैश्चापि ; न४–यमं च नियमं चैव। १७/४–न२, ८, ग२, ३, ४, ५, ६, क–आसनैश्च सुसंयतः ; न३–आसनं तैश्च संयुता ; न४–आसनं च सुसंयतः(?) ; न६–आसनैश्च सुसंयुतं ; न७————तु संयता ।

१८/१–ग५, ६–नाडीशुद्धिं च कृत्वाथ ; न२————कृत्वा वै ; ग२———— कृत्वादौ ; न८, क————कृत्वैव ; न३, ६————ततः कृत्वा ; ग४———— श्रुत्वैव ; त– × × × × । १८/२–न३–प्राणायामं तथा कुरु ; न४, ग३———— ततः परम् । त– × × × × ।



## चतुर्थोऽध्यायः ॥

श्रुत्वैतद्भाषितं वाक्यं याज्ञवल्क्यस्य धीमतः ।
पुनः प्राह महाभागा सभामध्ये तपस्विनी ॥१॥

*गार्ग्युवाच—

भगवन्ब्रूहि मे स्वामिन्नाडीशुद्धिं विधानतः ।
केनोपायेन शुद्धाः स्युर्नाड्यः सर्वदेहिनाम् ॥२॥

उत्पत्तिं चापि नाडीनां चारणं च यथाविधि ।
† कन्दं च कीदृशं प्रोक्तं कति तिष्ठन्ति वायवः ॥३॥

स्थानानि चैव वायूनां कर्माणि च पृथक्पृथक् ।
विज्ञातव्यानि यान्यस्मिन्देहे देहभृतां वर ॥४॥

वक्तुमर्हसि तत्सर्वं त्वत्तो वेत्ता न विद्यते ।

इत्युक्तो भार्यया तत्र सम्यक् तद्गतमानसः ॥५॥

गार्गीं तां सुसमालोक्य तत्सर्वं समभाषत ।

---

चतुर्थोऽध्याय :

१/१–ग५, ६, क–श्रुत्वैतद्भाषितं गार्गी । १/३–न२,३ ५, ७–पुनः प्राह सभामध्ये । १/४–न२, ५, ७—महाभागा तपस्विनी ; न३–सभामध्ये यशस्विनी ; ग५, ६, क–ऋषिमध्ये तपस्विनी । *न२, ग१, २, ६, क– × × × × ————।

२/१–ग५, ६, क–भगवन्ब्रह्मविच्छ्रेष्ठ । २/४–ग६–नाड्यस्ताः सर्वदेहिनाम् ।

३/१–ग५, ६, न८, क–उत्पत्तिं चैव नाडीनां । ३/२–न१, २, ६, ७, ८, क–चरणं च यथाविधि ; ग२–चलनं च यथाविधि ; न४–सरणं च———; न५–धारणं च————; ग३ वराणां च(?)————; ग१–चलनं च तथाविधम् । † न१, २, ५, ७, ग१–अत्रेयमधिका पंक्तिः–विभागं च पृथग्ब्रूहि मुख्यामुख्यत्वमेव च । ३/३–न३, ६, ७, ग३—कन्दश्च कीदृशः प्रोक्तः ; न४–क्रमश्च———— । ३/४–न१, २, ५, ७–क्व तिष्ठन्ति च वायवः ; ग४, न८– कति तिष्ठन्ति नाडयः ।

४/३–ग४, न८–विज्ञातव्या मयान्यत्र । ४/४–ग४—देहि देहभृतां वर ।

५/१–न३–वक्तुमर्हसि सर्वज्ञ ; न१, २, ५, ७————मे सर्वं ; ग३———— सर्वं त्वं । ५/२–ग४, ५, न८–त्वत्तो वक्ता न विद्यते ; ग६–त्वत्तो छेत्ता————। ५/४– न६–सम्यक् हृद्गतमानसः ।

६/१–ग२–गार्गी च तां समालोक्य ; न३–गार्गी गीतं————; न४–गार्गी तां च——; ग४, ५, न८, क–गार्गी तां तु————।

*याज्ञवल्क्य उवाच—

शरीरं तावदेवं हि षण्णवत्यङ्गुलात्मकम् ॥६॥

विद्धयेतत्सर्वजन्तूनां स्वाङ्गुलीभिरिति प्रिये ।
शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः ॥७॥

चतुर्दशाङ्गुलं केचिद्वदन्ति मुनिसत्तमाः ।
द्वादशाङ्गुल एवेति वदन्ति ज्ञानिनो नराः ॥८॥

आत्मस्थमनिलं विद्वानात्मस्थेनैव वह्निना ।
योगाभ्यासेन यः कुर्यात्समं वा न्यूनमेव वा ॥९॥

स एव ब्रह्मविच्छ्रेष्ठः स सम्पूज्यो नरोत्तमः ।
आत्मस्थवह्निनैव त्वं योगजेन द्विजोत्तमे ॥१०॥

आत्मस्थं मातरिश्वानं योगाभ्यासेन निर्जय ।
देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ॥११॥

---

* न३, ६—श्रीभगवानुवाच ; ग४, न८—याज्ञवल्क्यः ; ग२, ५, त, क— × × × ×।

६।३—ग२—शरीरं देहिनां तावत् ; न६————तावदेतत्तु । ६/४ न१, २—षण्णवत्यंगुलान्वितम्; ग२—षण्णवत्यंगुलायतम् ।

७/१—ग२—विश्वेन(?)सर्वजन्तूनां ; न६—विद्यात्तत्सर्वजन्तूनाम् । ७/३—ग३—शरीरादधिकं(?) प्राणः ; ग२—शरीरोदररन्ध्राणाम्(?) ।

८/१—ग४—चतुर्दशांगुलीः केचित् । ८/२—ग४, न८—वदन्ति ज्ञानिनो नराः ; न६—इच्छन्ति मुनिसत्तमाः । ८/३—न४, ८, ग४, ५, ६, क—द्वादशांगुलमेवेति । ८/२—३—ग२— × × × × × × × ×।

९/१—ग१, २, ४, ६, न६, त—आत्मस्थमनिलं विद्यात् ; ग३—आत्मस्थाननिलान्विद्वान् । ९/३—न३—योगाभ्यासेन तत्कुर्यात् ; ग३, ६————यत्कुर्यात् । ९/४—न७—समं वा न्यूनमेव च ; न३—शर्वाश्रमयमेव(?) वा ।

१०/१—न८, क—स नरो ब्रह्मविच्छ्रेष्टः । १०/२—ग२, ४—सम्पूज्यश्च नरोत्तमः ; ग३—स पूज्यश्च————; ग१, न८, त, क—सम्पूज्यश्च नरोत्तमैः ; न३—सम्पूज्यः स नरोत्तमः ; न४—सम्पूज्यश्च नरोत्तमे ; न६—सम्पूज्यस्तु नरोत्तमः ; ग६—सुसंपूज्यो नरोत्तमः । १०/३—ग२—आत्मस्थवह्निना चैव ; ग३—आत्मस्थवह्निनैवालं । १०/४—ग२—योगाभ्यासाद् द्विजोत्तमे : ; ग५—योगस्थेन द्विजोत्तमे ; न७—योगजेन द्विजोत्तमः ; न३—योजयैनं द्विजोत्तमै(?) ।

११/१—न४—आत्मस्थं मातरिश्वानां(?) ; ग३—आत्मस्थमातरिश्वानां (?); ग५—आत्मस्थां (?स्थं) मातरिश्वानं ; न३—आत्मन्यं————। ११/२—न४, ग३—योगाभ्यासेन निर्जयः(?) ; न६————निर्जयं(?) । ११/३ ग२—देहमध्ये शिखास्थानं ; ग३, न६————शिवस्थानं ; न३—देहमध्यं शिरस्थानं(?) ।



त्रिकोणं मनुजानां च चतुरस्रं चतुष्पदाम् ।
*मण्डलं तत्पतंगानां सत्यमेतद्ब्रवीमि ते ॥१२॥

तन्मध्ये तु शिखा तन्वी सदा तिष्ठति पावकी ।
देहमध्यं च कुत्रेति श्रोतुमिच्छसि चेच्छृणु ॥१३॥

गुदात्तु द्व्यंङ्गुलादूर्ध्वमधो मेढ्राच्च द्व्यंङ्गुलात् ।
देहमध्यं तयोर्मध्यं मनुष्याणामितीरितम् ॥१४॥

चतुष्पदां तु हृन्मध्यं तिरश्चां तुन्दमध्यमम् ।
द्विजानां तु वरारोहे तुन्दमध्यमितीरितम् ॥१५॥

कन्दस्थानं मनुष्याणां देहमध्यान्नवाङ्गुलम् ।
चतुरङ्गुलमुत्सेधमायामश्च तथाविधः ॥१६॥

---

१२/१—न३, ६, ८, ग२, ४, ५, क———————तु । १२/२—न१—चतुरस्रं चतुर्दिशम्; न२—चतुरन्ध्रं चतुर्दळम् न७; चतुरस्रं चतुर्दृशाम्(?) । १२/३—ग२—मण्डलं तत्पतंगाढयं; ग३—मण्डलं तत्प्लवंगानाम् ; न७————तु पतंगानाम् ; ग१————च मृगानां तु ; न१, २, ५————तत्पशूनां तु । *ग५—अत्रैषाधिका पंक्तिः—षडश्रं सर्पजन्मनाम् । अष्टाश्रं स्वेदजानां च । १२/४—ग२—सत्यमेतद्ब्रवीमि तत् ; ग३—सत्य व † † द्ब्रवीमि ते(?)

१३/१—ग२————तु शिखास्तस्मिन् ।(?) ; न८, क————तु शिवा-तन्वी ; न६————च शिखा—; ग५, ६————तु शुभा————; न३————च शिखान्वीत्य(?) । १३/२—न१, ४, त—सदा तिष्ठति पावकः;(?) न२—शिवा————पावकः(?) ; ग१—शिवा————पावनी; ग२—शिवा————पावके ; न३—सदा————पातकी(?) ; न६————पावक(?); ग५ ६, न८, क—शिखा————पावकी । १३/३—ग२—देह मध्ये तु कुत्रेति ; ग५—देह मध्यात्तु, ————; क—देहमध्यात्तु सुश्रोणि; ग६—देहमध्यं च सुश्रोणि । १३/४—न२, ३, ८, ग४, क—श्रोतुमिच्छसि तच्छृणु ;न७—ज्ञातुमिच्छसि चेच्छृणु ।

१४/१—न६—गुदाच्च———————— । १४/२—ग१—अधो मेढ्र (च) द्व्यंगुळात् ; ग२, ५, ६—मेढ्रात्तु द्व्यंगुळादधः ; न६, क—अथो(?अधो) मेढ्राच्च द्व्यंगुळात् । १४/३—न२, ३—देहमध्यं तयोर्मध्ये । १४/४—न४, ६, ग५—मनुष्याणामुदीरितम् ; न५, त—मनुजानामितीरितम् ; न७—जनुजानामितीरितम् (?) ।

१५/१—न१, २, ३, ६, ८, ग६, क—चतुष्पदां तु हृन्मध्ये ; न४—चतुष्पदां तु तन्मध्ये(?हृन्मध्ये); न५, ७—चतुष्पदां च हृन्मध्ये । १५/२—न१, २, ३, ५, ६, ७, ८, क—तिरश्चां तुन्दमध्यमे ; ग३————त † † मध्यमे ; न४————तु सुमध्यमे ; ग४————गुदमध्यमम् ; ग५————तुन्दमध्यकम् । १५/३—ग२—द्विजातीनां वरारोहे । १५/४—ग६—————मध्यमुदीरितम् ; न४, ग३—गुदमध्यमितीरितम् ; ग४—दन्तमध्यमितीरितम् । १५/३—४—न३— × × × × × × × ×।

१६/१—न३—कन्दस्थानां(?)मनुष्याणाम् ; ग५—तुन्दस्थानं————; ग६—कुन्दस्थानं————; ग३—कन्दस्थानं मनुष्यादेः । १६/२—न१, २, ५, ग३—देहमध्ये नवांगुळम् । १६/३—ग२—चतुरंगुळमुच्चेदं ; न४, ६, ग३, ५, ६——मुत्सेधः ; न२, ७————मुत्सेधे ; न३—चतुरंगुलसमुत्सेधि । १६/४—न१, २, ५, ग१, २, त—आयामं च तथाविधम् ; न७—आयामं तु——ग४, न८, क—आयतं च———— ।

अण्डाकृतिवदाकारं भूषितं तत्त्वगादिभिः ।
चतुष्पदां तिरश्चां च द्विजानां तुन्दमध्यमे ॥१७॥

तन्मध्यं नाभिरित्युक्तं नाभौ चक्रसमुद्भवः ।
द्वादशारयुतं तच्च तेन देहः प्रतिष्ठितः ॥१८॥

*चक्रेऽस्मिन्भ्रमते जीवः पापपुण्यप्रचोदितः ।
तन्तुपंजरमध्यस्था यथा भ्रमति लूतिका ॥१९॥

जीवस्य मूलचक्रेऽस्मिन्नधः प्राणश्चरत्यसौ ।
प्राणारूढो भवेज्जीवः सर्वभूतेषु सर्वदा ॥२०॥

तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगयोर्ध्वतः ।
अष्टप्रकृतिरूपा सा अष्टधा कुण्डलीकृता ॥२१॥

---

१७/१–गर–अण्डाकृतिसमाकारं; न६–अंधौकृति–(?)–वदाकारं। १७/२–न३, गर–भाषितं तत्त्ववादिभिः ; ग५, ६, न८–भावितं तत्त्ववेदिभिः; न४—पूरितं च त्वगादिभिः ; न६———— तत्त्वगादिभिः ; ग४, न८, क–("न८" लेखे पाठान्तरत्वेन) भूषितं तु त्वगादिभिः। १७/३–न६— चतुष्पदां तु हृन्मध्ये; ग३–चतुष्पादं तिरश्चांच । १७/४–गर, ५, ६, क—द्विजानां तुन्दमध्यमम् ; न३–तिरश्चां तुंडमध्यमे ; न४ ग३–द्विजानां तु सुमध्यमे ; ग४, न८———गुदमध्यमम् ।

१८/१–न४, ६, १, ८, गर–तन्मध्ये नाभिरित्युक्तं; न३–तन्मध्य(?ध्यं)————; ग५, क– तन्मध्ये नाभिरित्युक्ता ; ग६–तन्मध्ये नाभिरित्युक्तो (?क्ता) । १८/२–ग ५, ६–नाभौ चक्रस्य संभवः ; क–नाभीवक्रस्य सम्भवम् (?) ; त–नाभिवक्रतनुद्भवम् । १८/३–गर, ३, न४–– द्वादशारयुतं चक्रं; ग५–द्वादशारयुतं चक्रः(?क्रं)। १८/४–न३, त–तेन देहं प्रतिष्ठितम् ; न१, २, ५—नरदेहं प्रतिष्ठितम् ; गर–तेन देवाः प्रतिष्ठिताः ; ग३–देव देहः(?) प्रतिष्ठितः ; ग४–तत्र देहः ———— ; न७–येन देहः ———— ; ग५, ६, क–तेन जीवः———— । *इतः प्रभृति ४१।४ पर्यन्तं "क" लेखे तालपत्रं गलितमिति टिप्पणीर्विद्यते ।

१९/२–गर–पुण्यपापप्रबोधितः ; न३, ४, ग३—पुण्यपापप्रणोदितः ; न५–पुण्यपापप्रचोदितः; न७, ग५, ६–पुण्यापुण्यप्रचोदितः । १९/३–ग१, ३, ४, ६, न५, ६, ८–तन्तुपंजरमध्यस्थः; न१–तस्यां जरमध्यस्था (?) । १९/४–ग१, ४, ६, न६, ८–यथा भ्रमति लूतिकः; न५–यथा चरति लूतिकः ; न१, २, ७–यथा चरति लूतिका ; ग३–यथा भ्रमति यूतिका ; न४——यूथिका ।

२०/१–गर–जीवस्य मुनिचक्रे(?)ऽस्मिन्। २०/२–ग३, न६–अथ प्राणश्चरत्यसौ; न३–भ्रमत्प्राणे त्यरचासौ(?); ग४–पश्य प्राणश्चरत्यसौ । न८–वश्यः— २०/३–न३–न३–प्राणरूपो भवेज्जीवः ; न६–प्राणाहारो————; ग३–प्राणारूठि(?)————; न१–प्राणारूठास्तु ता नाड्यः । २०/४–ग१–सर्वजोवेषु सर्वदा ; ग५, ६–सर्वदेहेषु———— ।

२१/१–ग५–तस्योर्ध्वे कुण्डलीस्थानं । २१/२–न६–नाभेस्तिर्यगधोर्ध्वतः ; न१, २, ५– नाभेस्तिर्यगधो वृता ; ग५–नाभेस्तिर्यगयोर्ध्वकम् ; न४, ग३–नाभेस्तिर्यगधोगतिः ; न७–नाभेस्तिर्यग-धोगतम् ; त–नाभेस्तिर्यगवोवृंतम्(?) । २१/३–ग४, ५–अष्टप्रकृतिरूपासौ ; न४–अर्धप्रकृतिरूपा सा । २१/४–गर–अष्टधा कुटिलाकृतिः ; न४, ग३–अष्टधा कुण्डली मता ; ग४–अष्टधा कुटिलीकृता ; न३–त्वष्टधा कुण्डलीकृता ।



यथावद्वायुसंचारं जलान्नादीनि नित्यशः ।
परितः कन्दपार्श्वेषु निरुद्ध्यैव सदा स्थिता ॥२२॥

मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं तथा ।
योगकाले त्वपानेन प्रबोधं याति साग्निना ॥२३॥

स्फुरन्ती हृदयाकाशे नागरूपा महोज्ज्वला ।
वायुर्वायुसखेनैव ततो याति सुषुम्णया ॥२४॥

कन्दमध्ये स्थिता नाडी सुषुम्णेति प्रकीर्तिता ।
*तिष्ठन्ति परितः सर्वाश्चक्रेऽस्मिन्नाडीसंज्ञकाः ॥२५॥

नाडीनामपि सर्वासां मुख्यास्त्वेताश्चतुर्दश ।
इडा च पिंगला चैव सुषुम्णा च सरस्वती ॥२६॥

वारुणी चैव पूषा च हस्तिजिह्वा यशस्विनी ।
विश्वोदरा कुहूश्चैव शंखिनो च पयस्विनो ॥२७॥

---

२२/१–न१, २, ७, ८, ग१, ४–यथावद्वायुचारं च ; गर–यथावद्वायुसंचारः ; न४– यथावद्वायुचारा च(?) ; ग३–यथावद्वायुचेळांश्च(?) । २२/२–न१, ५–जलान्यादोनि नित्यशः ; ग३–जळान्नावि (?दो-) न्य (?नि) नित्यशः ; न४– ज्वलनादोनि नित्यशः ; गर–सर्वनाडीषु-नित्यशः । २२/३–न५, ग३, ४–परितः कन्दपार्श्वे तु ; न८–परितः कण्ठपार्श्वेषु(?) । २२/४– ग५–निरुद्ध्यैवं सदा स्थिता ; गर–निरुद्ध्यैव व्यवस्थितः(?) ।

२३/१–न१, २, ३–मुखेनैव समाविश्य ; गर–मुखेन स्वेन संवेष्ट्य; त–मूलेनैव समाविश्य ; न३, ४, ६, ग३—मुखेनैव सदा वेष्टय ; न७————समावेश्य। २३/२–ग३–ब्रह्मरन्ध्रमुखं सदा ; ग ५ ब्रह्मरन्ध्रं मुखं तया । २३/४–ग४–प्रबोधयति साग्निना ; ग५–प्रबोधं यान्ति(?) ———; न४–प्रबोधं यातु ———।

२४/१–त स्फुरन्त्या हृदयाकाशात् ; न१, ५, ग५–स्फुरन्त्या हृदयाकाशे ; न८–स्फुरन्त्या हृद-याकारे(?–हृदयाकाशे); न२, ६, ग५, ६–स्फुरन्त्या हृदयाकाशं ; न४, ग३–स्फुरन्ती हृदयान्तं सा । २४/२–ग५, ६–ज्ञानरूपा———; गर–नवरूपा————; न३– × × × × । २४/३–न४–वायुर्वापि सुखेनैव ; ग५–वाय्वग्निसखेनैव(?) ।

२५/१–२–न३– × × × × × × × × । न४, ग३–अत्र 'मुक्तिमार्गेति सा प्रोक्ता' इत्या-दिरधिकः श्लोको लिखितो दृश्यते तथापि न स उद्धृतोऽन्येषु लेखेषु स ४.२९ संख्यया आगत इति । एतयोरपि च स तत्रास्त्येव । २५/३–ग४, ५, ६, न६–तिष्ठन्ति परितः सर्वे(?सर्वाः) । २५/४ न१, २, ४, ७, ८, ग४, त–चक्रेऽस्मिन्नाडीसंज्ञिकाः ; ग५, ६————नाडीसंज्ञिताः ; ग१———ऽस्मिन्नाडिकास्तथा ; गर————नाडीसंचये ।

२६/२–त, गर–मुख्याश्चैताश्चतुर्दश; न३, ८, ग१–मुख्या गार्गि——— । २६/४–ग३–सुषुम्णा तु सरस्वती ।

२७/१–न१, २, ३, ५, ग३, ५, ६—वारुणा चैव पूषा च। २७/३–न२, ४, ५, ७, ८, ग४, त–विश्वोदरी कुहूश्चैव ; ग३– + + + कोहूश्चैव(?कुहूश्चैव) । २७/४– ग१————तपस्विनी ; न५————सरस्वती ।

अलम्बुषा च गान्धारी मुख्याश्चैताश्चतुर्दश ।
आसां मुख्यतमास्तिस्त्रस्तिसृष्वेकोत्तमोत्तमा ॥२८॥

मुक्तिमार्गेति सा प्रोक्ता सुषुम्णा विश्वधारिणी ।
कन्दस्य मध्यमे गार्गि सुषुम्णा सुप्रतिष्ठिता ॥२९॥

पृष्ठमध्ये स्थिता नाडी सा हि मूर्ध्नि व्यवस्थिता ।
*मुक्तिमार्गः सुषुम्णा सा ब्रह्मरन्ध्रेति कीर्तिता ॥३०॥

अव्यक्ता सैव विज्ञेया सूक्ष्मा सा वैष्णवी स्मृता ।
इडा च पिंगला चैव तस्याः सव्ये च दक्षिणे ॥३१॥

इडा तस्याः स्थिता सव्ये दक्षिणे पिंगला स्थिता ।
इडायां पिंगलायां च चरतश्चन्द्रभास्करौ ॥३२॥

---

२८/१–न३–अलंमुखा च————; ग३–अलंवुसूचि(?)——— । २८/२–न४ मुख्याश्चैव चतुर्दश ; ग५, ६—मुख्या एताश्चतुर्दश । २८/३–ग२–तासु मुख्यतमास्तिस्र : ; न३–एता——— । २८/४–न१, ग१, ४, त–तिसृष्वेकोत्तम मता ; ग२–श्रेष्टितेका(?) + + + ।

२९/१–न३–मुक्तिमार्गेण(?)सा प्रोक्ता ; ग४, न८–मुक्तिमार्गे स्थिता सा तु ; न४, ग३ मुक्तिमार्गेऽपि———— । २९/३ न१, २, ५–कन्दस्या मध्यमे————।

३०/१–२–न१– × × × × × × × × । ३०/१–ग१, ४, त–पृष्टमध्ये स्थिता नाम्ना ; ग५, ६————स्थिते नास्य(?) ; न८————स्थिते नासां ; न३, ६———— स्थिते नास्थना ; न४————ऽपि तेनासौ ; ग३————च तेन सा(?) । ३०/२–ग१, ४, ६, न८–सह मूर्घ्नि स्थिता सदा ; ग२–यासां मूर्घ्नि————; न३, ६, त–सहमूर्घ्नि व्यवस्थिता ; न४–स्वरमूर्घ्नि————; ग३–सर्वमूर्घ्नि————*न३–अस्मिंल्लेखे द्वावधिकौ श्लोकौ दृश्येतेऽस्मिस्थाने, तौ :—

तिष्ठन्ति परितस्तस्य नाड्यो मुनिसत्तमे ।
द्विसप्तति सहस्त्राणि तासां मुख्याश्चतुर्दश ॥
पृष्टमध्ये स्थिता नास्छा वीणादण्डेन सुव्रते ।
सहमस्तकपर्यंतं सुषुम्ना सुप्रतिष्ठिता ॥

३०/३–न२, ५, ६—मुक्तिमार्गे सुषुम्णा सा । ३०/४–न२, ५, ७–ब्रह्मरन्ध्रे प्रतिष्ठिता ; न३–ब्रह्मरन्ध्रप्रकीर्तिता (?); न४–ब्रह्मरन्ध्रेऽपि कीर्तिता ; ग२–ब्रह्मरन्ध्रमितीरितम् । ३०/३–४–न१ × × × × × × × × ।

३१/१–ग५, ६–अव्यक्ता सा तु विज्ञेया ; ग२–अव्यक्ता नैव————; न४, ६, ८, ग३ अव्यक्ता चैव————; ग४, न८–अभ्यासेनैव । ३१/२–न३, ६–सुषुम्णा वैष्णवी स्मृता ; न४, ग३–सूक्ष्मा सा वैष्णवी मता ।

३२/२–ग५–पिंगला दक्षिणे स्थिता; ग३————————तथा ; ग२–सव्यदक्षिण पिंगला (?); न३–दक्षिणे पिंगला स्मृता ।



इडायां चन्द्रमा ज्ञेयः पिंगलायां रविः स्मृतः ।
चन्द्रस्तामस इत्युक्तः सूर्यो राजस उच्यते ॥३३॥

विषभागो रवेर्भागः सोमभागोऽमृतं स्मृतम् ।
तावेव धत्तः सकलं कालं रात्रिदिवात्मकम् ॥३४॥

भोक्त्री सुषुम्णा कालस्य गुह्यमेतदुदाहृतम् ।
सरस्वती कुहुश्चैव सुषुम्णापार्श्वयोः स्थिते ॥३५॥

गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।
*कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ॥३६॥

यशस्विन्याः कुहोर्मध्ये वारुणी च प्रतिष्ठिता ।
पूषायाश्च सरस्वत्याः स्थिता मध्ये पयस्विनी ॥३७॥

---

३३/२–ग१–पिंगलायां च भास्करः ; न४————रविः स्थितः । ३३/३–न८ चन्द्रस्तु मन इत्युक्तः ।

३४/१–त–विषभागो रविर्ज्ञेयः ; ग६————रवेर्गागि । ३४/२ न५, ७–सोमभागश्च चन्द्रमा ; ग२–सोमभागोऽमृतं भवेत् ; ग५, ६, न६, ८————ऽमृतं स्मृतः ; ग४———— ऽमृतस्तथा(? मृतं तथा) । ३४/३–न२–तावाव(?वेव)धत्तः सकलं ; ग३—तावेव++सकलं ; ग३————सकल दत्तः(?)न३–तावे धत्तः सकलं ; ग२–उभौ विधत्तः सकलं । ३४/४–ग३–काल रात्रि (?कालं रात्रि–) दिवात्मकम् ; न४, ग३–काल रात्रिदिवात्मकम् ; ग६–कालं नक्तं———— ।

३५/१–न५ भोक्तृ————; ग३–भोक्त्रे————; ग५–गोप्त्री———— ३५/४ न३, ४————पार्श्वयोःस्थिता ; ग५, ६, न८————पृष्टपार्श्वयोः ।

३६/१–ग३–गान्धारा हस्तिजिह्वा च । ३६/२–न१, २, ५, ६–इडायाः पृष्टपूर्वयोः ; न४, ग३————पूर्वपृष्टयोः ; ग४————पार्श्वभागयोः । *न२, ३, ४–अत्रैषाधिका पंक्तिः- पूषा यशस्विनी चैव पिंगला पृष्टपार्श्वयोः । ३६/३–न२, ३, ५, ७, ग३–कुहूश्च हस्तिजिह्वायाः ; न४, ६, ग४,–कुहोश्च————; ग६–कुहाश्च(?कुह्नोश्च)————। ३६/४–न२, ३ ५, ७, ८, ग४, त–मध्ये विश्वोदरी स्थिता ; ग२————विश्वोदरस्थितः(?) ; ग३– ————विश्वधरा————।

३७/१–न३, ७, ८, ग६–यशस्विनी कुहूमध्ये ; न१, २, ५–यशस्विनी कुहोर्मध्ये ; ग२–मध्ये कुहोर्यशस्विन्याः ; ग१–पयस्विन्याः कुहोर्मध्ये । ३७/२–ग२, ६–वारुणी सुप्रतिष्ठिता ; न१, २, ३, ५, ७, ग४–वारुणा च प्रतिष्ठिता ; न४–वारणा सुप्रतिष्ठिता ; ग१————घ प्रतिष्ठिता । ३७/३–न१, २, ४, ५, ७, ग३, त–वारुणायाः सरस्वत्याः । ३७/४–ग२, ४, ५–स्थिता मध्ये यशस्विनी ; न२, ग१————तपस्विनी ; न४, ग३, क– × × × × ।

गान्धार्याश्च सरस्वत्याः स्थिता मध्ये च शंखिनी ।
अलम्बुषा च विप्रेन्द्रे कन्दमध्यादधः स्थिता ॥३८॥

पूर्वभागे सुषुम्णाया आमेढ्रान्तं कुहूः स्थिता ।
अधश्चोर्ध्वं च कुण्डल्या वारुणी सर्वगामिनी ॥३९॥

यशस्विनी च याम्यस्य पादाङ्गुष्ठान्तमिष्यते ।
पिंगला चोर्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये ॥४०॥

याम्ये पूषा च नेत्रान्तं पिंगलायास्तु पृष्ठतः ।
पयस्विनी तथा गार्गि याम्यकर्णान्तमिष्यते ॥४१॥

सरस्वती तथा चोर्ध्वमाजिह्वायाः प्रतिष्ठिता ।
आसव्यकर्णाद्विप्रेन्द्रे शंखिनी चोर्ध्वगा मता ॥४२॥

---

३८/१–न६, ८, ग१, २, ४–गान्धारायाः सरस्वत्याः ; न४, ग३– × × × × । ३८/२–ग५–स्थिते मध्ये तु शंखिनी ; न४– × × × ×। ३८/३–न१, ७–अलम्बुषा च विप्रेन्द्र; न३–अलंमुखा(?)च विप्रेन्द्रे । ३८/४–न२, ३, ग१, ४–कन्दमध्यादवस्थिता ; न१, ५, ७, त–कन्दमध्यादधोगता ; ग२–कन्दमध्यादधः शरा(?); न४–गुदमध्यादधोगता ; ग३—सुरमध्य(?) यथागता ।

३९/१–न२, ५–पूर्वभागे सुषुम्णायां । ३९/२–ग२–आमेढ्रान्तं कुहूः स्मृता ; न१, २, ४, ५, ७–मेढ्रान्तं च कुहूः स्थिता । ३९/३–न१, २, ३, ४, ५, ७, ग१, २, ३, ४, त–अधश्चोर्ध्वं च विज्ञेया ; न६–अतश्चोर्ध्वं च विज्ञेया । ३९/४–न१, २, ३, ५, ७, ग३, ६, त–वारुणा सर्वगामिनो ; ग१–वारणा————; ग२–धारगा(?)————।

४०/१–ग४–यशस्विनी तु याम्यस्य ; न८–यशस्विनी तु याम्यस्था ; न१–+ + याम्यस्य ; (?च याम्यस्य) ; न६————च याम्यस्था ; न४————यामीश्च(?); ग३————यं व्यंस्य पादांगुष्टान्तरिष्यते । ग२–नाडो यशस्विनी याम्य ; ग५, ६—यशस्विनी च सौम्या च । ४०/२–न३–याम्यस्य ; न७————चोर्ध्वं याम्यस्य । ४०/३–न१–पिंगला चोर्ध्वं याम्यान्य (?याम्यस्य) ; न२————चोर्ध्वं– । ४०/३–४– ग२, ६– × × × × × × × ×।

४१/१–न५–याम्य (?याम्ये) पूषा च नेत्रान्तं ; न३–वामे————; ग३–याम्यपृष्टं च ————। ४१/२–न७, ग१, त–पिंगलायां तु————; ग५–पिंगळायाश्च पृष्टतः ; ग६–पिंगलायां च——४१/१–२–ग२– × × × × × × × ×। ४१/३–न१, ४, ५, ७, ८, ग३ –पयस्विनी तथा गार्गि ; ग१–तपस्विनी————। ४१/४–ग५, न८–याग्ये कर्णान्तमिष्यते ; ३—वामकर्णान्तमिष्यते । ४१।३–४–ग२, ४, न६– × × × × × × × × ।

४२/१–२–ग४– × × × × × × × ×। ग१–सरस्वती तथा चोर्ध्वगामिनी या प्रतिष्ठिता । ४२/२–ग२–आजिह्वान्तं————; ग४–आजिह्वायां————। ४२/३–न४–आसव्यकर्णं विप्रेन्द्रे ; ग५–आसर्वकण्ठाद्विप्रेन्द्रे ; न६–नासान्तकर्णाद्विप्रेन्द्र । ४२/४–ग५, ६–शंखिनी चौर्ध्वगामिनी ; न३————चोर्ध्वगामिना (?–गामिनो) ।



गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ।
इडा च सव्यनासान्तं सव्यभागे व्यवस्थिता ॥४३॥

*हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ।
विश्वोदरा तु या नाडी तुन्दमध्ये व्यवस्थिता ॥४४॥

अलम्बुषा महाभागे पायुमूलादधोगता ।
गतास्त्वन्याः समुत्पन्नाः शिराश्चान्याश्च तास्वपि ॥४५॥

यथाश्वत्थदले तद्वदब्जपत्रेषु वा शिराः ।
नाडीष्वेतासु सर्वासु विज्ञातव्यास्तपोघने ॥४६॥

प्राणोऽपानःसमानश्च उदानो व्यान एव च ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनंजयः ॥४७॥

एते नाडीषु सर्वासु चरन्ति दश वायवः ।
एतेषु वायवः पंच मुख्याः प्राणादयः स्मृताः ॥४८॥

---

४३/१–न३, ग१–गान्धारा सव्यनेत्रान्ते ; ग६, न८, क–गान्धारी सव्यनेत्रान्ता ; न६, ग३, ४–गान्धारा सव्यनेत्रान्तं ; न४–गान्धारा सव्यनासान्तं । ४३/२–ग१–(नेत्रान्ते) चेडायाः पृष्टतः स्थिता ; ग२–इडायाः पृष्टतः स्थिरा । ४३/३–ग२–इडा च सव्यनेत्रान्तं । ४३/४–ग४–सर्वभागे व्यवस्थिता । ४३/३–४–ग५, ६, क– × × × × × × × ×।

*४४/१–४–न३, ग५, ६, क– × × × × । ४४/१–२–ग२–हस्तिजिह्वा सदा सव्यपादांगुष्टान्तमिष्यते । ४४/३–न४, ५, ७, त—विश्वोदरी तु या नाडी (न७–नारी?) । ४४/४–ग२–कन्दमध्ये व्यवस्थिता ।

४५/१–ग३, ६–अलंवुसा महाभागा ; न३–अलंमुखा(?)महाभागे । ४५/२–ग४, ५, ६, क—पायुमूलादयोर्ध्वगा ; ग२–पायुमूलादधोमुखी ; न१–पायुमूलमधोगता ; ग४–पायुगुल्फादधोगता (?); न८–वायो–(?पायो–) मूलादधोगता । ४५/३–न१, २, ३, ५–एतास्वन्याः समुत्पन्नाः; न६–तास्त्वन्याश्च————; त–एतामुख्या(:)समुत्पन्नौ(?समुत्पन्नाः) । ४५/४–ग१, त–सिरास्वन्याश्च तास्वपि ; ग२, ३, ४, न६–शिरास्त्वन्याश्च———— ; न३–शिरास्वन्यासु तास्वपि ; ग५, ६—तास्वन्याश्चैव तास्वपि ।

४६/१–ग६–यथापद्मदले तद्वत् । ४६/२–न१, २, ५, ७–अब्जपत्रेऽथवा शिराः ; त——————यथा सिराः ; ग२, क–अब्जपत्रेषु याः शिरा ; न८–अब्जपत्रेषु वा स्थिताः (?शिराः) ; ग४–इक्षुपत्रेषु वा शिराः ; ग५–'अब्जपत्रेषु वा शिराः' इति प्रथमं लिखितं पादमपमृज्य 'सुषुम्णा या मया प्रोक्ता यथा पत्रेषु वा शिरः' इत्यशुद्धा पंक्तिस्तत्स्थाने लिखिता दृश्यते । प्रथमः पादः 'यथाश्वत्थदले तद्वत्' इत्यपि तत्रास्त्येव । ४६/३–ग६–नाडीष्वन्यासु सर्वासु ; ग४–नातिष्ठितासु(?) ————। ४६/४–न३–विज्ञातव्यास्तपोनिधेः (?तपोनिधे) ; ग६–विज्ञातव्यं तपोघने ; ग२—ज्ञातव्या दितराः (?हीतराः) शिराः ।

४७/१–न३, ग३—प्राणापानः समानश्च । ४७/२–ग६–चोदानः व्यानः स एव च (?चोदानोव्यान एव च) । ४७/३–न१, ५, ६, ग२—नागः कूर्मश्च कृकरः ; न३, ७–———— कृकलः ; ग६————कृकरकः ; ग३–नागहर्म क्रकरश्च(?नागः कूर्मः कृकरश्च) ।

४८/३–ग३–एते च वायवः पंच ।

शैवं वा वैष्णवं वाथ व्याहरन्नन्यमेव वा ।
आसने नान्यधीरास्ते दीपं हस्ते विलोकयन् ॥६४॥

आयुर्विघातकृत्प्राणस्त्वनेनाग्निकुलं गतः ।
धूमध्वजजयं यावन्नान्यधीरेवमभ्यसेत् ॥६५॥

धारणं कुर्वतस्तस्य शक्तिः स्यादिष्टभोजने ।
देहश्च लघुतां याति जठराग्निश्च वर्धते ॥६६॥

दृष्टचिह्नस्ततस्तस्मान्मनसारोप्य मारुतम् ।
मन्त्रमुच्चारयन्दीर्घं नाभिमध्ये निरोधयेत् ॥६७॥

---

६४/१–न१, ४, ग३————————वापि ; न८————————वाथ ; ग२————————वान्यं ; न————————मन्त्रं ; न३–रौद्रं वा वैष्णवं वापि ; न२, क– × × × × । ६४/२–ग२–व्याहरन्मन्त्रमेव वा ; न४, ५, ७–व्याहरंतोऽन्यमेव वा ; ग५, ६–व्याहरन्नित्यमेव वा ; न८–मन्त्र वाराहमेव वा ; न२, क– × × × ×। ६४/३–न३, ५, ६, ग३————————नन्यधी————; न४————————नन्यधीतयो(?) ; ग२–आधितः सुधियः कृत्या(?); क– × × × ×। ६४/४–ग२–हस्ते दीपं————————; न३–दीपमग्नावलोकयन्; न६–दीपं हस्तेऽवलोकयन्; न४–दीपहस्ते इर्चं सुताः(?); क– × × × × । कलिकातामुद्रितपुस्तके 'दीपं हस्ते विलोकयेत्'।

६५/१–ग५, ६–आयुर्विघातकः————; ग२–आयुविपूतकृत्प्राणः(?); न४–आयुविघा+कृत्प्राणः ; ग३–आयं विद्यूतकृत्प्राणः (?); क– × × × ×। ६५/२–ग२————कुलं चतः न३————————कुलं तपः(?) ; ग२–गच्छेद्गार्गि कुलं गतः(?ततः) ; क– × × × × । ६५/३–न२, ३, ६, ७, ग६–धूमध्वजजयो————; न१–धूमध्वनिर्जया————(?) ; न५–धूमध्वनिजयो————; क– × × × ×। ६५/४–तावद्धीरेव–(?)मभ्यसेत्; क– × × × ×।

६६/१–न३–धारणं कुकुतो रोप्य(?) ; ग२, क– × × × × । ६६/२–एतच्चरणं किंचित्संशयास्पदम् । तस्य हस्तलेखेषु पाठभेदा :–(?)न२, ५, ७, त–यथा ग्रन्थे स्वीकृतः; (२) न१, ग१–शक्तिस्थाने प्रभंजनम् ; (३) न४–शक्ति——प्रभंजनः ; (४) ग४–शक्ति——शिखि-भ्रमम् ; (५) न३, ८, ग५, ६–वह्निस्थाने प्रभंजनम् ; (६) न६, ग३–वह्नि————प्रभंजनः ; ग२, क– × × × × । मुद्रितपुस्तकेभ्यश्च नडीआदे, मुरादाबादे, कलिकातायां च मुद्रितेषु "वह्निस्थानं प्रभंजनम्" इति पाठो, यो न कस्मिन्नपि लेखे दृष्यते; मुंबापुर्यां च मुद्रिते "वह्निस्थाने प्रभंजनः" इति पाठो यः स "न६, ग३" लेखयोर्विद्यते; तथापि स न समीचीन इति मन्ये पूर्वापरसम्बन्धाभावात् । ग्रन्थे स्वीकृतः पाठस्तु सन्दर्भे युक्त इति मे मतिर्यतस्तेन द्वितीयचरणेनोक्तरीत्या प्राणधारणेन प्राणजयस्यैकस्य चिह्नस्य कथनं भवति, यथा द्वितीयतृतीययोः ३–४ चरणाभ्याम् । ६६/३–न१–देहस्तु————————; ग२, क– × × × × । ६६/४–न२, ५–जठराग्नेश्च दीपनम् ; ग४, ५, ६–जाठराग्निश्च वर्धते ; न३–जठराग्निर्विवर्धितः(?) ; त–जाठराग्नेश्च दीपनम् ; ग२, क– × × × × ।

६७/१–एतच्चरणं द्विधा विभज्य साम्यवैषम्ये निर्णितव्ये । तत्र प्रथमो विभागः "दृष्टचिह्न–" । तस्य ये पंच भेदा दृष्यन्ते तेः–न१, ३, ४, ६, ८, ग१, ४, ५, ६, त–दृष्टचिन्हः– ; न२, ५–दृष्टचिह्नं; ग३–दृष्टिचिह्नं ; न६–दृष्टवा चिह्नं; न७–दृष्टचिह्ने । द्वितीयो विभागः "ततस्तस्मात्" । तस्य त्रयः पाठभेदा दृष्यन्ते, ते :–न३, ४, ६, ८, ग३, ४, ५, ६–ततस्तस्मात् ; न१, ७–ततस्तस्मिन् ;न२, ५, ग१, त–ततः स्थानात् ; ग२, क–समस्ता पंक्तिरेव नास्ति । मुद्रितपुस्तकेभ्यो "दृष्टचिह्नस्ततः स्थानात्" इति पाठः श्रिवेन्द्रम्पुस्तके, मुम्बापुर्यां, नडीआदे च मुद्रितेषु स्वीकृतो दृष्यते, मुरादाबादे, कलिकातायां च मुद्रितयोः "दृष्टचिह्नस्ततस्तस्मिन्" इति । तत्र "दृष्टचिह्नः" शब्दः सामान्यः, स च १० हस्तलेखेष्वपि विद्यते । "ततस्तस्मिन्", इत्येको, ततः स्थानात्" इति च द्वितीय एतौ पाठौः केषु केषु दृश्येते तथापि ग्रन्थसन्दभ तयोरेकोऽपि न समीचीनः ; "ततस्तस्मात्"च न केवलं समीचीनः परं च ८ हस्तलेखेषु विद्यत इति "दृष्टचिह्नस्ततस्तस्मात्" इति चरणं स्वीकरणीयं भवति । ६७/२–ग२, क– × × × ×। ६७/३–ग१, ५, न३, ६————————गार्गि ; न१, ६, ८, ग४————————मुच्चारयेद्गार्गि ; ग२, क– × × × × । ६७/४–ग४————————निरोधयन् ; ग२, क– × × × × ।



यावन्मनो लयत्यस्मिन्नाभौ सवितृमण्डले ।
तावत्समभ्यसेद्विद्वान्नियतो नियतासनः ॥६८॥

एतेन नाभिमध्यस्थधारणेनैव मारुतः ।
कुण्डलीं याति वह्निश्च दहत्यत्र न संशयः ॥६९॥

सन्तप्ता वह्निना तत्र वायुना चालिता स्वयम् ।
प्रसार्य फणभृद्भोगं प्रबोधं याति सा तदा ॥७०॥

---

६८/१–न१, २, ३, ५, ७, ८–यावन्मनोलयस्तस्मिन् ; ग३–यावन्मनः स्थितस्तस्मिन्(?); न४–यावन्मनो भवेत्तस्मिन् ; ग६–यावन्निरोधयेत्तस्मिन् ; ग२, क– × × × × । ६८/२–ग१–नाभौ सावित्रमण्डले ; ग२, क– × × × । ६८/३–ग२, क– × × × × । ६८/४–ग१, ४, ५, ६————————नियताशनः ; ग२, क– × × × ×।

६९/१–न१, २, ५, ७, ग१————————नाभिमध्यस्थो ; न३————————नाभिमध्यस्थं(?) ग३————————नाभिमध्यस्तु ; ग४————नाभिमध्येन; ग२, क– × × × ×। ६९/२–ग३–वारणे नैव(?)————; न४–धारयेच्चैव मारुतम्; ग२, क– × × × ×। ६९/३–न३–कुंडलीं चाति(?)————; न८–कुंडलीं वाति——; ग५, ६–कुंडलीं वायु————; ग१–कुण्डली यत्र——(?) । ग२, क– × × × ×। ६९/४–ग३–देह्यन्यत्र(?)————————; ग२, क– × × × ×।

७०/१–ग१, ४, न३, ४–सन्तप्तो————————; न५, ८, ग३–सन्तप्तवह्निना————; न६–सन्तप्ते————————; ग५, ६–सर्वतो————————; ग२, क– × × × ×। ७०/२–त–————————चारिता————; न६, ग४, ५, ६–वायुना च प्रवातितः ; ग१————————प्रवाहितः ; न३, ४————————प्रचालितः ; ग३————————अभिप्रचालितः ; न८—तीव्र वातिता ; ग२, क– × × × ×। ७०/३–न८–प्रसार्य फणिभृद्भोगं; ग२, क–× × ×। ७०/४–अस्मिश्चरणे पुनः साम्यवैषम्ये भवतस्तेन तं द्विधा विभज्य निश्चयो कर्तव्यः। तस्य द्वौ विभागौः—(१) प्रबोधं याति,(२) सा तदा चेति । तत्सम्बधिनो लेखभेदाः—(१)–न१, २, ३, ५, ७, ८, ग१, ४, ५, ६, त–प्रबोधं याति ; तस्य विकृतयस्त्रयः—न४–प्रवाधं याति; न६– प्रबोधयति ; ग३–अगाधं याति । (२) न२, ५, ७, त–सा तदा ; न१, ४, ग१, ४–तत्तदा ; न३, ६, ८, ग३, ५ ६–तत्तथा । ग२, क– × × × । 'कुण्डली' (६९/३) शब्दस्य स्त्रीलिंगत्वात्तस्य गुणवाचकाः सर्वेऽपि शब्दाः स्त्रीलिंगप्रत्ययान्विता एव भवेयुरिति स्वीकृतपाठस्यौचित्यमवगन्तव्यम् ।

प्रबुद्धे संसरत्यस्मिन्नाभिमूले तु चक्रिणि ।
ब्रह्मरन्ध्रे सुषुम्णायां प्रयाति प्राणसंज्ञकः ॥७१॥

सम्प्राप्ते मारुते तस्मिन्सुषुम्णायां वरानने ।
मन्त्रमुच्चार्य मनसा हृन्मध्ये धारयेत्पुनः ॥७२॥

हृदयात्कण्ठकूपे च भ्रुवोर्मध्ये च धारयेत् ।
तस्मादारोप्य मनसा साग्निं प्राणमनन्यधीः ॥७३॥

धारयेद्व्योम्नि विप्रेन्द्रे व्याहरन्प्रणवाक्षरम् ।
वायुना पूरिते व्योम्नि साङ्गोपाङ्गे कलेवरे ॥७४॥

---

७१/१–न१, २, ५, ७, त————संचरत्यस्मिन् ; न३, ग१, ३, ६————संस्मरत्यस्मिन् ; न४————प्रसृते ह्यस्मिन् ; ग५————च स्फुरत्यस्मिन् ; न६–प्रबुद्धय संस्फुरत्यस्मिन् ; ग४–प्रबुद्धः संस्मरत्यस्मिन् ; ग२, क– × × × ×। ७१/२–न१, २, ५, ७, त–नाभिमूले च————; ग३————च चाश्रणि(?); ग१–आदिमूले च चक्रिणि ; ग२, क– × × × ×। ७१/३–ग२, क– × × × ×। ७१/४–न२————प्राणसंज्ञिकम्(?) ; ग१, न७————प्राणसंज्ञकम्(?) ; ग३————प्राणसंक्रमः ; ग२, क– × × × ×।

७२/१–२–न४–एषा पंक्तिर्विद्यत एव तथापि सा न स्वस्थाने यथात्र, किन्तु ७२/३–४, ७३/१–४ अनन्तरम्। ७२/१–न२, ७, ग२, क– × × × × ; न६–खे प्राप्ते————। ७२/२–न२, ७, ग२, क– × × × ×। ७२/३–ग२, क– × × ×। ७२/४–न३, ग३————सुधीः ; ग४————धारयत्ततः ; न२, ७, ग२, क–× × × ×।

७३/१–ग५, ६–हृदयात्कण्ठमध्ये च ; न३–हृदये कण्ठकूपे(ऽ)थ ; न८–हृदयात्कन्दमुले च; न१, ४, ५, ग२, क–× × × ×। ७३/२–ग५————दक्षिणाम् ; न१, ४, ५, ग२ क– × × × ×। ७३/३–४–ग३–७१ श्लोकस्य पुनरुक्तित एषा पंक्तिर्विद्यत अत्र। ७३/३-न१, ग२, क– × × × ×। ७३/४–न२, ३, ६–साग्निप्राणमनन्यधीः ; ग२, क– × × × ×।

७४/१–अस्मिश्चरणे पुनस्तं द्विधा विभज्य साम्यवैषम्ये निश्चितव्ये । तौ विभागौः–(१) "धारयेद्व्योम्नि", (२) "विप्रेन्द्रे" । तत्सम्बन्धिनो लेखविभागाश्चः–(१) न२, ५, ६, ७, ८, ग३, ४, ५, ६–धारयेव्योम्नि ; न१, ३, ४, ग१, त–धारयेद्यो हि ; ग२, क– × × × ×। (२) न१, २, ४, ५, ६, ७, ८, ग३, ५, ६, त–विप्रेन्द्रे ; ग१, ४–विप्रेन्द्रो ; न३–विप्रेन्द्र ; ग२, क– × × × ×। ७४/२–ग२, क– × × × ×। ७४/३–न८————पूरयेव्योम्नि (?); न१, ३, ४————पूरितो————; न६————पूरितं————; ग२, क– × × × ×। ७४/४–न१, २, ३, ग१, ४, ५–सांगोपांगकलेवरे; न६–सांगोपांगं कलेवरम्; ग२, क– × × × ×।



तदात्मा राजते तत्र यथा व्योम्नि विकर्तनः ।
शरीरं विसुसूक्ष्मश्चेदेवं सम्यक् समाचरन् ॥७५॥

एकाक्षरं परं ब्रह्म ध्यायन्प्रणवमीश्वरम् ।
संभिद्य मनसा मूर्ध्नि ब्रम्हरन्ध्रं सवायुना ॥७६॥

प्राणमुन्मोचयेत्पश्चान्महाप्राणे खमध्यमे ।
देहातीते जगत्प्राणे शून्ये नित्ये ध्रुवे पदे ॥७७॥

आकाशे परमानन्दे स्वात्मानं योजयेद्धिया ।
ब्रह्मीवासौ भवेद्गार्गि न पुनर्जन्मभाग्भवेत् ॥७८॥

तस्मात्त्वं च वरारोहे नित्यं कर्म समाचर ।
सन्ध्याकालेषु वा नित्यं प्राणसंयमनं कुरु ॥७९॥

---

७५/१–न३————रतिते(?)——; ग३–तथात्मा————; न१–तदा तु————; ग४–तथा विराजते————; न७, त–तदात्मा राजते तस्य ; न५–तदा तु——तस्य ; ग२, क–× × × ×। ७५/२–न५————विवर्तिनः ; न३–तथा————विकर्तनः; ग२, क– × × × ×। ७५/३–ग३–शरीरं मेवशि सूक्ष्मं चेत्(?); ग६–शरीरमपि सूक्ष्मं चेत् ; ग२, क– × × × ×। ७५/४–न२, ३, ४, ६, ७, ८, ग४–————समाचरेत् ; ग५, ६–——समभ्यसेत्; ग३–——सम्यं(?) समाचरेत् ; ग२, क– × × × ×।

७६/१–न१, २, ५————ब्रह्म ध्यायन् ; न४, ग३–एकाकारं परं ब्रह्म; ग१, २, क– × × × × । ७६/२–न१, २, ५–प्रणवमीश्वरं सदा; ग१, २, क– × × × × । ७६/३-न८–संभेद्य————; न३–संरुध्य————; ग१–संक्षिप्य(?)————; ग२, क– × × × ×। ७६/४–ग५, ६–ब्रह्मरन्ध्रस्य वायुना ; ग४–ब्रह्मरन्ध्रस्व(?) वायुना; न५–ब्रह्मरन्ध्रसचायुना(?) ; न३–ब्रह्मरन्ध्रसमाधिना; ग२, क– × × × × ।

७७/१–ग३, ६–प्राणानुन्मोचयेत्पश्चात्; न४–प्राणांस्तु मोचयेत्पश्चात् ; न६–प्राणं हि मोचयेत्पश्चात् ; ग४, न८–प्राणं च मोचयेत्पश्चात्; ग१–प्राणं विमोचयेत्पश्चात्; ग२, क– × × × ×। ७७/२–न१, २, ४, ग३————सुमध्यमे ; न३, ५, ७, ग६–महाप्राणेषु मध्यमे ; ग१–महाप्राणे च————; ग४–महाप्राणश्च(?)————; न८–महाप्राणौघ————; ग२, क– × × × ×। ७७/३–न३–देहातीते ततो योगी; ग३–चेहातीतजगत्प्राणे(?); न६————जयत्प्राणे(?); ग२, क– × × × ×। ७७/४–न३, ४, ७————नित्यध्रुवे————; ग३–शून्ये सत्ये——; ग२, क– × × × × ।

७८/१–न३–आकाशेयोपमानन्दे ; ग२, क– × × × ×। ७८/२–न१, २, ४, ५, ७, ग३, त————सुधीः ; न६————तदा ; ग२, क– × × × × । ७८/३–न३, ग५–ब्रह्मैव स भवेद्गार्गि ; न४–ब्रह्मैव संभवेद्गार्गि; ग४–ब्रह्मैवानुभवेद्गार्गि ; ग३–ब्रह्मैव संभवेद्योगी ; ग२, क– × × × ×। ७८/४–ग२, क– × × × ×।

७९/१–ग३–तस्मात्पंच——; न३, ग२, क– × × × × । ७९/२–ग१, ३, ४–नित्यकर्म————; न६————समाचरेः; न३, ग२, क– × × × ×। ७९/३–४–न३, क– × × × × × × × × ।

प्राणायामपराः सर्वे प्राणायामपरायणाः ।
प्राणायामविशुद्धा ये ते यान्ति परमां गतिम् ॥८०॥

प्राणायामादृते नान्यत्तारकं नरकादपि ।
संसारार्णवमग्नानां तारकः प्राणसंयमः ॥८१॥

तस्मात्त्वं विधिमार्गेण नित्यं कर्म समाचर (न्)।
विधिनोक्तेन मार्गेण प्राणसंयमनं कुरु ॥८२॥

इति श्रीयोगयाज्ञवल्क्ये षष्ठोऽध्यायः ॥

---

८०/१—क— × × × ×। ८०/२—न४—"ब्रह्मविष्णुशिवादयः"——प्रथमं लिखितं यथा-स्वीकृतं चरणं पिधाय ; क— × × × ×। ८०/३—न४, ६, ग४, ५, ६—प्राणायामैर्विशुद्धा ये ; क— × × × ×। ८०/४—क— × × × ×।

८१/१—२—ग२—प्राणायामातारं + + तारं नरकादपि (?) ; न६, क— × × × × × × × ×। ८१/१—न५—प्राणायामादृतं————। ८१/२—न५, ७————नरकादिषु ; न२, त—तारको नरकादिषु (?) ।८१/३—न६, क— × × × ×। ८१/४—ग३—तारकं प्राणसंयमम् (?) ; न६, क— × × × ×।

८२/१—ग४—तस्मात्त्वं च वरारोहे; क— × × × ×। ८२/२—न१, २, ४, ६, ग१ ३—नित्यकर्म————; ग२—नित्यं संयममाचर ; क— × × × ×। ८२/३—न३—विधिनो-क्तेन मार्ग्रेण (?) म.ग्रोंण ; ग २, ४, क— × × × ×। ८२/४—न३—प्राणसंय (-म-) नं——; ग२ ४, क— × × × ×।



## परिशिष्टम्

षष्ठाध्यायस्य ४।२ अनन्तरं + इति संज्ञितायां पादटिप्पण्यामुल्लिखिता अधिकाः श्लोकाः ॥

न८—नासाग्रे दृक् सदा सम्यक् सव्ये न्यस्येतरं करम् ।
नासाग्रे शशभृद्बिम्बे ज्योत्स्नाजालवितानके ॥(१)॥

अम्बोमा(?) सहितं शुभ्रं सोमसूर्याग्निलोचनम् ।
पंचवक्त्रं महादेवं चन्द्रशेखरमीश्वरम् ॥२॥

नन्दिवाहनसंयुक्तं सर्वदेवसमन्वितम् ।
प्रसन्नं सर्ववरदं ध्यायेत्सर्वायुधं शिवम् ॥३॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
अकारमूर्तिरेतेषां रक्तांगी हंसवाहिनी ॥४॥

दण्डहस्ता सती बाला गायत्रीत्यवधार्यताम् ।
अकारमूर्तिरेतेषां कृष्णांगी वृषवाहनी ॥५॥

चक्रहस्ता सती चैव सावित्रीत्यवधार्यताम् ।
मकारमूर्तिरेतेषां श्वेतांगी तार्क्ष्यवाहिनी ॥६॥

शूलानन्दमयी वृद्धा सरस्वत्यवधार्यताम् ।
माहेश्वरीति सा प्राज्ञैः पश्चिमा परिकीर्तिता ॥७॥

सृष्ठिस्थित्यन्तकालाद्या मकारोऽप्यन्तकारमकः ।
अक्षरत्रयमेवैतत्कारणत्रयमिष्यते ॥८॥

त्रयाणां कारणं ब्रह्म सद्रूपं सर्वकारणम् ।
एकाक्षरं परं ज्योतिस्तमाहुः प्रणवं बुधाः ॥९॥

---

ग५—एभ्यः १, ४—१० श्लोका अस्मिन्नपि लेखे सन्ति निम्नलिखितैः पाठान्तरैः—

१/१—नासाग्रदृक्————। १/३;—नासाग्रशशभृद्बिम्ब——। १/४—ज्योत्स्नाजालविता-नितम् । २—३— × × × × । ४/१—यद्वेदादौ————। ५/३—उकारमूर्तिरेतेषां । ५/४—श्वेतांगी तार्क्ष्यवाहिनी । ६/४—कृष्णांगी बृषवाहिनी । ७/१—त्रिशूलानन्दमयी । ७/३—माहेश्वरीति सा प्राज्ञी । ८/१—सृष्टिस्थितिकृत्वाद्यौ (?) । ८/३—अक्षरत्रयमेतत्तु । ९/१—यात्राणां (?)————। ९/२—भारूपं————।

ग६—ये श्लोकाः (१, ४—१०) ग५ लेखे त एवास्मिन्नपि लेखे सन्ति तथापि तस्मिन्कानि विशिष्टानि पाठान्तराणि दृश्यन्ते, तानिः—

एवं ज्ञात्वा विधानेन प्रणवेन समन्वितम् ।
प्राणायामं ततः कुर्याद्रेचपूरककुम्भकैः ॥१०॥

---

१/१–नासाग्रदृक्————————। १/३–नासाग्रशशभृद्बिम्बं । १/४–ज्योत्स्नाजालविता-नितम् । २–३– + + + + । ४/१–यद्वेदादौ————————। ५/३–उकारमूर्तिरेतेषां । ५/४–श्वेतांगी तार्क्ष्यवाहिनी । ६/४–कृष्णांगी वृषवाहिनी । ७/१–त्रिशूलं दधती————————। ८/१–सृष्ठिस्थित्यात्मकावाद्यौ । ८/२–मकारो त्यन्त–(?)–कारकः । ८/३–अक्षरत्रयमेतत्तु । ९/२–भारूपं————————।

विशेषा टिप्पणी:–एभ्यो टिप्पणीभ्यो स्पष्टमेव प्रतीयते यत् "ग५, ६" लेखात्रेकस्यैव मूललेखस्य प्रति-लेखाविति, "न८" लेखश्च तस्यैव मूललेखस्य तृतीयप्रतिलेखस्य प्रप्रतिलेख इति ।



## सप्तमोऽध्यायः ॥

*याज्ञवल्क्य उवाच—

उक्तान्येतानि चत्वारि योगाङ्गानि द्विजोत्तमे ।
प्रत्याहारादि चत्वारि शृणुष्वाभ्यन्तराणि च ॥१॥

इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
वलादाहरणं तेषां प्रत्याहारः स उच्यते ॥२॥

यद्यत्पश्यसि तत्सर्वं पश्येदात्मवदात्मनि ।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ॥३॥

कर्माणि यानि नित्यानि विहितानि शरीरिणाम् ।
तेषामात्मन्यनुष्ठानं मनसा यद्बहिर्विना ॥४॥

---

सप्तमोऽध्यायः ॥

*न४, ५–श्री याज्ञवल्क्य उवाच ; न८–याज्ञवल्क्यः—; न३-श्री भगवानु ॥ न६–भगवानुवाच ; ग६–ओम् भगवान्– ; न१, २, ७, ग१, २, ५, त, क— × × × × ।

१/२–न५, ७, ८, ग५, त— ————————वरानने । १/३–न१, २, ३, ५, ६, ८, ग२, ३, ४, ५, ६, त–प्रत्याहाराणि———————— ।

२/१–न३, ६– ————————हि चरेतां(?) ; ग५– ————————हि चरतां ; ग३– ————————विचरतां । २/३–ग२–वलोदाहरणं(?)————————।

३/१–न४–यद्यत्पश्यति—; न३–यच्च पश्यति————————; ग३–यदु + + + + ति————————। ३/२–न१, २, ३, ४, ५, ६, ग१, ४–पश्येदात्मानमात्मनि ; ग२–पश्येदात्मानमात्मना । ३/३–ग६– ————————स वै————————। ३/४–न६–योगिविद्भिर्महात्मभिः(?) ।

४/१–ग३–कर्मणो निधित्यानि(?) । ४/२–ग३–विदितानि————————। ४/४–न३–मनसो यद्वहिर्विना ; ग३–मनसा युद्धर्विना(?) ; ग१–मनसा यत्प्रकल्पितम् ।

प्रत्याहारो भवेत्सोऽपि योगसाधनमुत्तमम् ।
प्रत्याहारः प्रशस्तोऽयं सेवितो योगिभिः सदा ॥५॥

अष्टादशसु यद्वायोर्मर्मस्थानेषु धारणम् ।
स्थानात्स्थानात्समाकृष्य प्रत्याहारो निगद्यते ॥६॥

अश्विनौ च तथा ब्रूतां गार्गि देवभिषग्वरौ ।
†मर्मस्थानानि सिद्ध्यर्थं शरीरे योगमोक्षयोः ॥७॥

तानि सर्वाणि वक्ष्यामि यथावच्छृणु सुव्रते ।
पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्ये तथैव च ॥८॥

चित्योर्मूलं च जान्वोश्च मध्ये चोरुद्वयस्य च ।
पायुमूलं ततः पश्चाद्देहमध्यं च मेढ्रकम् ॥९॥

---

५/१-२—न४, ग३— × × × × × × × ×। ५/३—न५, ८, ग१, ५, ६, क—प्रत्याहारे प्रशस्तं तत् ; न१, ४, ७, ग४—प्रत्याहारं प्रशस्तं तत् ; ग२—प्रत्याहारं प्रशस्तं तं ; न४, ग३—प्रत्याहार(?) प्रशस्तं तत् ; न३—प्रत्याहारं प्रशंसन्ति । ५/४—न१, ४, ५, ६, ७, ८, ग१, ३, ५, ६, क—सेवितं—————— ; ग२—सेवन्ते योगिनः सदा ; ग४—योगिभिः सेवितं सदा ; न३—स वेत्ति(?सेवितं) योगिभिः सदा ।

६/१—न६—अष्टादशस्तु(?)——— ————। ६/२—न३— ——————धारयेत् ; न७— ——————धारणे(?) । ६/३—त, न४, ग४, ५, ६—स्थानात्स्थानं—————; न३—स्थानस्थानं(?)—————— ।

७/१—ग१— —————तु यथाऽब्रूतां ; न४— —————च तदाब्रूतां ; ग२— ————— तत्र तौ ब्रूतां ; न१, २, ५, ७, ८— ——————तथा ख्यातां । ७/३—न६— ————— सिध्द्यर्थे । ७/४—ग४, ५, क— —————भोगमोक्षयोः ; न८— —————स्वर्गमोक्षयोः ; ग२— ——————योगभोगयोः । † अत्र "न६" लेखे "मध्यमेऽपि हृदये च——————मनसो-रुचिरूपम्" इति श्लोको वर्तते। सो नाधिकः किन्तु द्वादशाध्यायान्तर्गतो २३ तमः श्लोको लेखकस्य भ्रमेणात्र प्रविष्ट इति नासावुद्धृतोऽस्यां टिप्पण्याम् ।

८/२—ग४— ——————सांप्रतम् ; ग५— ——————सादरम् ; ग६— ————— संप्रति । ८/३—ग१, २, त—पादाङ्गुष्ठे च । गुल्फे च(?) ८/४—न१, ग५, ६—जङ्घमध्ये——; ग२—जङ्घामध्यं——; न४, ७, ग३—जङ्घामध्यौ(?)—————; ग४—जङ्घामेढ्रा—————।

९/१-२—अत्र दृश्यमाणानां पाठभेदानां वैशिष्ट्याद्द्वावपि चरणावेकत्र विचारणीयौ भवतः। ताभ्यां भूतां समस्तां प्रथमां पंक्तिं च चतुर्धा विभज्य लेखानां साम्यवैषम्ये निर्णेतव्ये। ते च विभागाः—(१) चित्योर्मूले च ; (२) जान्वोश्च ; (३) मध्ये ; (४) चोरुद्वयस्य च। तत्सम्बन्धिनो लेखानां विभागाश्चेदृशाः—(१) ग३, ४ न३—चित्योर्मूले च; न७—स्फिजोर्मूलं च; न२—स्फिचोर्मूलं च ; न८—स्फिग्जोमूर्ते(?)च ; ग५, ६, क—स्फिजोर्मूले च ; न१, ४, ५, ६, ग१, त—चित्योर्मूलं च; ग२—



नाभिश्च हृदयं गार्गि कण्ठकूपस्तथैव च ।
तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले ॥१०॥

भ्रुवोर्मध्यं ललाटं च मूर्धा च मुनिसत्तमे ।
मर्मस्थानानि चैतानि मानं तेषां पृथक् शृणु ॥११॥

पादान्मानं तु गुल्फस्य सार्धाङ्गुलचतुष्टयम् ।
गुल्फाज्जङ्घस्य मध्यं तु विज्ञेयं तद्दशाङ्गुलम् ॥१२॥

---

तयोर्मूलं च; (२) न१, २, ७, ग४, ५, ६, त. क—जान्वोश्च ; ग१, २, ३, न३—जानू च; न६—जानौ च ; न४—जानु(—मध्यं); क—जानोश्च; न८—वाह्वोश्च; (३) न१, २, ५, ७, ८, ग१, २. ४, ५, ६, त, क—मध्ये ; न३, ग३—मध्यात् ; न४, ६—मध्यं ; (४) न३, ४, ६, ८, ग१, २, ३, ४, ५, ६, त, क—चोरुद्वयस्य च ; न१, २, ५, ७—चोरुभयस्यं च। ९/३-४—अस्याः पंक्तेरपि तथैव रीत्या लेखानां साम्यवैषम्ये निर्णेतव्ये । तस्याश्चतुर्विभागाः—(१) पायुमूलं ; (२) ततः पश्चात् ; (३) देहमध्यं च ; (४) मेढ्रकम् । तत्सम्बन्धिनो लेखविभागाः—(१)न१, २, ३, ४, ५, ६, ७, ग२, ४, ५, ६, त, क—पायुमूलं ; न८—वायुमूलं ; ग१—पादमूले : ; ग३— × × ; (२) ग३— × × ; सर्वेष्वन्येषु—ततः पश्चात् : (३) ग२—देहमध्यं च ; न१—मध्यदेहं च ; न२, ५, ७, त—मध्यदेहश्च ; न३, ग१—मध्ये देहं च ; न६, ग६, क—मध्ये देहस्य ; ग५, न८—मध्यं देहस्य ; ग३— × × × ; (४) ग३— × × × ; सर्वेष्वन्येषु—मेढ्रकम् ।

१०/१—ग१—नाभि च(?)———; ग३— × × × ×। १०/२—न२, ६, ७—कण्ठकूपं——; न ६—कण्ठकूपा(?)———; ग१—कृष्णकूपस्तथैव च(?); ग३— × × × ×। १०/३—त—तालु-मूले च———; न८, क—तालवोमूलं च(?)——; न२—तालुमलं(?—मूलं) च नासाग्रं ; न७— ——————— नासाग्र (-मूलं)(?) —————; न३— ——————च नासा च । १०/४—न६—चाक्षोश्च (?)——; ग५, ६— ———————मण्डलम् ; न३— (नासा च) मूमनक्ष्णोश्च(?)———।

११/१—ग५, ६—भ्रुमध्यं च———; न७—भ्रुवोर्मध्ये(?)——————। ११/२—इदं चरणं द्विधा विभज्य लेखानां साम्यवैषम्ये निर्णेतव्ये । तस्य विभागौ :—(१) मूर्धा च ; (२) मुनिसत्तमे । तत्सम्बन्धिनो लेखविभागाः—(१) त, न३, ४, ६, ७, ८, ग१, २, ३, ४, ५, ६-क—मूर्धा च ; न१—मूर्ध्नश्च(?) ; न२, ५—मूर्धं च(?): (२) न१, ग१—मुनिपुंगवि । ११/३—ग४—ब्रह्मस्थानानि———; न१, ग२ मर्मस्थानानि वै तेषां ; न८— ——————नैतानि(?) । ११/४—न१, त—मानं चाथ————; ग२—मानं चैषां—————; ग५, ६—मानमेषां—————।

१२/१—इदमपि द्विधा विभज्य पाठभेदा निर्णेतव्याः। तस्य विभागौ :—(१) पादान्मानं तु ; (२) गुल्फस्य। तत्सम्बन्धिनो लेखविभागाः— ———(१) ग४, न८—पादान्मानं तु ; न१, ३, ग१—पादात्मानं तु ; न४, ६, ग३—पादमानं तु ; ग५, ६, क—पादमूलं च ; न२, त—पादात्स्थानं तु ; ग२—पादांगुष्ठे च ; (२) न२, ३, ४, ५, ६, ७, ८, ग१, ३, ४, ५, ६ त, क—गुल्फस्य ; ग२—गुल्फान्ते; न१— गुल्फाय । १२/२—न३—सार्धांगुलि————। १२/३—न८—गुल्फात्तु————; न४—गुल्फाच्च जंघमानं तु ; ग३—गुल्फाज्जंघस्य मानं तु ; न३—गुल्फजंघस्य मध्ये तु ; न५—गुल्फाज्जंघस्य मध्ये तु ; जंघयोर्गुल्फयोर्मध्यं । १२/४—न१, ३, ४, ५, ६, ७, ग१, ३,—विज्ञेयं तु——।

जङ्घामध्याच्चित्योर्मूलं यत्तदेकादशाङ्गुलम् ।
चित्योर्मूलाद्वरारोहे जानुः स्यादङ्गुलिद्वयम् ॥१३॥

जान्वोर्नवाङ्गुलं प्राहुरूरुमध्यं मुनीश्वराः ।
ऊरुमध्यात्तथा गार्गि पायुमूलं नवाङ्गुलम् ॥१४॥

देहमध्यं तथा पायोर्मूलादर्धाङ्गुलद्वयम् ।
देहमध्यात्तथा मेढ्रं तद्वत्सार्धाङ्गुलद्वयम् ॥१५॥

मेढ्रान्नाभिश्च विज्ञेया गार्गि सार्धदशाङ्गुलम् ।
चतुर्दशाङ्गुलं नाभेर्हृन्मध्यं च वरानने ॥१६॥

---

१३/१–अस्य चरणस्य द्वौ विभागौ पृथक्चिन्तनीयौ । तौ :—(१) जङ्घामध्यात् ; (२) चित्योर्मूलं । तयोः पाठान्तराणि–(१) ग२, ३, ५, ६, न६, ८—जङ्घामध्यात् ; न३, क– × × । (२) न१, २, ४, ६, ७, ग१, त–चितेर्मूलं ; न५– चितिमूलं ; ग४–च तन्मूलं(?) ; ग३–इति मध्यं(?) ; ग२–तु भित्तिश्च । १३/२–ग२–यत्तदेशे दशांगुलम्(?) न३, क– × × । १३/३–अस्य द्वयोर्विभागयोः पाठभेदाः–(१) चित्योर्मूलात् ; न२, ५, ७–चित्योर्मूलात्; ग१, ३, ४, न३, ४, ६, त—चितिमूलात् ; न१–चित्योर्मूलं ; न८, ग५, ६–स्फिजोर्मूलात् ; ग२–भित्तिमूलात्; (२) वरारोहे–ग१, ३, ४, ५, ६, न३, ४–वरारोहे ; ग२, न६–मुनिश्रेष्ठे ; न१, २, ५, ७–जानुमध्यं; (१-२)–क– × × × × । १३/४–तथैवास्य द्वयोर्विभागयोः पाठभेदा :—(१) जानुःस्यात्—ग१, ३, ५, ६ न४, ६, ८, त–जानुःस्यात् ; न३–जानुत्पाद–(?) ; ग४–जानुभ्याम्(?) ; ग२,–जानुन्याम्(?); न१, २, ५, ७–विज्ञेयं : (२) अंगुलिद्वयम्–ग४, ५, ६, न६, ८, त–अंगुलिद्वयम् ; ग२, न३,–अंगुलद्वयम् ; न१, २, ७–द्वितयांगुलम् ; न५–हि तथांगुलम्(?) : (१-२)–क– × × × × ।

१४/१–ग१, न३–जानोर्नवांगुलं———; ग५–जान्वोः स्थानादूरुमध्यं; ग३–भासोर्नवांगुलं (?)———। ग६– × × × × । १४/२–ग३– —————मुनीश्वरे ; ग५– नवांगुलमुदाहृतम् ; ग६– × × × × । १४/३–न१–ऊरुमूलं तथा———; ग३–ऊरुमध्यं तथा———; ग५–ऊरुमध्यात्पायुमूलं ; ग६– × × × × । १४/४–न३–पायोर्मूलं—————; ग३, न८, क–वायुमूलं तथांगुलम्(?) ; ग५–नवांगुलमितं भवेत् ; ग६– × × × × ।

१५/१–न३–देहमध्यं तता पायो(?) ; ग५– —————ततस्तस्मात् ; न३–देहमध्यस्थितात्द्वायो–(?) ; न८– ————वायो–(?) । ; ग१–पायोमूर्लाच्छिश्नमध्यं(?) ग६– × × × × । १५/२–न२, ३, ४, ५, ७– ————सार्धांगुलद्वयम् ; ग५, न८– —सार्धांगुलिद्वयम् ; ग६–स्यादंगुलिद्वयम् ; न३–देहस्यांगुलिमिध्यकम्(?) ; ग६– × × × × । १५/३–ग२– —————तथा मेढ्रात्(?); न६– ————त्पुनर्मेढ्रं ; ग४– —————त्तनोर्मेढ्रं ; न८– × × × × । १५/४–ग४–तथा————; ग६– तद्वदर्धांगुलिद्वयम् ; न३–तद्दशार्धांगुलद्वयम्(?) ; न५–तद्वत्सार्धांगुलत्रयम् ; न४–तत्स्यात्सार्धांगुलत्रयम् ; न७–तस्य सार्धांगुलत्रयम् ; न८– × × × × ।

१६/१–न८, ग३, ६– ————विज्ञेयो(?) ; ग२–मेढ्रान्नाभेश्च(?)——; न३, ४–मेढ्रं नाभेश्च विज्ञेयौ(?) । १६/२–न१, २, ५, ७–सार्धं गार्गि————; न६–सार्धं(?) गार्गि———। १६/३–न३–चतुर्दशांगुलां नाभे(?) ; न५–चतुर्दशांगुलो नाभे(?) ; न६–चतुर्दशांगुलं नाभि–(?) । १६/४–न४, ६, ग३– ——————द्विजोत्तमे ; ग२–हृन्मध्याच्च वरानने(?) ; न३–हृन्मध्यस्य द्विजोत्तमे ।



षडङ्गुलं तु हृन्मध्यात्कण्ठकूपं तथैव च ।
कण्ठकूपाच्च जिह्वाया मूलं स्याच्चतुरङ्गुलम् ॥१७॥

नासामूलं तु जिह्वाया मूलाच्च चतुरङ्गुलम् ।
नेत्रस्थानं तु तन्मूलादर्धाङ्गुलमितीष्यते ॥१८॥

तस्मादर्धाङ्गुलं विद्धि भ्रुवोरन्तरमात्मनः ।
ललाटाख्यं भ्रुवोर्मध्यादूर्ध्वं स्यादङ्गुलद्वयम् ॥१९॥

ललाटाद्व्योमसंज्ञं स्यादङ्गुलित्रयमेव हि ।
स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत् ॥२०॥

स्थानात्स्थानात्समाकृष्य प्रत्याहारं प्रकुर्वतः ।
सर्वे रोगा विनश्यन्ति योगाः सिद्ध्यन्ति तस्य वै ॥२१॥

---

१७/१–न२–षडंगुलं च———; ग२—षडंगुलस्तु——————; न३–षडंगुलस्तु हृदयात् । १७/२–न१, ३, ४, ग१, २, ४, ५–कण्ठकूपस्तथैव च(?) । १७/३–ग२– ————जिह्वायां(?);। न६–कण्ठकूपाश्च(?)———; क–कण्ठमूलाच्च———। ग५–कण्ठकूपात्तालुमूलं । १७/४–ग२–मूलान्तं —————; ग३–मूलं (स्याच्च–) तुरंगुलम् ; ग५–षडंगुलमुदाहृतम् ।

१८/१-२–क– × × × × × × × × × । ग५–तालुमूलाच्च नासाया मूलं स्याच्चतुरंगुलम् । १८/१———जिह्वायां (?) । १८/२–ग२, ३, न५– मूलं तु(?)————; न६–मुलात्तच्चतुरंगुलम् ; ग४, न८–मूलात्स्याच्चतुरंगुलम् । १८/३-४–ग२–नासामूलाच्च नेत्राच्च चतुर्थांगुलमिष्यते(?) । १८/३–क– ——————तन्मूलं(?) । १८/४–ग६, क–तदर्धांङ्गुलमिष्यते; न७–गार्ग्यर्धांगुलमिष्यते ।

१९/१– न६–तस्मादर्धांगुलाद्विद्धि ; ग२–तस्मादर्धाङ्गुलं गार्गि । १९/२– न२–भ्रुवोरन्तरमात्मभूः ; ग२–त्वया जित(?)ततो भवेत् । १९/३-४–ग२–आललाटं भ्रुवोर्मध्यादूर्ध्वं स्यादङ्गुलत्रयम् ; १९/३– न३–लटाटं तु———; न६–ललाटाख्यां(?)———१९/४–न५– —— –दङ्गुलत्रयम् ; न६, ७, ग४– —— –दंगुलित्रयम् ।

२०/१–अस्मिंश्चरणे ९ विकल्पा दृश्यन्ते । ते :–न१, २, ५, ७, क–ललाटाव्द्योमसंज्ञं स्यात् ; ग१, ४, ५, त– ——————संज्ञं तु; न६– ——————संज्ञातं; न४–ललाटे व्योमसंज्ञातं ; न३–ललाटव्योमसंज्ञं तत् ; ग३–ललाटं व्योमसंज्ञा तु(?) ; ग६–ललाटाव्द्योमसंक्रान्तं ; न८–ललाटाख्याव्द्योमसंज्ञं ; ग२–ललाटाव्द्योमरन्ध्रा(?)स्यात् । २०/२–न३, ५, ७, क–अंगुलत्रयमेव हि ; ग२–अंगुलत्रयमेव च ; ग१, ४, ५, न४, त–अंगुलद्वयमेव हि ; ग६–अंगुलिद्वयमिष्यते । अत्र वास्तविकं मानं किमिति शंकास्पदम् । २०/३–ग२–स्थानेष्वेतानि(?)———; न३–कालेष्वेतेषु(?) ————; ग५– × × × × । २०।४–ग५– × × × × ।

२१/१–ग४, ५, ६–स्थानात्स्थानं————; त–स्थानात्स्थं(?)————; न१, ५–स्थानात्स्थानीयमुत्कृष्य । २१/२–ग४– ——————प्रकुर्वते ; ग३– ——————प्रकुर्वता ; ग२– ——————प्रवर्तयेत्(?) । २१/३–न१, २, ५, ७, ८, त, ग४– ———रोगाश्च नश्यन्ति ; ग२,— —————प्रणश्यन्ति । २१/४–न४, ग४– योगः सिद्ध्यति———; न३– योगसिद्धस्य————; ग५–आयुः सिद्ध्यति————॥

वदन्ति योगिनः केचिद्योगेषु कुशला नराः ।
प्रत्याहारं वरारोहे शृणु त्वं तद्वदाम्यहम् ॥२२॥

सम्पूर्णकुम्भवद्वायुमङ्गुष्ठान्मूर्धमध्यतः ।
धारयेदनिलं बुद्धया प्राणायामप्रचोदितः ॥२३॥

व्योमरन्ध्रात्समाकृष्य ललाटे धारयेत्पुनः ।
ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥२४॥

भ्रुवोर्मध्यात्समाकृष्य नेत्रमध्ये निरोधयेत् ।
*नेत्रात्प्राणं समाकृष्य नासामूले निरोधयेत् ॥२५॥

नासामूलात्तु जिह्वाया मूले प्राणं निरोधयेत् ।
जिह्वामूलात्समाकृष्य कण्ठमूले निरोधयेत् ॥२६॥

---

२२/१–ग५–स्तुवन्ति(?)————। २२/२–ग३– ————कुशला नरः(?); ग२–योगे कुशलवुद्धयः। २२/३–क–प्रत्यारोहं————। २२/४–ग२–शृणु तद्वद्दाम्यहम्(?); न३– ——त्वं तं वदाम्यहम् ।

२३/१–न५– ————कुम्भवद्वायोः ; ग२–आरोप्य पादयोर्वायुः ; ग३– ————कुम्भकत्वात्तैः। (?) २३/२—— ग१, २, ४, ६, न३, ४, ६, ८– ————न्मूर्ध्नि————; ग५–अङ्गुष्टादूर्ध्वमध्यतः ; ग३–अंगुष्टा ÷ ÷ मध्यतः । २३/३–त– ————विद्वान् ; न३– ————वद्ध्वा(?) ग२, न७– ÷ ÷ ÷ ÷। २३/४–ग५, ६– ————प्रचोदितम् ; न८– प्राणायामः प्रचोदितः(?); न८––प्राणायामप्रणोदितम् ; ग२– ÷ ÷ ÷ ÷; न७–धारयेन्मनः (?) ÷ ÷ ÷ ÷ ।

२४/१–न३–व्योमरन्ध्रा(त्) समाकृष्य ; ग८, न७– × × × ×। २४/२–न८–ललाटाद्धारयेत्पुनः ; न२– ————धारयेन्मनः ; न४–नेत्रमध्ये निरोधयेत् ; ग४, न७– × × × ×। २४।३–४–ग४– × × × × × × × × ।

२५/१–न१,–भ्रुवोर्मध्ये————; ग१-भ्रुवोर्मध्ये तु जिह्वाया ; ग४– × × × ×। २५/२–न१– ————निरोधने ; न७, ८– ————निरोधनं ; क–नेत्रे वायुं निरोधयेत् ; ग१–मूले प्राणं————; न६–नेत्रमूले————; ग५–कर्णमूले————; न८, ग६–कर्णमले निवेशयेत् । * "न८" लेखे २५/१ पुनर्लिखित्वा "कर्णमूले निवेशयेत्" इति २५/२ चरणं लिखितमस्ति ; न४–ललाटे धारयेत्पुनः ; ग२, ४– × × × ×। अत्राधिका पंक्तिर्लेखत्रये। सा–ग५, ६, न८–कर्णमूलात्समाकृष्य नेत्रे वायुं निरोधयेत् । २५/३–ग१–मूले प्राणं निरोधयेत् ; ग२, ४– × × × × । २५।४–न२, ७–नासाग्रे सन्निरोधयेत् ; ग३–नासामूले विलोकयेत् ; न३–नेत्रमध्ये निरोधयेत् ; ग२, ४– × × × × ।

२६/१–न८, ग६–नासाच्च जिह्वामूले च; ग५–नसश्च(?)जिह्वामूले च; क–नासा च(?) जिह्वामूले च ; न२–नासामूले तु जिह्वायाः ; न६–नासामूलं तु————; ग२, ४– × × × ×। २६/२-न१—मूले च ; न२–नासामूले तु जिह्वायाः ; न६–नासामूलं तु————; ग२, ४– × × × × । २६/२–न१–मूलं—— ————; न६–मूलं प्राणान्निरोधयेत् ; न८–मूलात्प्राणं————;



कण्ठमूलात्तु हृन्मध्ये हृदयान्नाभिमध्यमे ।
नाभिमध्यात्पुनर्मेढ्रे मेढ्राद्वह्न्यालये ततः ॥२७॥

देहमध्याद्गुदे गार्गि गुदादेवोरुमूलके ।
*ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥२८॥

†चितिमूले ततस्तस्माज्जङ्घयोर्मध्यमे तथा ।
जङ्घामध्यात्समाकृष्य वायुं गुल्फे निरोधयेत् ॥२९॥

गुल्फादङ्गुष्ठयोर्गार्गि पादयोस्तन्निरोधयेत् ।
स्थानात्स्थानात्समाकृष्य यस्त्वेवं धारयेत्सुधीः ॥३०॥

---

न७– ————नियोजयेत् ; ग५, ६, क–प्राणं नित्यं निरोधयेत् ; ग२, ४– × × × ×। २६/३–ग२, ४– × × × × । २६/४–न१, २, ४, ५, ग३, त–कण्ठकूपे————; ग६,–कण्ठकूपे निवेशयेत् ; ग४– × × × ×।

२७/१–न१, २, ४, ५, ६, ७, ग२, ३, त–कण्ठकूपात्तु————; ग५, ६, न८–कण्ठमूलाच्च————; ग४, क– × × × × । २७/२–ग४, क– × × × × । २७/३–न१, ४– ————पुनर्मेढ्रं ; ग२–नाभिमध्यान्नयन्मेढ्रं ; ग४, त– × × × × । २७/४–ग३–मेढ्राद्वह्न्यालयात्ततः(?) ; ग२– मेढ्राद्देहस्य मध्यमम् ; न४–मेढ्राद्देहस्य मध्यतः ; न६–मेढ्राद्गुदालये ततः ; ग४, त– × × × ×।

२८/१–ग२–देहमध्याद्गुदं————; ग३–देवं(?) मध्याद्गुदे————। २८/२–ग२, ५, ६, न८, क–गुदात्तत्रोरुमूलके; न१, २, ७–गुदान्तादुरुमूलके ; न३–गुदाद्वावुरुमूलके (?) न५–गुदात्तु ऊरुमूलके ; ग३–गुदतश्चोरुमूलके ; न४–गुदतो रौसमूलके(?) ; न६–गुदाद्वै जानुमूलके ; त, ग४– × × × × । *अत्रैकाधिका पंक्ति– न१, २, ५, ७–वह्न्यालयात्पायुमूले पायुमूलादुरुद्वये। २८/३–न१, २, ५, ७–उरुमूलात्तथा गार्गि ; त–उरुमध्याच्च जान्वोश्च ; न६–जानुमूलात्तयोर्मध्ये ; न७–उरुमूलाज्जानुमूले ; ग६–उरुमूलात्स्फिजोर्मध्ये ; ग४– × × × × । २८/४–न५–जान्वोर्मूले ————; न८–तस्माद्वै जानुमूलके ; त–तस्मिन्वायुं————; न७–समाकृष्य————।

† अत्रैकाधिका पंक्तिः–न८–जानुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत्। एषान्यस्मात्संस्करणादुद्धृता २८/३-४ चरणस्य पाठान्तर इव दृश्यते ।

२९/१–ग१–चितिमूलं————; न३–चित्तमूले————; ग२–भित्तिमूलात्ततस्तस्मात् ; ग५, ६, क–जान्वोर्मूलात्ततस्तस्मात् ; ग४– × × × × । २९/२–न२, ३, ५, ७– ————ततः ग४– × × × × । २९/३–ग१, न६–जंघातस्तं————; न२, ग२–जंघामूलात्समाकृष्य ; न८–जंघात्ततः——; न४–जंघास्थानात्समाकृष्य ; त–जंघद्वयं समाकृष्ये(?ष्य) न५, ग४– × × × × । २९/४—न१–गुल्फमध्ये————; ग२, ३, न४, ६, त–गुल्फमूले ————; न५, ग४– × × × × ।

३०/१–ग३–गुल्फादंगुष्टयोर्मध्ये ; ग६–गुल्फादंगुलयोर्गार्गि ; न५, ग४– × × × ×। ३०/२–न५, ग४– × × × × । ३०/३–न४, ८–स्थानात्स्थानं————; न३, ६, ७, ग३, ५, ६, क–स्थानं स्थानं– ————; न५, ग४– × × × ×। ३०/४–न३, ६, ७, ८– ————धारयेद्धिया ; ग५, ६, क– ————धारयेन्नरः ; ग४– × × × × ।

सर्वपापविशुद्धात्मा जीवेदाचन्द्रतारकम् ।
एतत्तु योगसिध्द्यर्थमगस्त्येनापि कीर्तितम् ॥३१॥

प्रत्याहारेषु सर्वेषु प्रशस्तमिति योगिभिः ।

नाडीभ्यां वायुमापूर्य कुण्डल्याः पार्श्वयोः क्षिपेत् ॥३२॥

धारयेद्युगपत्सोऽपि भवरोगाद्विमुच्यते ।

पूर्ववद्वायुमारोप्य हृदयव्योम्नि धारयेत् ॥३३॥

सोऽपि याति वरारोहे परमात्मपदं नरः ।
व्याधयः किं पुनस्तस्य बाह्याभ्यन्तरवर्तिनः ॥३४॥

नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् ।
भ्रुवोर्मध्याद्दृशोः पश्चात्समारोप्य समाहितः ॥३५॥

---

३१/१–ग५–स च पापैर्विशुद्धात्मा ; क–स च पापविशुद्धात्मा; ग४– × × × × । ३१/२–ग४– × × × × । ३१/३–न६,—एतद्योगविशुद्ध्यर्थं (?); न३–एवं तु योगसिद्ध्यर्थं ; ग४– × × × × । ३१/४–ग५– अगस्त्येनाभिभाषितम् ; ग२–अगस्त्येनाभिकीर्तितम् ; न५–अगस्त्येन प्रकीर्तितम् ; ग४– × × × × ।

३२/१–ग२–प्रत्याहारे त्विदं प्रोक्तं ; ग४– × × × × । ३२/२–न८–प्रशस्तमिति कीर्ति-तम् ; ग४– × × × × । ३२/३–न८, ग५, ६– ———वायुमाकृष्य ; ग४– × × × × । ३२/४–न६, ग५, ६– ————पार्श्वयोर्नरः ; न८–कुण्डलीपार्श्वयोर्नरः ; ग४– × × × × ।

३३/१–न८, ग५, ६–धारयेद्युगपद्योगी ; ग३–धारयेद्योगिवित्सोऽपि (?–द्योगवित्सोऽपि) ; ग४– × × × × । ३३/२–ग४– × × × × । ३३/३–ग४– × × × × । ३३/४–ग१, ३, ५, न६, त, क–हृदये व्योम्नि———; न८–हृदयाद्व्योम्नि———; ग२–धारयेद्हृदयाम्बरे; ग४– × × × × ।

३४/१–न५, ७, ८, ग२, ५, ६, क–स प्रयाति———; ग४–संप्रयाति——— । ३४/२–ग५–परमं धाम वा नरः ; ग६, क–परमात्माथवा(?)नरः ; ग४, न८–परमात्मानमव्ययम् । ३४/३–न३– ————किन्तु नस्तस्य (?किं पुनस्तस्य) ; ग५, ६, क–वायवः (?व्याधयः)———— । ३४/४–ग५, ६, क–बाह्यभ्यन्तरवल्लचः ।

३५/१–ग३–नासायां———— । ३५/२–ग५–पूरयित्वोदरे स्थितम् । ३५/३–एतस्य चरणस्य ८ भिन्नभिन्नाः पाठा विद्यमानलेखेषु दृश्यन्ते । ते च :—(१)ग१, ६, न४, ६, ८, क–भ्रुवोर्मध्याद्दृशोः पश्चात् ; ग३–भ्रुवोर्मध्यात्पुनः————; ग४– ————कृषेः(?)———; ग५–भ्रुवोर्मध्ये दिशः(?)———; न३–भ्रु– ——ध्ये दशा(?)———; न२ त– ————ततः ———; न१, ५, ७–भ्रु———ध्यं ततः——; ग२–भ्रु– ——ध्ये च कुचयोः । ३५/४–न४, ग३–संरोप्य सुसमाहितः ।



धारयेत्क्षणमात्रं वा सोऽपि याति परां गतिम् ।
किं पुनर्बहुनोक्तेन नित्यं कर्म समाचरन् ॥३६॥

आत्मनः प्राणमारोप्य भ्रुवोर्मध्ये सुषुम्णया ।
यावन्मनो लयत्यस्मिंस्तावत्संयमनं कुरु ॥३७॥

इति श्रीयोगयाज्ञवल्क्ये सप्तमोऽध्यायः ॥

---

३६/१–न४– ————क्षणमात्रं तु ; न२, ५, ७, त– ————स्थितिमात्रेण । ३६/२–न१, ५, ग१, २, ५, ६, त, क– —————परं पदम् ; ग३–न (?स) याति परमं पदम् । ३६/४–इदं चरणं द्विधा विभज्य साम्यवैषम्ये निर्णेतव्ये । तस्य विभागौ :–(१) नित्यं कर्म ; (२) समाचरन् । तयोर्ये ये पाठा लेखेषु दृश्यन्ते तेः–(१) न६, ७, ८, ग४, ५, ६, क–नित्यं कर्म ; न१, २, ४, ग१, ३, त–नित्यकर्म ; ग२–नित्यमेवं ; न३–निजकर्म, (२) न१, ५, ग१–समाचरन् ; न२, ४, ७, ग२, ३, ४, ५, ६, त–समाचर ; न३, ६, ८, क–समाचरेत् ।

३७/१–त–आत्मनि————; ग२, ६–आत्मानं————; ग५– × × × × । ३७/२–न४–भ्रुवोर्मध्यं————; ग२–भ्रूमध्यान्तं———; न६, ग४–आभ्रूमध्यात्सुषु-म्णया ; न८–अभ्र–(?आभ्रू–) मध्यात्सुषुम्णया; ग५– × × × × । ३७/३–ग१, २, न५, ६– ———— –न्मनोलयस्तस्मिन् ; ग४, न८– ——मनोलयेत्तस्मिन् ; ग५, ६, क–यावन्नादो भवत्यस्मिन् । ३७/४–ग३–तावत्सलयं मनं(?)कुरु ।

## अष्टमोऽध्यायः ॥

*याज्ञवल्क्य उवाच—

अथेदानीं प्रवक्ष्यामि धारणाः पंच तत्त्वतः ।
समाहितमनास्त्वं च श्रृणु गार्गि तपोघने ॥१॥

यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः ॥२॥

अस्मिन्ब्रह्मपुरे गार्गि यदिदं हृदयाम्बुजम् ।
तस्मिन्नेवान्तराकाशे यद्बाह्याकाशधारणम् ॥३॥

एषा च धारणेत्युक्ता योगशास्त्रविशारदैः ।
तान्त्रिकैर्योगशास्त्रज्ञैर्विद्वद्भिश्च सुशिक्षितैः ॥४॥

धारणाः पंचधा प्रोक्तास्ताश्च सर्वाः पृथक् श्रृणु ।
भूमिरापस्तथा तेजो वायुराकाशमेव च ॥५॥

---

### अष्टमोऽध्यायः ॥

*न४, ५—श्रीयाज्ञवल्क्य उवाच ; ग४— भगवानुवाच ; न१, २, ८, ग१, २, क—श्रीभगवानुवाच ; ग६—ओम । ; न३, ६, ७, ग५— × × × × ।

१/२—ग६—धारणात्पंच(?)————; ग२—धारणामन्त्रतत्त्वतः । १/३—न३—समाहितमना भूत्वा ; न६—समाहितमनास्ताश्च ; ग६—समाहितमनाः सत्त्वं(?) ग१— × × × × । १/४—न३, ६, ८, ग६— ————————वरानने ; ग१— × × × × ।

२/१—न२—शमादिगुणयुक्तस्य । २/२—न३, ग१— ————स्थैर्यमात्मनि ; न४, ५—मनसा स्थितिरात्मनि ; न६—मानसस्थिति————; ग३—मननस्थितिः(?)————। २/३—न३—धारणान्मुच्यते–(?)———। २/४—न३—शास्त्रतात्पर्यवादिभिः ।

३/२—न२—यत्पदं————; त, न६, ग३, ४, ५, ६— यदिदं दहराम्बुजम् ; न७—यत्पदहृदयाम्बुजे(?) ; न८—यदिदं दहरायुजम्(?) । ३/३—ग३—तस्मिन्नेवान्तराकाले(?) ; ग५, ६, क—तस्मिन्वै दहराकाशे; ग२—तस्मिन्नेकान्तवासेन ; क—दहराम्बुजमध्ये च । ३/४—न४—यद्वात्याकाशधारणे(?) ; ग२—बाह्ये वा धारणान्तरा(?) ; क—व्योम्नि यद्बाह्यधारणम् ।

४/१— ————————धारणेत्युक्तौ(?) ; न३—एषा ते धारणेत्युक्ता ; क—एतच्च धारणेत्युक्तं । ४/२—न३—योगशास्त्रविशारदे ; न१, २, ४, ७, ग३—शास्त्रतात्पर्यवेदिभिः ; न५—योगशास्त्रतात्पर्यवेदिभिः(?) । ४/३–४—ग२—तत्त्वज्ञैर्योगशास्त्रज्ञैर्विद्वभिश्च सुशिक्षितैः ; ग६— × × × × ।

५/१—न६— ————————पंच संप्रोक्ताः । केषुचिल्लेखेषु विसर्गलोप एव दृश्यते तल्लेखकस्य प्रमादजन्य एवेति मत्वावगणितः । ५/४—न१, २, ४, ६, ग२, ३, ६—वायुराकाश एव च ।



एतेषु पंचदेवानां धारणं पंचधोच्यते ।
पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ॥६॥

आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ।
आपायोर्हृदयान्तं यद्वह्निस्थानं तदुच्यते ॥७॥

आहृन्मध्याद्भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम् ।
आभ्रूमध्यात्तु मूर्धान्तमाकाशमिति चोच्यते ॥८॥

अत्र केचिद्वदन्त्यन्ये योगपण्डितमानिनः ।
आजानोर्नाभिपर्यन्तमपांस्थानमिति द्विजाः ॥९॥

नाभिमध्याद्गलान्तं यद्वह्निस्थानं तदुच्यते ।
*आगलात्तु ललाटान्तं वायुस्थानमितीरितम् ॥१०॥

---

६/१—न८—एतेषां————————; क—एषु पञ्चसु देवानां । ६/२—न१, ३, ४, ६, ७, ग२, ३, ४, त— ————पञ्चधेष्यते ; न८— ————————पञ्च चेष्यते । ६।३—न७— ————जानुपर्यन्तैः(?) ; न८,क— ————जानोः पर्यन्तं ।

७/१—न३, ४, ७, ८, ग३, ४, क—आजान्वोः ————; ग२—जान्वादि नाभिपर्यन्तं । ७/२—ग२—आपस्थानं————————। ७/३—न१, २, ३, ग५, ६, क—आपायोर्हृदयान्तं च ; न६—आपायुहृदयान्तं यद्– ; न३, ७—आपायोर्हृदयांते च ; न४—आपायोर्हृदयं यावद्–; ग२—नाभ्यादि हृदि पर्यन्तं । ७/४—ग२, ५, ६, क— ————————प्रकीर्तितम् ।

८/१—ग१—हृन्मध्यात्तु————; ग२—हृन्मध्याच्च————————। ८/२—ग२—तावद्वायुस्थलं———; न४—तावद्वायुकुलं————————; ग५—वायुस्थानं प्रकीर्तितम् । ८/१–२—न३— × × × × × × × × । ८/३—ग१, ४—आभ्रूमध्यात्तदूर्ध्वान्तं ; ग२—भ्रुवोर्मध्याच्च मूर्धान्तं ; न७—श्रोत्राभ्र मध्यान्मूर्धांतं । ८/४—ग४—आकाश इति– ————————; ग५, ६, क—आकाश इति कीर्तितम् ; ग२—आकाशस्थानमिष्यते । ८/३–४— न३— × × × × × × × × ।

९/१—न८, ग४— तत्र————————; ग२— ———————— –द्वदन्त्यस्मिन् । ९/२—ग२—योगे पण्डितमानसः(?) ; न३—योगपण्डितमानितः(?) ; क—लोकपण्डितमानिनः । ९/३—४, ७, ८ ग३, ४—आजान्वोर्नाभिपर्यन्तं । ९/४—न३, ४, ८, ग३, ४—अपां स्थानं प्रकीर्तितम् ; ग६—अपां स्थानं द्विजोत्तमे ; क, ग५— ————————द्विजोत्तमाः ।

१०/१—न३, ग५, ६, क————————गलान्तं च ; न६— ————गलान्तं यद् ; ग४—नाभिमध्यादागलान्तं । १०/२—न८— ————————तथोच्यते ; ग५, ६————तेजसः स्थानमुच्यते ; क—तेजसां स्थानमच्यते । १०/३—ग१, २—आगलाद्भ्रूललाटान्तं ; ग३—आगलान्तं ललाटान्तं ; ग५, ६————गलाद्भ्रूमध्यपर्यन्तं ; १०/४—ग५, ६—वायुस्थानं प्रकीर्तितम् ; क—पवनस्थानमुच्यते ; न८—यावद्वायुकुलं स्मृतम् । *अत्र "ग५" लेखे द्वावधिकौ श्लोकौ । यद्यपि तयोरस्मिस्थाने योग्यताहीनत्वं स्पष्टमेव तथापि कौतूहलवारणाय तावत्रोद्धृतौ:—चतुरस्रं चार्धचन्द्रं त्रिकोणं च षडश्रकम् । संवृत्तं च पृथिव्यादि मण्डलाकृतयः क्रमात् ॥१०/१॥ पीतं शुक्लं तथा रक्तं कृष्णं धूम्रं च वर्णकम् । लवादेरथ वर्णं च हकारं चाक्षरक्रमम् ॥१०/२॥

ललाटाद्रन्ध्रपर्यन्तमाकाशस्थानमुच्यते ।
अयुक्तमेतदित्युक्तं शास्त्रतात्पर्यवेदिभिः ॥११॥

यदि स्याज्ज्वलनस्थानं देहमध्ये वरानने ।
अयुक्ता कारणे वह्नौ कार्यरूपस्य संस्थितिः ॥१२॥

कार्यकारणसंयोगे कार्यहानिः कथं भवेत् ।
दृष्टं तत्कार्यरूपेषु मृदात्मकघटादिषु ॥१३॥

*
पृथिव्यां धारयेद्गार्गि ब्रह्माणं परमेष्ठिनम् ।
विष्णुमप्स्वनले रुद्रमीश्वरं वायुमण्डले ॥१४॥

सदाशिव तथा व्योम्नि धारयेत्सुसमाहितः ।
पृथिव्यां वायुमास्थाय लकारेण समन्वितम् ॥१५॥

---

११/१—न३—ललाटं रन्ध्रपर्यन्तं ; न४—ललाटान्मूर्ध्निपर्यन्तं ; ग४—ललाटाकाशपर्यन्तं । ११/१-२—न१, २, ५, ७, ग२, ५, ६, त, क—× × × × × × × ×। ११/४—ग६—शास्त्रतत्त्वार्थयोगिभिः(?) । ११/३-४—ग५, क—× × × × × × × ×।

१२/१—न६—यदि स्याज्जलसंस्थानं(?) । १२।२—ग६—देहमध्यं——————। १२/१-२—ग५, क—× × × × × × × ×। १२/३—न१, ग१, २—अमुक्तकारणे————; न२, ७, ८, ग४, ६—अयुक्तकारणे———; न४—अयुक्तकारणे चाह्नौ । १२/४—न३—कार्यरूपमिति स्थितिः ; ग३—कार्यारूपस्य संस्थितः(?) ; न६—कार्यरूप + संस्थितेः । १२।३-४—ग५, क—× × × × × × × ×।

१३/१-२—ग२, ६—कार्यकारणसंयोगात्कार्यं चापि दृढं भवेत् ; ग१—कार्यकारणसंयोगात्कार्यहानिर्दृढा भवेत् ; ग५, क— × × × × × × × ×। १३/३—ग१—दृष्टान्तः————; न३—इष्टं तत्कार्यरूपेण ; ग६—दृष्टार्थं कार्यरूपेण । १३/४—ग२—मृदादिभ्यां घटादिकम् ; न३—मृदादिव घटादिषु ; ग६—मृदादिभ्यो घटादिकम् ॥ १३।३-४—ग५, क— × × × × × × × ×।

*यौ श्लोकौ "ग५" लेखे १०-११ श्लोकयोरन्तराले तावेव "ग६" लेखे १३-१४ श्लोकयोरन्तराले । तयोः पुनरुक्त्या न काचिदर्थसिद्धिरिति सा न कृतात्र ।

१४/१—ग३— ————धारणं गार्गि ; ग६— ————धारये(?)————। १४/२—ग३—ब्राह्मणं————; न४—ब्रह्माणमुदकेषु च(?) । १४।१-२—ग१, ५, क— × × × × × × × × । १४/३—न६—विष्णुमप्यनले——— ; ग३—विष्णुमत्स्वनले———(?) ; ग६—विष्णुमप्सु गळे———(?) ; न४—विष्णुं विद्धयनले————। १४/४—न४—मारुतं वायुमण्डले १४।३-४—ग१, ४, ५, क—× × × × × × × × ।

१५/२—न३—धारये(त्)————; ग६—धारयेस्सु —(?त्सु—) समाहितः । १५/१—२—ग१, ४, ५, क—× × × × × × × × । १५/३—न१, २, ग२— ————वायुमास्थाप्य ; ग५ ६—पार्थिवे वायुमारोप्य । १५/४—न४, ग३—लकारेण समाहितः(?) । १५/३-४—ग१, ४, क—× × × × × × × × ।



ध्यायंश्चतुर्भुजाकारं ब्रह्माणं सृष्टिकारणम् ।
धारयेत्पंच घटिकाः पृथिवीजयमाप्नुयात् ॥१६॥

वारुणे वायुमारोप्य वकारेण समन्वितम् ।
स्मरन्नारायणं सौम्यं चतुर्बाहुं किरीटिनम् ॥१७॥

शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
धारयेत्पंच घटिकाः सर्वरोगैः प्रमुच्यते ॥१८॥

वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् ।
त्र्यक्षं वरप्रदं रुद्रं तरुणादित्यसन्निभम् ॥१९॥

भस्मोद्धूलितसर्वांगं सुप्रसन्नमनुस्मरन् ।
धारयेत्पंच घटिकाः वह्निनासौ न दह्यते ॥२०॥

---

१६/१—न३—ध्यायन्चतुर्भुजाकारं ; ग५, ६,—ध्यायंश्चतुर्भुजाकारं; ग२—ध्यायन्चतुर्मुखाकारं ; न८—ध्यायन्वेदादिकर्तारं ; न१, २—ध्यायेच्चतुर्मुखाकारं ; न५—धारयेच्चतुर्भु + + ×; ग४—चतुर्भुजमुखाम्भोज— । १६/२—ग३—ब्रह्माणं परमेष्ठिनम् ; ग४—हंसायितसरस्वतीम् ; ग५, ६, न८—चतुर्वक्त्रं हिरण्मयं ; न५— × × × × । १६/१-२—ग१, क— × × × × × × × × । १६/३—न४, ग३, ४——धारयन्पञ्च घटिकाः; ग१—धारयेत्घटिकास्तिस्रः; त—"धारयेत्पंच्च घटिकाः", "पृथिव्यां वायुमारोप्य" इति द्वौ पाठौ । १६/४—न३—पृथिवी वायुमाप्नुयात् ; ग५, क—सर्वान्कामानवाप्नुयात् ; त—"सर्वरोगैः प्रमुच्यते", पृथिवीजयमाप्नुयात्" इति द्वौ पाठौ ।

१७/१—न३—वारुणो वायुमारोप्य(?) ; न१, २, ५, ७———अप्स्वेवं——————। १७/२—न१—सकारेण————; —न६, ग३—वकारेण समन्विते । १७/१-२—ग१, त, क— × × × × × × × × । १७/३—ग५, न७, क—स्मरन्नारायणं देवं ; त—स्मरेन्नारायणं देवं ; ग६—परं नारायणं देवं ; न३, ४, ग३—तस्मिन्नारायणं सौम्यं ; न६—अस्मिन्नारायणं सौम्यं । १७/४—न५, ६, ८—ग५, क— ——————शुचिस्मितम् । १७/३-४—ग१— × × × × × × × ×।

१८/२—न३—पीतवाससमच्युतम् (?—तम्) । ग३—पीतवाससमुच्यते(?) । १८/३—न४, ग३—धारयन्पंच घटिकाः ; ग१— × × × × । १८/४—न५, ग५, ६, त, क—सर्वपापैः————; न८, ग४——महारोगैः——————; न१, ७—भवरोगैर्विमुच्यते—ग१—× × × × । ; न६—अपां विजयमाप्नुयात् ।

१९/१—न३, ८—वह्लावनिलमारोप्य ; ग१—× × × × । १९/२—न३, ६— ——————————समन्विते ; न१, २, ४, ७—रेफान्तरसमन्वितम् ; त—एकाक्षरसमन्वितम् । १९/३—न१, २, ५— त्र्यक्षं च वरदं———न७—अक्षं च वरदं———; न४—त्र्यम्बकं वरदं————; ग२—त्रिनेत्रं——————; न३—अक्षरं वर+ ———; त—अभयं वरदं———; ग३—अम्बिकावरदं————; ग१—× × × ×। १९/४—न३—तरुणादित्यसंभवम्(?) ; ग१—× × × ×।

२०/१-२—ग१— × × × × × × × ×। २०/२—न१, २, ३, ५, ६, ७, ८, ग४, क—— —मनुस्मरेत् । २०/३-४—ग१— × × × × × × × × । २०/३—न३, ४, ग३—धारयेद् घटिकाः पञ्च ; न५—धारयेत्पञ्च घटिकां ।

मारुतं मारुतस्थाने यकारेण समन्वितम् ।
धारयेत्पंच घटिकाः वायुवद्व्योमगो भवेत् ॥२१॥

आकाशे वायुमारोप्य हकारोपरि शंकरम् ।
विन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥२२॥

शुद्धस्फटिकसंकाशं वालेन्दुधृतमौलिनम् ।
पंच वक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम् ॥२३॥

सर्वायुधोद्यतकरं सर्वाभरणभूषितम् ।
उमार्धदेहं वरदं सर्वकारणकारणम् ॥२४॥

मनसा चिन्तयन्यस्तु मुहूर्तमपि धारयेत् ।
स एव मुक्त इत्युक्तस्तान्त्रिकेषु सुशिक्षितैः ॥२५॥

एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे ।
ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ॥२६॥

---

२१/१-२—ग१— × × × × × × × × । २१/१-न३, ४, ५-मारुतं मारुते स्थाने ; ग५, ६—मारुतं मरुतां स्थाने ; ग३—मरुतं मारुतस्थाने ; ग२—मारुतस्तन्मरुत्स्थाने । २१/२—ग२—वकारेण ————; न६— ————समन्विते; न३, ४, ५—सर्वदेवसमन्वितम् । २१/३—न५—धारयेत्पञ्च घटिकां ; ग१, २— × × × × । २१/४—न१, ५, ७—युगपद्(?)व्योमगो भवेत् ; ग१—वायुमध्ये ततो भवेत्(?) ; ग२— × × × × ।

२२/१—ग१, २— × × × × । २२/२—न३, ग१-२— × × × × । २२/३-४—न३, ग१— × × × × × × × × । २२/३—न७- ————महादेहं(?–देवं) ।

२३/१-२—न३— × × × × × × × × । २३/२—ग२— ——— –शेखरम् ; न६— ——— –मौळिकम्(?) ; न८— ————युतमौलिनम् ; ग५, क—धृतवालेन्दु————। २३/३-४—न३, ग१— × × × × × × × × । २३/३—न१, ५, ७, त—पञ्चवक्त्रयुतं शान्तं ; ग३—पञ्चवक्त्रं + + + युतं(?) ।

२४/१-२—न३, ग१— × × × × × × × × । २४/१—ग५, ६, क—सर्वायुधैर्धृताकारं । २४/२—ग५, ६, क—सर्वभूषणभूषितम् । २४/३-४—न३, ग१— × × × × × × × ×। २४/३—उमार्ध— ——न६—उमार्थदेहं(?) । २४/४—ग२—सर्वकार्यादिकारणम् ।

२५/१-२—न३, ग१— × × × × × × × ×। २५/१—न२, ७—मनसा चिन्तयेद्यस्तु ; ग२—चिन्तयन्मान्यचित्तस्तु ; ग५—चिन्तया चिन्तयन्यस्तु ; ग६, क—चित्ते यश्चिन्तयेद्विद्वान् । २५/२—ग५—मुहूर्तमपि धारयन् ; ग३—महान्तमपि(?) धारयेत् । २५/३-४—न३, ग१— × × × × × × × × । २५/३—न१, २, ५, ७—स एवमुक्तास्तु पञ्चेमाः, ग३—स विमुक्त इत्युक्तौ (?) । २५/४—न६—तान्त्रिकेष्वपि शिक्षितैः ; न२—तान्त्रिकैरपि————; न४—तान्त्रिकैश्च सुशिक्षितैः ; ग३ तान्त्रिकैश्च सुशोभितम्(?) ; न१, ५, ७, त—तान्त्रिकैरर्थशिक्षितैः ; ग२—त्रिलोकज्ञसुनिश्चितः(?) ।

२६/१-२—न३— × × × × × × × × । २६/१—न८, ग४, क— ————भवत्यस्मिन् । २६/३-४— न३— × × × × × × × ×। २६/४— न६—स्वे स्वे संभृत्य———।



*तस्मिन्सदाशिवे प्राणं चित्तं चानीय कारणे ।
†युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे ॥२७॥

अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मवित्तराः ।
प्रणवेनैव कार्याणि स्वे स्वे संहृत्य कारणे ॥२८॥

प्रणवस्य तु नादान्ते परमानन्दविग्रहम् ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् ॥२९॥

चेतसा संप्रपश्यन्ति सन्तः संसारभेषजम् ।
त्वं तस्मात्प्रणवेनैव प्राणायामैस्त्रिभिस्त्रिभिः ॥३०॥

†ब्रह्मादि कार्यरूपाणि स्वे स्वे संहृत्य कारणे ।
विशुद्धचेतसा पश्य नादान्ते परमेश्वरम् ॥३१॥

---

*अत्र "न८" लेखे "प्रणवस्य तु नादान्ते परमानन्दविग्रहम्" इति पंक्तिर्वर्तते सा तु नाधिका किन्तु २९।१-२— अस्थाने लिखितास्ति ।

२७/१-२—न३, ४, ग४— × × × × × × × × । २७।१-न२—तस्मिन्महाशिवे प्राणं ; ग२—तस्मिन्महाशिवे प्राण (–वायुं) ; त—तस्मिन्महाशिवे प्रोतं ; न१, ग१—तस्मिन्महाशिवे प्राणान् ; ग५—तस्मिन्शुभाश्रये प्राणं । २७/२—न६, ग३—चित्तं च निजकारणे ; न६, ग३—चित्तं वा निजकारणे; ग२—वायुं सर्वस्य कारणे ; न१, ग१, त—सृष्ठिस्थित्यन्तकारिणे । †"अत्र "न४, ५, ७" लेखेषु "विशुद्धमनसा पश्य नादान्ते परमेश्वरम्" इति पंक्तिर्वर्तते सा तु नाधिका किन्तु यान्येषु लेखेषु ३१/३-४ स्थाने वर्तते सैव । २७/३-४—न३, ४, ग३, ४, ५— × × × × × × × × । २७/३—ग६—युक्तं च तस्य चात्मानं । २७/४—त, न८, क—युयोज————; न६—संयोज्य————।

२८/१-२—न३, ग४, ५, ६— × × × × × × × × । २८/३-४—न३, ग४, ५, ६— × × × × × × × × । २८/४—ग२— ————संगृह्य———।

२९/१-२—न३— × × × × × × × ×। २९/१—न६— ————नादान्तं । २९/२-न१, २, ४, ७— ————विग्रहे ; ग१— ——— –मीश्वरम् । २९/३-४—न३, ग२— × × × × × × × × । २९/३—न८—इदं सत्यं————।

३०/१-२—न३, ग२— × × × × × × × × । ३०/२—न७— ————+ + + भेषजम् ; त— ————भेषजः । ३०/३-४—न३, ग२— × × × × × × × × । ३०/३—न५—तत्तस्मात्प्रणवेनैव ; न८—तं तस्मात्प्रणवेनैव ।

३१/१-२———न३, ग२— × × × × × × × × । †अत्र "ग६"लेखेपक्तित्रयम् :— "तस्मिन्सदाशिवे प्राणवायुं सर्वस्य कारणे । वायुरेव शिवो वायुः वायुधारि सदाशिवः ॥ युक्तं च तस्य चात्मानं योजयेत्परमेश्वरम् ॥ "एभ्यः प्रथमा या "ग२" लेखे २७/१-२ स्थाने विद्यते सैवास्ति । तृतीयाऽपि २७/३-४ पंक्त्यास्तस्मिन्नेव लेखे या पाठान्तरत्वेन वर्तते सैव । द्वितीयास्मिन्संदर्भे असम्बद्धा इव दृश्यते । ३१/३-४—न३— × × × × × × × × । ३१/३—त— ————पश्येत् ; न८———पश्यन् ; ग५ क— ————चेतसाविश्य ; ग२ – ————स्थाप्य ; ३१/४—ग२— ————परमात्मनि ; न६— ————कारणंशिवम् ; क—नानान्ते (?) परमेश्वरम् ।

अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मविद्वराः ।
भिषग्वरा वरारोहे योगेषु परिनिष्ठिताः ॥३२॥

शरीरं तावदेवं तु पंचभूतात्मकं खलु ।
तदेतत्तु वरारोहे वातपित्तकफात्मकम् ॥३३॥

वातात्मकानां सर्वेषां योगेष्वभिरतात्मनाम् ।
प्राणसंयमनेनैव शोषं याति कलेवरम् ॥३४॥

पित्तात्मकानां त्वचिरान्न शुष्यति कलेवरम् ।
कफात्मकानां कायश्च सम्पूर्णस्त्वचिराद्भवेत् ॥३५॥

धारणं कुर्वतस्त्वग्नौ सर्वे नश्यन्ति वातजाः ।
पार्थिवांशे जलांशे च धारणं कुर्वतः सदा ॥३६॥

---

३२/१-२- न३- × × × × × × × × । ३२/१-ग-२ तस्मिन्नर्थे————— । ३२/२—न१, २, ७, ग५, ६,क—ब्रह्मवादिनः । ३२/३-४- न३- × × × × × × × × । ३२/३—न१, २,—दिव्या भिषग्वरा ह्येते ; त—दैवे भिषग्वरारोहे(?) ; ग३—भिषस्वरो वरारोहे (?); न४—तदेव तु वरारोहे(?) । ३२/४—ग६—योगेषु परिनिष्ठितौ ; न४- × × × × । ३२/१-४— अस्मिन्श्लोके ये ये आयुर्वेदज्ञातारो योगिनस्तेषां मतमवलम्बितं, ३८ तमे श्लोके त्वश्विनयोर्देवभिषग्वरयोरेवेति विवेकः ॥

३३/१-२—न३, ४- × × × × × × × × । ३३/१—ग५, ६- ————————हि ; ग२- ————तावदेव त्वं ; न२, ६, ग१- ————तावदेतत्तु ; ग३- —————तावदेतन्तु । ३३/२- न१, २, ५, त- ——————श्रृणु । ३३/३-४—न३, ४- × × × × × × × × । ३३/३- ग३—तदेव तु- ————; ग५—तदा तत्र————; न५, ७—तद्वदेतद्वरारोहे ; न६— तदेतं+वरारोहे । ३३/४—ग३—————तदापित्तकफात्मकम्(?) ।

३४/१-२—न३- × × × × × × × × । ३४/२—न५—योगेष्वभिरतां नृणाम् ; ग४— योगेष्वपि रतात्मनाम् ; न१—योगेष्वभिरतं नृणाम् (?); ग२—योगेषु चरतां नृणाम् ; ग५, ६— योगेषु निरतात्मनाम् ; न६—योगे धीरवतां नृणाम् । ३४/३-४—न३- × × × × × × × × । ३४/३—न२—प्राणसंयमने चैव । ३४/४—ग५, ६, क- —————शरीरकम् ।

३५/१-२—न३, ग२- × × × × × × × × । ३५/१—न१, २, ४, ७, ग३, त— ——————सर्वेषां ; ग४, न८, क- ———— —मचिरात् ; न६- ———— —मचिरं । ३५/२—न८, ग४, क—विशुष्यति—————; ग३—स शुष्यति(?)—————। ३५/३-४— न३- × × × × । ३५/३- ग१, ४, ६, न६, क- ——————कायस्तु ; ग५- —————सर्वेषां ; ग३- ————— —रौयस्यं(?) ; ग२—कफात्मस्य(?)संपूर्णं । ३५/४— न४, ५, ग१, ३, ४, ५, ६, त—सम्पूर्णमचिराद्भवेत् ; न६—सम्पूर्णमचिरं————; ग२—संपूर्ण- शरीरं हृद्युक्षरो(?)————; न८—संशोषमचिराद्भवेत् ।

३६/१-२—न३- × × × × × × × × । ३६/१—न४- ———— —स्त्वग्नेः ; न७— ———————सर्वे ; ग२- ———— —स्तस्याः । ३६/२—न७—न पश्यति(?)वातजाः । ३६/३-४—न३- × × × × × × × × । ३६/३—न४- ———————वा ; ग१, ३, ४, ५, ६, न६, ७, ८, क—पार्थिवे च—————। ३६/४—न६—धारणां——————; ग१, ४, ५, ६, न८, क- —————कुर्वतस्तदा ।



नश्यन्ति श्लेष्मजा रोगा वातजाश्चाचिरात्तथा ।
व्योमांशे मारुतांशे च धारणं कुर्वतः सदा ॥३७॥

त्रिदोषजनिता रोगा विनश्यन्ति न संशयः ।
अस्मिन्नर्थे तथाब्रूतामश्विनौ च भिषग्वरौ ॥३८॥

प्राणसंयमनेनैव त्रिदोषशमनं नृणाम् ।
तस्मात्त्वं च वरारोहे नित्यं कर्म समाचर ॥३९॥

यमादिभिश्च संयुक्ता विधिवद्धारणं कुरु ॥४०॥

इति श्रीयोगयाज्ञवल्क्ये अष्टमोऽध्यायः ।

---

३७/१-२—न३- × × × × × × × × । ३७/१- ग३—श्लेष्मजा वातजाश्चैव । ३७/२— न६—वातजाश्चाचिरं तथा ; न७-वातजास्त्वाचिरात्तथा ; ग६—वातजाश्चापि पित्तजाः ; ग४—पैत्ताश्चैवाचिरात्तथा ; न८, क—वैद्याश्चैवाचिरात्तथा (?); ग१, ५—विनश्यन्ति न संशयः ; ग३— नश्यन्त्यत्र न संशयः ; न४—सत्यं सत्यं न संशयः ॥ ३७/३-४—ग१, ३, ५, न३, ४, क- × × × × × × × × । ३७/३—न६—व्यामांशे (?व्योमांशे)—————। ३७/४—न१, ६, ग४, ६— धारणां—————।

३८/१-२—न३, ४, ग१, ३- × × × × × × × × । ३८/२- — ग५, ६, क—विनश्यन्ति विषाणि च ; न६—नश्यन्त्यत्र न संशयः । ३८/३-४—न३- × × × × × × × × । ३८/३—ग२—अस्मिन्नर्थे ब्रुवाते तौ ; न४—अस्मिन्नर्थे तु तौ ततोऽब्रूताम्(?) ।. ३८/४—ग२— अश्विनौ च—————।

३९/१-२—न३- × × × × × × × × । ३९/२—ग२—त्रिदोषशमनं भवेत् । ३९/३-४— न३, ७- × × × × × × × × । ३९/४—न२, ग३—नित्यकर्म—————।

४०/१-२—न३, ७- × × × × × × × × । ४०/१—न२, ४, ६, ग३- ————— संयुक्तां(?) ; ग३—आ यस्माभिश्च संयुक्तां(?) ; न५- ——————संयुक्तं । ४०/२—ग२, ६, न४, ६- ——————धारणां———; ग४—विविधां धारणां कुरु ।

## नवमोऽध्यायः ॥

*याज्ञवल्क्य उवाच—

अथ ध्यानं प्रवक्ष्यामि शृणु गार्गि वरानने ।
ध्यानमेव हि जन्तूनां कारणं वन्धमोक्षयोः ॥१॥

ध्यानमात्मस्वरूपस्य वेदनं मनसा खलु ।
सगुणं निर्गुणं तच्च सगुणं वहुशः स्मृतम् ॥२॥

पंचोत्तमानि तेष्वाहुर्वैदिकानि द्विजोत्तमाः ।
त्रीणि मुख्यतमान्येषामेकमेव हि निर्गुणम् ॥३॥

मर्मस्थानानि नाडीनां संस्थानं च पृथक्पृथक् ।
वायूनां स्थानकर्माणि ज्ञात्वा कुर्वात्मिवेदनम् ॥४॥

---

### नवमोऽध्यायः ॥

*न५—श्रीयाज्ञवल्क्य उवाच ; त—भगवानुवाच ; न६, ८, ग४, क—श्री भगवानुवाच ; न१, २, ३, ७, ग१, २, ५, ६— × × × × ।

१/१—न१, २, ५, ७—ध्यानं ततः————— ; ग१, न४, त—ध्यानं सम्प्रति वक्ष्यामि ; न६, ग४—ध्यानं ते संप्रवक्ष्यामि ; न३— × × × × । १/२—ग२, न८, क— ————तपोधने । १/३—ग१—ज्ञानमेव हि———— ; ग४—ज्ञानमेवं हि——— ; ग५, ६, क—ध्यानमेव हि सर्वेषां ; न३— × × × × ।

२/१—न८—ध्यानमात्रस्वरूपस्य(?) ; न३— × × × × । २/२—न६—मनसा वेदनं——— ; न८—वन्दनं(?) मनसा———— ; न३— × × × × । २/३—न४, ग३, ५, ६ क— ————चैव ; न६—सुगुणं(?)————चैव ; न३— × × × × । २/४—न१, २— ————वहुशः श्रुतम् ; ग२— ————वहुलं स्मृतम् ; ग५— ————वहुधा श्रुतम् ; ग६, क— ————वहुधा स्मृतम् ; न६— ————वेदनं(?)——— ; न४, ग३—द्विविधं वेदसम्मतम् ; न३— × × × × ।

३/१—न३— × × × × । ३/२—न४, ६, ८, ग३, ५— ————————द्विजोत्तमे ; न७— ————द्विजोत्तम ; न३— × × × × । ३/३—ग२—तेषु च त्रीणि मुख्यानि ; ग१, ३—एषां त्रीण्येव मुख्यानि ; ज—एषु मुख्यतमास्तिस्रः ; न६—एषु त्रीण्येव मुख्यानि ; ग५—एषु मुख्यानि हि त्रीणि ; ग६, न८, क—एषु मुख्यानि च त्रीणि ; न३— × × × × । ३/४—ग२—एक एव च निर्गुणः(?) ; न३— × × × × ।

४/१—न३— × × × × । ४/२—ग१, २, ४, त—संधानं च———— ; न६—संस्थानानि (?)———— ; न३— × × × × । ४/३—न२—चत्तुना(?)————— ; न७—चतुर्णां(?)————— ; ग१, ५, न३— × × × × । ४/४—त————कर्मात्मवेदनम्(?) ; ग३—जित्वा————— ; न८———तस्मात्कुर्यात्तु वेदनम्; न३— × × × × ।





एक ज्योतिर्मय शुद्धं सर्वगं व्योमवद्दृढम् ।
अव्यक्तमचलं नित्यमादिमध्यान्तवर्जितम् ॥५॥

स्थूलं सूक्ष्ममनाकारमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनौपमम् ॥६॥

आनन्दमजरं नित्यं सदसत्सर्वकारणम् ।
सर्वाधारं जगद्रूपममूर्तमजमव्ययम् ॥७॥

अदृश्यं दृश्यमन्तःस्थं वहिःस्थं सर्वतोमुखम् ।
सर्वदृक्सर्वतःपादं सर्वस्पृक् सर्वतःशिरः ॥८॥

---

५/१—न८— ——————सिद्धं ; ग२—एवं————— ; ग३—एतज्ज्योतिर्मयं ——— ; न३— × × × × । ५/२—ग१—सर्वांगं————— ; ग२—सर्वांगं व्योममध्य(—म—)म् ; न१, २, त—तत्सर्वं व्योमवद्दृढम् ; न३— × × × × । ५/३—अत्र पाठभेदानां वाहुल्यान्मूले च तेभ्यः कः स्यादिति निश्चयपूर्वकं निर्णेतुमशक्यत्वाद्य एको पञ्च लेखसमूहे विद्यते स स्वीकृतो ग्रन्थे, सर्वे च पाठा अत्र दीयन्तेः—न१, २, ५, ७, त—अव्यक्तमचलं नित्यं ; ग२, न४—अत्युच्चममलं ——— ; ग १, ५, क—अत्यच्छममलं——— ; ग४—अत्यच्छमकलं———— ; न८—अत्यच्छमचलं——— ; ग३—अत्युच्चमचलं——— ; ग६—अत्यन्तनिर्मलं——— ; न३, ६—प्रत्यक्षमचलं————।

६/१—ग६— ———— —मनाकाशं ; न१, ५— ———— —मना सम्यक्(?) ; न२, ७— ———— —मनाशक्यं(?) ; ग५, ६, न८, क—अस्थूलं सूक्ष्ममाकाशं(?) । ६/२—न८—असंवृत्य (?)————— ; न१, २, ७—असंस्पर्शं————— ; त—असंस्पर्श्यं————— ; न५—समस्पर्शं— —————। ६/३—न१, ६, ७, ८, ग४, त— ————गन्धवढ्यं ; ग६— × × × × । ६/४—न३, ४, ६, ग४—अप्रमेयमनूपमम् ; न७— ———— —मनोपदम्(?) ; न२—अप्रमेयं मनोमयम् ; न५, ग३, त— ——— —मनोपमम् ; न८— ——— —महोपमम् ; ग६— × × × × ।

७/१—ग५, क—आनन्दममलं——— ; ग२—आनन्दमचलं——— ; न३—आनन्दमक्षरं——— ; न६—अनन्तमजरं——— ; ग१, ६— × × × × । ७/२—न८—सदा-(?सद—) सत्सर्वं——— ; न३—सर्वव (?सदसत्) सर्व——— ; ग१, ६— × × × × । ७/३—ग४—सर्वाकारं————— ; ग२—सर्वाधारं जगद्व्याप्तं ; ग१, ६— × × × × । ७/४—ग४—अमूर्ति————— ; न२—अमूर्तिमजमच्युतम् ; न५, ७—अमूर्तमजमच्युतम् ; न८—अमूर्तमय-(?-मज-) मव्ययम् ; ग१, ६— × × × × ; ग२—उत्तमं शिवमच्युतम् ।

८/१—न२, ७, ग५, ६, क— ———— —मध्यस्थं ; न३—सदृशं(?)—————। ८/२—न१, ६, ८, ग१, २, ४, ५, ६, त—— वहिष्ठं————— ; क—वहिष्ठं विश्वतोमुखम् । ८/३—ग१, २—सर्वगं———— ; न६—सर्व दिक्— ————। ८/४—ग१, २—सर्वाक्षिः———— ; ग३, ६—सर्वदृक्———— ; ग४, न८—सर्वगं———— ; न४—सर्वस्पृक् सर्वतं(?)शिवम् ।

ब्रह्म ब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत् ।
तदेतन्निर्गुणं ध्यानमिति ब्रह्मविदो विदुः ॥९॥

*अथवा परमात्मानं परमानन्दविग्रहम् ।
†गुरूपदेशाद्विज्ञाय पुरुषं कृष्णपिङ्गलम् ॥१०॥

ब्रह्म ब्रह्मपुरे चास्मिन्दहराम्बुजमध्यमे ।
अभ्यासात्सम्प्रपश्यन्ति सन्तः संसारभेषजम् ॥११॥

हृत्पद्मेऽष्टदलोपेते कन्दमध्यात्समुत्थिते ।
द्वादशाङ्गुलनालेऽस्मिश्चतुरङ्गुलमुन्मुखे ॥१२॥

---

९/१-४—"ग५, ६" लेखयोरस्मिन्श्लोके पंक्तयोः क्रमविपर्ययो दृश्यते। ९/१—ग२— ————यस्यां(?)। ९/२—न२, ग३—इति तद्वेदनं————; न३—इति यद्विदं(?)———; ग५—इति यद्वेदनं धिया। ९/३—ग४, ६— ——— —न्निर्गुणध्यानं; न३—तदेव निर्गुणध्यानं; न५—तदेतत्त्रिगुणं ध्यानं। ९/४—न१, २, ६, ७, ८, त— ———योगविदो विदुः; न५—परमानंद-विदो———।

*अत्र "न३" लेखे "अयं पंथा मुनिः श्रेष्ठ सांख्या संसारनाशनः।" इत्यशुद्धासम्बद्धा च पंक्तिः। "ग५, ६, क" इति लेखत्रयेऽप्यधिकाः पंक्तयः। ताः—ग५—ब्रह्म ब्रह्मपुरे चास्मिन्दहराब्दे[1] खमध्यमे। सत्यामृते[2] परानन्दे निर्गुणे परमात्मनि[3]॥ तदेतन्निर्गुणं ध्यानमिति ब्रह्मविदो विदुः॥ अन्ययोर्लेखयोस्तस्य पाठान्तराणि:—(१) ग६, क—दहराब्जे; (२)-ग६, क—सत्येऽमृते; (३) ग६, क—अत्रैकाधिका पंक्तिः। सा—"अदृश्ये दृश्यरूपेऽस्मिन्वेदनं परमं भवेत्" इति। तेन "ग५" लेखे त्रयः पंक्तयः, "ग६, क" लेखयोश्च चतुः पंक्तयोऽधिका अत्र।

१०/१—न३—अपाय चमात्मानं(?)। १०/३—न६, ८—गुरूपदेशाद्विज्ञेयं। १०/४—न४, ग३—प्रकृतं————। †अत्रैकाधिका पंक्तिः— न८, ग४—ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महाद्युतिम्।

११/१—ग१, ५, न३, त— ————वास्मिन्; न८, ग४— ————गार्गि। ११/२—अस्य पादस्य ९ पाठभेदाः हस्तलेखेषु, ४ च मुद्रितपुस्तकेषु दृश्यन्ते। तेभ्यः ग१, ३, न३, ४—दहराम्बुजमध्यमे; न१, ५, ८, त—दहराख्यस्य मध्यमे; ग४—दहराब्जस्य मध्यमे; ग६, क— दहराब्जे खमध्यमे; न६—दहराकाशमध्यमे-इति पंच शुद्धाः। शेषेभ्यः ग२—दहराख्यक(?ख—) मध्यमे; ग५—दहराब्दे(?-ब्जे) खमध्यमे; न७—हृत्सख्यस्य तु (?हृदाख्यस्य तु) मध्यमम् (?मध्यमे); न२—हृत्सख्यस्य (हृदाख्यस्य) मध्यमम् (?मध्यमे)—एते हस्तलेखान्तर्गताः; मु. पु, क. पु—देहराजे(?) सुमध्यमे; मु. पु—दहराख्ये स्व—(?ख—) मध्यमे; न. पु.—देह वाह्ये(?) सुमध्यमे; त्रि. पु.—देहे रुन्धन्खमध्यमे(?)—एते मुद्रितपुस्तकान्तर्गताः; एवमष्ट विकृतियुक्ताः। ११/३—ग२—अभ्यासात्त ————; ग१—स्वधिया सं————; न३—चेतसा सं————। ११/४—ग१, ३, न८, क—सन्तस्त्वं च तथा कुरु; ग५—सन्तस्त्वं तत्तथा कुरु; ग६—सन्त————सदा—; न४, ग३—मनस्त्वं च तथा————।

१२/१— न१—हृत्पद्मेऽष्टदलोपेतं(?); न८—हृन्मध्ये————; न७—हृत्यग्रे(?)—ग३— हृत्पदाष्टतलोपेत(?)। १२/३—ग१, ४, न८— ————मानेऽस्मिन्; न७— ————माले(?)————; ग६, क— ————नाभे(?)———। १२/४—न१, ६, त— ———— —सम्मुखे; न२, ५— ———— —सन्मुखे; न३— ———— —सम्मिते; ग२— ———— —मुन्नते; ग३— ———— —विस्तृते।



प्राणायामैर्विकसिते केसरान्वितकर्णिके ।
वासुदेवं जगन्नाथं नारायणमजं हरिम् ॥१३॥

चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम्।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ॥१४॥

श्रीवत्सवक्षसं विष्णुं पूर्णचन्द्रनिभाननम् ।
पद्मोदरदलाभोष्ठं सुप्रसन्नं शुचिस्मितम् ॥१५॥

*

शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
पद्मच्छविपदद्वन्द्वं परमात्मानमव्ययम् ॥१६॥

प्रभाभिर्भासयद्रूपं परितः पुरुषोत्तमम् ।
मनसालोक्य देवेशं सर्वभूतहृदि स्थितम् ॥१७॥

---

१३/२—ग५, ६, क—वैराग्यान्वितकर्णिके। १३/३—न१, ५— ————जगद्योनिं; न७—× × × ×। १३/४—न१, ५, ग२, ५, त, क— ————विभुम्; न४, ग३—नारायणमनामयम्।

१४/१—त— चतुर्भुजमहापद्मं; १४/३—ग५—किरीटहारकुयूरं(?); क—किक्कटाहारकेयूरं। १४/४—ग५, ६, क—पद्मपत्रायतेक्षणम्।

१५/१—न१, २, ५, ७, त— ————देवं; ग२— ————श्रीदं; १५/१-२—क—× × × × × × × ×। १५/३—न३— ———— —दलं भोष्ठं(?); न८— ——— —दलाभाक्षं; न१, २— ————करांभोजं; ग२—पद्मोत्पलदशां यासं(?); क—× × × ×। १५/४—ग५—सूर्यकोटिसमप्रभम्; क—× × × ×।

* अत्रैषाधिका पंक्तिः केषुचिल्लेखेषुः—न३, ४, ६, ग३, ५, ६—कौस्तुभोद्भासितोरस्कं वनमालाविभूषितम्; स एव "ग१"— ————वनमालाविराजितम्।

१६/२—न४—पीतवासःसमन्वितम्; ग३—पीतवाससमन्वितम्; ग५, ६—सूर्यकोटिसमप्रभम्। १६/१-२— क—× × × × × × × ×। १६/३—न२, ५, ७—पद्मोपमपदद्वन्द्वं; ग६—पद्माचिन्य(?)—पदद्वन्द्वं; क—× × × ×। १६/४— ग१, ३, ५, ६— ———— —मीश्वरम्; न३, ६—परमानन्दमीश्वरम्; क—× × × ×।

१७/१—ग५, ६—प्रभाभिर्भाविसद्रूपम्; ग४, न८—प्रभाभिर्भ्रामयद्रूपं(?); न६— ——— —र्भासियद्रूपं(?); ग३— ———र्भसियद्भृत्यं(?); क—× × × ×; न३—सुप्रभाभिर्भासयन्तं। १७/२—ग३, क—× × × ×। १७/३—ग५, ६— ————भूतेशं; न६— ————देवदेवेशं; न३—समस्तलोकदेवेशं; ग३, क—× × × ×। १७/४—ग३, क—× × × ×।

सोऽहमात्मेति विज्ञानं सगुणं ध्यानमुच्यते ।

हृत्सरोरुहमध्येऽस्मिन्प्रकृत्यात्मककर्णिके ॥१८॥

अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ।
ज्ञाननाले बृहत्कन्दे प्राणायामप्रबोधिते ॥१९॥

विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखम् ।
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ॥२०॥

तापयन्तं स्वकं देहमापादतलमस्तकम् ।
निर्वातदीपवत्तस्मिन्दीपितं हव्यवाहनम् ॥२१॥

दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ।
नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरम् ॥२२॥

---

१८/१–ग५, ६–सोऽहमेवेति यद्ध्यानं ; ग३, क–× × × × । १८/२–न८–सगुणध्यान-———; न३, ४–प्रकृत्यात्मनि———; न ६–प्रकृत्यान्वित——; ग२–धर्मकर्मसमुत्थिते ; ग३, क× × × × ।

१९/१–ग५–ऐश्वर्याष्टदलोपेते ; ग३, क–× × × × । १९/२–न१, २, ५, ७–विकारैः-केसरैर्युते ; ग३–कर्णिकाकेसरैर्युते ; ग२–कर्णिकाकेररैः-(?–केसरैः-) युते ; न४–कर्णिकाया रसैर्युते ; क–× × × × । १९/३–ग४, ५, ६, न८– —————महत्कन्दे ; न३, ग१– ————महाकन्दे; न६–× × × × दे; क–× × × × ; ग३————बृहत्संद–(?बृहत्कन्दे); ग२–प्राणनाले प्रभाभिज्ञे । १९/४–ग५, ६–प्राणायामैः———; न३, ६–प्रणवेन———; न४; ग३–प्राणायामप्रणोदिते ; क× × × × ।

२०/१–न३–विश्वा ++ वह्निरूपं ; क–× × × × । २०/२–ग१, न६– ————सर्वतोमुखम् ; क–× × × × । २०/३–क–× × × × । २०/४–न१, २, ३, ४, ७–शिखातन्वित———; त– ———लम्बित——; ग२–शिखाभिर्युत———; क–× × × ×।

२१/१–न१–तावयन्तं—————; ग२–दीपयन्तं—————; न३, क–× × × × । २१/२–न३, क–× × × × । २१/३–ग१, ४, ५, ६, न६, ८–निवातदीप———; न३, क–× × × ×; ग३–पवतस्यां (?) × × × × । २१/४–ग३–देवितं(?)———; न३, क–× × × × ।

२२/१–न४, ग३– —————शिखावह्नेः(?) ; क–× × × ×। २२/२–न३, ४, ग१, ३, ६– ——— –मीश्वरम् ; क–× × × × । २२।३–न४, ८, ग५– ————मध्यस्थं(?) ; न१, २, ७–नीलोत्पलस्य मध्यस्थं(?) ; न५–नीलोत्पल × × मध्यस्थं(?); क–× × × ×। २२/४–न२–विद्युल्लेखेवमीश्वरम्(?) ; त– —————राजते ; न३–विद्युद्वि-क्षेपभास्करम्(?) ; ग१, क–× × × × ।



नीवारशूकवद्रूपं पीताभं सर्वकारणम् ।
ज्ञात्वा वैश्वानरं देवं सोऽहमात्मेति या मतिः ॥२३॥

सगुणेषूत्तमं ह्येतद्ध्यानं योगविदो विदुः ।
वैश्वानरत्वं सम्प्राप्य मुक्तिं तेनैव गच्छति ॥२४॥

अथवा मण्डले पश्येदादित्यस्य महाद्युतेः ।
आत्मानं सर्वजगतः पुरुषं हेमरूपिणम् ॥२५॥

हिरण्यश्मश्रुकेशं च हिरण्मयनखं हरिम् ।
कप्यासस्य समं वक्त्रं सृष्टिस्थित्यन्तकारणम् ॥२६॥

---

२३/१–ग१, न४, क–× × × × । २३/२–न३–पीताङ्गं—————; ग१–पीतं भास्व-दणूपमम् ; ग३–पीताभास्वत्यणूपमम्(?पीतं भास्वदणूपमम्) ; न४, क–× × × × । २३/३–ग४, न८–ध्यात्वा—————; क–× × × × । २३/४–ग१, ४, न३–सोऽहमेवेति————; न६–सोऽहमित्येव————; क–× × × × ।

२४/१–ग१– —————ह्यत्र ; न६– —————चैतत् ; ग४, न८–सगुणादुत्तमं ह्येतत् (?) ; न१, २, ५, ७–सगुणेषूत्तमेष्वेतत्(?) ; ग३–सगुणोत्तमं ह्येतत् ; क–× × × × । २४/२–क× × × × । २४/३-४–क–× × × × × × × × ।

२५/१–न१, २– —————पश्यत् ; त– —————पश्यन् ; न३, ६– ——————ह्यस्मिन् ; ग५, ६– ———मण्डलं——; ग२– —————मण्डलं तस्य(?); क–× × × × । २५/२–न१, ३– ——————महाद्युतिः(?); न२, ७– ——————महाद्युतिम् ; न५– ——————महाद्युतं ; न६– ——————महाद्भुते(?) ; ग३– —————महच्च्युते (?) ; क–× × × × । २५/३–ग५, ६– न८– —————सर्वजगतां ; ग४– ————हेमजगतं(?) ; क–× × × × । २५/४–ग३– —————प्रेमरूपिणम् ; न३– ————देहरूपिणम् ; न६– —————हंसरूपिणम् ; क–× × × × ।

२६/१–न४–हिरण्यकेशश्मश्रुश्च ; न३–हिरण्यश्रवणं देवं ; क–× × × × । २६/२–न३–हिरण्यपुरुषं हरिम् ; न७–हिरण्यनयनं हरिम् ; क–× × × × । २६/३–अस्मिश्चरणे बहुशो वैकल्पिकाः पाठा लेखेषु मुद्रितपुस्तकेषु च दृश्यन्ते । तेभ्यो यः सान्वर्थः स ग्रन्थे स्वीकृत-स्तथापि स एव मूलग्रन्थे स्यान्नवेति निश्चयपूर्वकं कथयितुं न शक्यते। तस्मात्सर्वेऽपि त इहोद्धृता विदुषां विमर्शनाय स्वतन्त्रनिर्णयकरणाय च । ग१, २, त–कप्यासस्य समं वक्त्रं (कपेः गुदस्य समं वक्त्रं यस्य तमित्यर्थः); न१, ७–कप्यासनवद्दृष्टि; न२–कपाशामनवद्दृष्टिः (?); न५–कर्व्याशासनवद्-दृष्टि(?) ; न६–कप्यास्यासनवद्युक्तं ; ग४, न८–कनकाम्बुजवद्वक्त्रं ; न४–कैलासहिमवद्वक्त्रं (?) ; ग३–कैलासपोतवद्वक्त्रं(?); न३–रथासनं चन्द्रवक्त्रं ; ग५, ६–विकासिपद्मवदनं; क–× × × × इति लेखेषु ; त्रि. पु.–कप्यास्यासनमन्ववक्त्रं ; मुं. पु–कप्यासनं चतुर्वक्त्रं ; न. पु–यथासनं (?रथासन-) समंवक्त्रं; मु. पु–रथासनं चतुर्वक्त्रं–इति मुद्रितपुस्तकेषु । २६/४–न१, २, ५, ७, ८, ग१, ३, त– —————कारिणम् ; ग२–सृष्टिसंहारकारणम् ; क–× × × × ।

पद्मासनस्थितं सौम्यं प्रबुद्धाब्जनिभाननम् ।
पद्मोदरदलाभाक्षं सर्वलोकभयप्रदम् ॥२७॥

जानन्तं सर्वदा सर्वमुन्नयन्तं च धार्मिकान् ।
भासयन्तं जगत्सर्वं दृष्ट्वा लोकैकसाक्षिणम् ॥२८॥

सोऽहमस्मीति या बुद्धिः सा च ध्यानेषु शस्यते ।
एष एव तु मोक्षस्य महामार्गस्तपोघने ॥२९॥

ध्यानेनानेन सौरेण मुक्तिं यास्यन्ति सूरयः ।

भ्रुवोर्मध्येऽन्तरात्मानं भारूपं सर्वकारणम् ॥३०॥

---

२७/१–ग३, न७–पद्मासने स्थितं——; न८–पद्मासनस्थं सौम्यं च ; न३–पद्मासनगतं सौम्यं ; त, क–× × × × । २७/२–ग१–प्रफुल्लाब्ज————; ग२–प्रफुल्लकमलेक्षणम् ; न३–प्रबुद्धाब्जनिभेक्षणम् ; न६–प्रसिद्धाब्जनिभाननम् ; त, क–× × × × । २७/३–न१, २, ३, ४ ५, ७, ग१–पद्मोदरदलाभासं ; ग५, ६, न८–पद्मोत्पलविशालाक्षं ; त, क– × × × × ।, २७/४–अस्मिश्चरणे पाठभेदास्त्रय एव । तथापि "सर्वलोक" शब्दात्पश्चात् "भय" शब्दो "अभय" शब्दो वा वास्तविक इति निश्चयपूर्वकं निर्णेतुं पूर्वापरसन्दर्भादि न किमपि चिह्नं सहायकारी । तेनोपलब्धसाधनानि कथं विभक्तानीत्यत्र प्रदर्श्यंते:——न१, २, ग१, २, ३, ४, ५, त्रि. पु., मुं. पु., न. पु.,–सर्वलोकभयप्रदम् ; न४, ५, ६, ७, ८, ग६, मु. पु. क. पु.–सर्वलोकाभयप्रदम् ; न३–सर्वलोकभयावहम् ; त, क– × × × × ।

२८/१–ग१, ५, ६, त–विजानन्तं सदा सर्वं ; ग२–विजानन्ति(?)सदा सर्वं ; ग४–विजानन्तु(?)————; ग३–जानन्तः सर्वदा सर्वं ; क– × × × ; न१, २, ५, ७–सदा सर्वंनिजानन्दं । २८/२–अस्मिश्चरणे पाठभेदानां वाहुल्यं परस्परविसंगतता च लेखेषु दृश्येते । तेन सर्वेऽपि भेदा अत्र प्रदर्श्यन्ते। न १, ५, ७, ग१, ३, त–उन्नयन्तं च धार्मिकान् ; न१–प्रणयन्तं च———; न४–अनुयंतंच———; ग२–मुनयस्तं च धार्मिकाः ; मु. पु., क. पु.–स एव स्वीकृतः पाठः ; त्रि. पु.–× × × धार्मिकाः ; मुं पु; न, पु.–अनन्तं चैव धार्मिकाः ; न३, ग४, ६–उन्नयन्तं च धार्मिकम् ; ग५-आनयन्तं च धार्मिकम्, न८–ऋङ्गयंतं(?)च धार्मिकम् ; न६, क– × × × × । २८/३–न६, क–× × × × । २८/४–न८– ————साक्षिकम् ; क– × × × × ।

२९/१–ग२, ३, ६, न५– ——मात्मेति———; क–× × × ×। २९/२–ग२–————कथ्यते(?) ; न१,–साऽपि———शक्यते(?) ; न२, ७–साऽपि———शस्यते ; ग५–सात(?सा च)————; ग१– ———ज्ञानेषु शस्यते ; ग३– ————धन्येषु(?)———; ग४–सर्वप्राणिषु———; न८–सर्वप्राणेषु (?–प्राणिषु)———; ग६–एतद्ध्यानेषु———; क–× × × ×। २९।३–ग३– ————मुक्तस्य ; न६–एक एव तु——; ग५, ६–एषोपायस्तु——; क–× × × × । २९।४–न२, ७–सम्यग्मार्ग———; न१, ५–मार्गः प्रोक्त————; क–× × × × ।

३०/१–ग२– ————यान्ति हि। ३०/१-२–क–× × × × × × × × ; ग५, ६–अभ्यासेनैव सौरेण मुक्तिं यास्यन्ति योगिनः । ३०/३–न१, २–उच्चैर्मध्येऽन्तरात्मानं ; क–× × × × । ३०/४–ग३–भास्वद्रूपं नकारिणाम्(?) ; ग५–ओजोरूपिणमीश्वरम् ; ग६–महोरूपिणमीश्वरम् ; क– × × × × ।



स्थाणुवन्मूर्धपर्यन्तं मध्यदेहात्समुत्थितम् ।
जगत्कारणमव्यक्तं ज्वलन्तममितौजसम् ॥३१॥

मनसालोक्य सोऽहं स्यामित्येतद्ध्यानमुत्तमम् ।

अथवा बद्धपर्यङ्के शिथिलीकृतविग्रहे ॥३२॥

शिव एव स्वयं भूत्वा नासाग्रारोपितेक्षणः ।
निर्विकारं परं शान्तं परमात्मानमीश्वरम् ॥३३॥

भारूपममृतं ध्यायेद्भ्रुवोर्मध्ये वरानने ।
सोऽहमेवेति या बुद्धिः सा च ध्यानेषु शस्यते ॥३४॥

अथवाष्टदलोपेते कर्णिकाकेसरान्विते ।
उन्निद्रहृदयाम्भोजे सोममण्डलमध्यमे ॥३५॥

---

३१/१–ग१, ३, न३, ४, ५– ——— –न्मूर्घ्नि——; ग६–स्थाणुं चामूर्ध————; ग२–स्थाणु वा सर्वपर्यन्तं(?) ; क–× × × ×। ३१/२–न३,–मध्ये देहात्समुत्थितम् ; ग३–मध्ये देहे————; ग६–देहमध्ये————; क–× × × × ; न८–धारयेदचलं स्थिरम् । ३१/३——ग२–जगत्कारणमध्यस्थं ; क–× × × × । ३१/४–न३–ज्वलन्तममितोजसम् ; ग५–ज्वलन्तमिव तेजसा ; ग६–ज्वलन्तमिव तेजसम् ; न१, क–× × × × ।

३२/१–न१, क–× × × × । ३२/२–ग२, ३– ——— –ज्ज्ञानमुत्तमम् ; न५–आदित्ये ध्यानमुत्तमम् । ३२/३–न३– ————पर्यंकः ; न४, ग१, ३, त– ————पर्यङ्कं ; ग२– ————पर्यङ्कात् ; न६– ———फणिपर्यङ्कं ; क–× × × ×। ३२/४–न३, न६– ————विग्रहः ; ग१, ३, ५, ६, न४, त– ————विग्रहम् ; ग२–अशिनीकृत–विग्रहः(?) ; क–× × × × ।

३३/१–ग२–नाडीद्वयं निगृह्यम्यं(?) ; न६–हरिरेव स्वयं भूत्वा ; न८–शिकटीन(?)———; क–× × × × । ३३/२–न१, २, ३, ४, ५, ग१, ३—नासाग्रे रोपितेक्षणः ; न६– ———रुपितेक्षणः; (?) ; ग२– ————रोपितेक्षणम् ; ग४–नासाग्रन्यस्तलोचनः ; न८–नासाग्रन्यस्तलोचनं ; क × × × × । ३३/३–न६–निर्विकारपदं————; ग३–निराकारं परं——; क– × × × × । ३३।४–न१, ५, ७–परमात्मानमच्युतम् ; ग२–परमात्मानमव्ययम् ; क–× × × × ।

३४/१-२–न१, २, ५, ७, क–× × × × × × × × । ३४।१–ग६–भावयन्नत्र तद्ध्यायेत् ; न६–भारूपमच्युतं ध्यायेत् । ३४।३-४–न१, २, ५, ७, क– × × × × × × × × । ३४।४–न८–सा ध्यानेषु प्रशस्यते ; ग२–सा च ध्यानेन कथ्यते(?) ; ग६–सा तद्ध्यानेषु शस्यते ।

३५/१-२–क–× × × × × × × × । ३५/१–न६– ———षोडशोपेते ; ग४– ————त्मदलोपेते ; ग३–× × ×ष्टदलोपेते । ३५/२–न३, ७– ————केशरान्विते । ३५/३-४–क–× × × × × × × ×। ३५/३–न३, ८, ग२, त–उन्निद्रहृदयाम्भोजे ; ग३–उन्मील्य———; न२–उँन्निदे(?उन्निद्रे) हृदयांभोगे (?–भोजे) । ३५/४–न१, ४, ६, ग२–————मध्यगे ; ग५, ६–साग्निमण्डलमध्यमे ।

स्वात्मानमर्भकाकारं भोक्तृरूपिणमव्ययम् ।
सुधारसं विमुञ्चद्भिः शशिरश्मिभिरावृतम् ॥३६॥

षोडशच्छदसंयुक्तशिरःपद्मादधोमुखात् ।
निर्गतामृतधाराभिः सहस्राभिः समन्ततः ॥३७॥

प्लावितं पुरुषं तत्र चिन्तयित्वा समाहितः ।
तेनामृतरसेनैव साङ्गोपाङ्गकलेवरे ॥३८॥

अहमेव परं ब्रह्म परमात्माहमव्ययः ।
एवं यद्वेदनं तच्च सगुणं ध्यानमुच्यते ॥३९॥

एवं ध्यानामृतं कुर्वन् षण्मासान्मृत्युजिद्भवेत् ।
वत्सरान्मुक्त एव स्याज्जीवन्नेव न संशयः ॥४०॥

---

३६/१-२—क— × × × × × × × × । ३६/१—न६—आत्मान————; ग१—स्वात्मानममलाकारं ; ग४, न८— स्वात्मानं विहगाकारं ; ग६— ———— —मक्षयाकारं । ३६/२—ग१, ४, त, न८— ———— —मक्षरम् ; ग५, ६— ———— —मक्षयम् ; ग२—हेमरूपिणमक्षरम् ; न४—कृष्णरूपिणमव्ययम् । ३६/३—न२, ७, त—सुधासारं————; न३, ४—सुधारसं विमुंचन्तं ; ग३— ————विमलवत्(?) । ३६/४—ग१—सितराजिभिरावृतम् ; न४—शशिरश्मिकराकृति (?) ।

३७/१-२—न३, क— × × × × × × × × ।३७/१—न१, २, ४, ५, ७, ग१, २, त—षोडशच्छदसंयुक्तं ; ग४, ५—षोडशस्वरसंयुक्तात् ; ग६—षोडशस्वरसंयुक्तं । ३७/२—ग२—शिरः सितपद्मोपमम् ; न४—करे पद्ममधोमुखम् । ३७/३-४—क— × × × × × × × × । ३७/३—ग२—निर्वातामृत—(?निर्गतामृत—)————। ३७/४—ग५, ६—समृद्धाभिः————।

३८/१-२—क— × × × × × × × × । ३८/१—ग२—प्रापितं पुरुषं————। ३८/२—न२— ————समाहितम् । ३८/३-४—क— × × × × × × × × । ३८/४—न५— ————कलेवरम् ; न८, ग२, त—साङ्गोपाङ्गे कलेवरे ; न४—साङ्गोपाङ्गकलेवरः ; न२, ३, ६, ग१, ३, ५—साङ्गोपांङ्गकल्लेवरे ।

३९/१-२—क— × × × × × × × × । ३९/२—न३, ८, ग३—परमात्माहमव्ययम्(?) ; न६—परमात्मानमव्ययम्(?) ; ग५—परमात्माकमव्ययम्(?) । ३९/३-४—क— × × × × × × × × । ३९/३—न५—७— ————तत्र । ३९/४—न२, ५, ७, ग१, ४, ५—सगुण-ध्यान————; ग३—सुगुणं(?)————।

४०/१-२—क— × × × × × × × × । ४०/१—न३— ————ध्यानमतं(?)——; न४— ————ध्याने मतं————; न६—एतद्ध्यानामृतं————; ग५, ६, न८—एवं ध्यानमिदं————। ४०/२—ग३—वर्ण(?) × × × —द्भवेत् । ४०/३-४—क— × × × × × × × × । ४०/३—न६-वत्सरान्मृत्युदेवस्या × (?) ; ग१—संसारान्मुक्त————। ४०/४—न२—जीवंस्तेन————; न७—जीवस्तेन(?)————।



जीवन्मुक्तस्य न क्वापि दुःखावाप्तिः कथंचन ।
किं पुनर्नित्यमुक्तस्य मुक्तिरेव हि दुर्लभा ॥४१॥

तस्मात्त्वं च वरारोहे फलं त्यक्त्वैव नित्यशः ।
विधिवत्कर्म कुर्वाणा ध्यानमेव सदा कुरु ॥४२॥

अन्यानपि बहून्याहुर्ध्यानानि मुनिसत्तमाः ।
मुख्यान्युक्तानि चैतेभ्यो जघन्यानीतराणि तु ॥४३॥

सगुणं गुणहीनं वा विज्ञायात्मानमात्मनि ।
सन्तः समाधिं कुर्वन्ति त्वमप्येवं सदा कुरु ॥४४॥

इति श्रीयोगयाज्ञवल्क्ये नवमोऽध्यायः ॥

---

४१/१-२—ग१, क— × × × × × × × × । ४१/१—न३-जीवन्मुक्तौ न वै क्वापि । ४१/३-४—ग१, क— × × × × × × × × । ४१/३—ग४— ————नित्ययुक्तस्य । ४१/४—न८—मुक्तिरेव ह्यदुर्लभा(?) ; ग५, ६—मुक्तिरेव न दुर्लभा ; न१, २, ५—योगिनो विदितात्मनः ; न७—योगिनो विहितात्मनः(?) ।

४२/१-२—न२, ५, ७, ग१, क— × × × × × × × × । ४२/२—न३— ————त्यक्त्वा च————; ग५— ————त्यक्त्वेह————; ग२— ————तत्रैव(?त्यक्त्वैव) निश्चला । ४२/३-४—ग१, क— × × × × × × × × । ४२/३—न१, २, ५, ग२, त—कर्माणि विधिवत्कृत्वा ; ग४, न८—कर्माणि विधिवत्कुर्यात् । ४२/४—न७—ध्यानमेवं————।

४३/१-२—ग१, क— × × × × × × × × । ४३/२—न३— ————मुनिसत्तमा(:) ; न४, ग३— ————मुनिसत्तमे ; ग५, ६—मर्त्यानां मुनिसत्तमाः । अस्य मुद्रितपुस्तकेषु दृश्यमाणाः पाठा अपि विचारार्हा इति मत्वात्र दीयन्तेः—त्रि. पु.— ————मुनिसत्तमाः ; मु. पु., न. पु.— ————मुनिपुङ्गवाः ; मु. पु., क. पु.—वैदिकानि द्विजोत्तमाः । ४३।३-४—ग१, क— × × × × × × × × । ४३/३—न६, ग५— ————वै तेभ्यो ; न३—मुख्यान्मुक्तानि (?—न्युक्तानि) चैतेभ्यो ; न१, २, ७—मुख्यान्युक्तानि चैतानि ; न५— ————चेतानि ; ग२—मुक्तानि (?मुख्यान्युक्तानि) चैतानि । ४३/४—न२, ४, ५, ६, ७, ग४, ५— ————तु ; न८—वह्वन्यानीतराणि तु ।

४४/१-२—ग१, क— × × × × × × × × । ४४/१—न२, ७— ————च ; न१—सगुणे————च ; न८—सगुणं निर्गुणमपि ; ग४—सगुणं निर्गुणं वापि । ४४/२—ग४—विज्ञेयात्मानमात्मनि । ४४/३-४—ग१, क— × × × × × × × × । ४४/३—न१, २, ७—मनयः————। ४४/४—न३— ————समा कुरु ; ग५— ————तथा कुरु ।

## दशमोऽध्यायः

*याज्ञवल्क्य उवाच—

समाधिमधुना वक्ष्ये भवपाशविनाशनम् ।
भवपाशनिबद्धस्य यथावच्छ्रोतुमर्हसि ॥१॥

समाधिः समतावस्था जीवात्मपरमात्मनोः ।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ॥२॥

ध्यायेद्यथा यथात्मानं तत्समाधिस्तथा तथा ।
ध्यात्वैवात्मनि संस्थाप्यो नान्यथात्मा यथा भवेत् ॥३॥

---

### दशमोऽध्यायः ॥

* न५—श्री याज्ञवल्क्य उवाच ; ग४—श्री भगवान्याज्ञवल्क्यः ; न६, ८—श्री भगवानुवाच ; ग६—ओम् भगवान् ; न१, २, ३, ७, ग१, २, ५, त, क—× × × × ।

१/१-२—क— × × × × × × × × । १/१—ग२— ————विधिना———; न१, ५— ————ते प्रवक्ष्यामि ; न२, ७— ——— —मथ वक्ष्यामि । १/२—न३— ————विमोचनम् ; न४— —————विनाशनम् ; ग२— ———पापप्रणाशनम् ; ग१, त— ———पापविनाशनम् ; ग६—श्रृणु पापविनाशनम् ; न१, २, ५, ७—× × × × । १/३-४—क—× × × × × × × ×। १/३—ग२—भवपाशविनाशाय ;—न१, २, ५, ७—× × × × । १/४—न१—यथावच्छ्रोतुमिच्छसि (?) ; ग५—यथावज्ज्ञातुमर्हसि ।

२/१-२—क— × × × × × × × × । २/१—न१, २, ७, ग५, ६—समाधिस्तु समावस्था। २/३-४—क—× × × × × × × × । २/३—न४, ६, ७, ग३— —————स्थितिर्वा सा ; ग५, ६—ब्रह्मण्यवस्थितिर्या सा ; ग४—ब्रह्मणा अस्तिति—(?ब्रह्मण्यवस्थिति-) र्या सा ।

३/१-२—न१, क—× × × × × × × × । ३/१—न३—ध्यायद्यथा——; न२, ४, ५, ६, ७, ८, ग१, २, ३, ४, ५,, ६, त—ध्यायन्यथा————। एवं लेखेषु । मुद्रितपुस्तकेषु तु—त्रि. पु., मुं. पु. मु. पु.—ध्यायन्यथा———; क. पु.—ध्यायद्यथा— ——; न. पु.—ध्यायेद्यथा———— इति स्थितिः । तेभ्य अन्तिम एव ग्रन्थसन्दर्भे युक्त इति मत्वा सः स्वीकृतः । ३।२—न४—समाधिस्तु तथा तथा ; ग६—तत्समाधिस्तु तत्तथा । ३/३-४—क—× × × × × × × × । ३/३—ग१, ३, ४, ६, न५, ८, त— ——————संस्थाप्य(?प्यो) ; न३—ध्यात्मा(?ध्यात्वा) चात्मनि संस्थाप्य (?प्यो) ; न४—ध्यात्वात्मनि सुसंस्थाप्यो ; न१—ध्यात्वैवमात्मनि स्थाप्यो ; ग५—ध्यात्वेवा-(?ध्यात्वैवा-)त्मनि सुस्थाप्य (प्यो) ; न२, ७—ध्यात्वैवात्मनि स्थंयो (?संस्थाप्यो) । ३/४—न३—तान्यथात्मा (?नान्यथात्मा);————न४—नन्यथात्मा (?नान्यथात्मा) यज्ञो(?)यतो; ग५—नान्यथात्मा यतो———; ग६—नान्यथात्मा ह्यतो———; ग४—नियतात्मा यथा———; न८—नियतात्मा यतो———; ग२—नान्यथात्मा वशो———; न२—नान्यथात्मा यथा भवत् (?भवेत्) ।



एवमेव तु सर्वत्र यत्प्रपन्नस्तु यो नरः ।
तदात्मा सोऽपि तत्रैव समाधिं समवाप्नुयात् ॥४॥

सरित्पतौ निविष्टाम्बु यथाभिन्नतयान्वियात् ।
तथात्माभिन्न एवात्र समाधिं समवाप्नुयात् ॥५॥

एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे ।
कर्मैव विधिवत्कुर्वन्कामसंकल्पवर्जितम् ॥६॥

वेदान्तेष्वथ शास्त्रेषु सुशिक्षितमनाः सदा ।
गुरुणा तूपदिष्टार्थं युक्त्युपेतं वरानने ॥७॥

विद्वद्भिर्धर्मशास्त्रज्ञैर्विचार्य च पुनः पुनः ।
तस्मिन्सुनिश्चितार्थेषु सुशिक्षितमनाः सदा ॥८॥

---

४/१-२—क— × × × × × × × × । ४/२—न१, २, ४, ५, ७, ग३, त—यथारूपस्तु ————; ग६—यः प्रपन्नस्तु———; न६—यत्प्रसन्नस्तु————; ग१—यत्प्रयत्नस्तु————। ४/३-४—क— × × × × × × × × । ४/३—न१, ६, ग३—तथात्मा—————; ग४—तदात्मनोऽपि ————।

५/१-२—न१, ५, त, क— × × × × × × × × । ५/१—ग२—सरित्पतो—————; ग५—सरित्पतौ निविष्टात्तु ; न३—स × × × तौ निविष्टात्तु ; ग१—सरित्पतौ निविष्टाम्भः ; न८—सरिद्वरनिविष्टाम्त्रु ; ग३—सरित्पतौ विशिष्टाम्बु(?) ; न४—सरित्पतौ गतं तोयं । ५/२—अत्र मूललेखे कः पाठो भवेदिति निर्णेतुमशक्यत्वात् सर्वे दृश्यमाणाः पाठा दीयन्ते । न६,, ८—यथा भिन्न-तयान्वियात् ; न४— ————————भवेत् ; ग३—यथाभिन्नालयस्त्वया(?) ; ग२—यथाभिन्नं फलं त्वियात् ; न२, ७, ग४— ————————लयं————; ग१, ५, ६, न३—यथा लवणतामियात् ; त्रि. पु.—यथाभिन्नं फलं त्वियात् ; मुं. पु., न. पु.— ————————लयं———; मु. पु—यथाभिन्नत्वमाप्नुयात् ; क. पु.—× × × ×। ५/३-४—न५, त, क—× × × × × × × ×। ५/३—ग१, न७, ८—तथात्म-(?तथात्मा-) भिन्न————; न१—तथात्म-(?तथात्मा-) भिन्न तत्रैव ; न३—तथात्माम्यन्न (?-भिन्न) एवात्र ; ग२—तथात्वभिन्न एवात्र ; ग५—तथाभिन्न(?)एवात्र ।

६/१-२—क—× × × × × × × × । ६/१—त— ————————भवेदत्र ; न८— ———————भवत्यग्रे । ६/२—ग३— ————————यने(?) । ६/३-४—क—× × × × × × × ×। ६/३—ग५, ६—कर्मैवं——————; न८—कर्तैव(?कर्मैवं)———; न३, ग४—कर्मैव विधिवत्कुर्यात् ।

७/१-२—क— × × × × × × × × । ७/१—ग१, ४—वेदान्तेष्वर्थशास्त्रेषु ; न३, ४, ६, ग३—वेदान्ते सर्वशास्त्रेषु(?) न८—वेदान्तेषु च शास्त्रेषु ; ग६—वेदार्थेष्वर्थशास्त्रेषु । ७/३-४—क—× × × × × × × × । ७/३—न१,, ४, ग४, ६, ८— ——————चोपदिष्टार्थं ; न३———चोपदिष्टार्थो ; ग५— ———चोपदिष्टं यत् ; ग२— ———नोपदिष्टार्थं (?)। ७/४—ग६—युक्त्यापेतं(?)————; ग२—युक्तं ह्यतद्वरानने ; न३—मुक्तिमेति वरानने ।

८/१-२—क—× × × × × × × × । ८/१—न१, ३, ४, ५, ७, त—विद्वद्भिः सर्व-शास्त्रज्ञैः ; ग२—विद्वद्भिर्वेदशास्त्रज्ञैः । ८/२—न२—विचार्यैवं——————। ८/३-४—क—× × × × × × × ×। ८/३—न१, २, ५—तस्मिन्विनिश्चितार्थे तु ; त—तस्माद्विनिश्चितार्थेषु ; न३—तस्मिन्सुनियतार्थे तु ; ग१, ३, ६, न६—तस्मिन्सुशिक्षितार्थेषु ; ग २—निश्चितार्थेषु तेष्वेव ।

योगमेवाभ्यसेन्नित्यं जीवात्मपरमात्मनोः ।

ततस्त्वाभ्यन्तरैश्चिन्हैर्वाह्यैर्वा कालसूचकैः ॥९॥

विनिश्चित्यात्मनः कालमन्यैर्वा परमार्थवित् ।
निर्भयः सुप्रसन्नात्मा मर्त्यस्तु विजितेन्द्रियः ॥१०॥

स्वकर्मनिरतः शान्तः सर्वभूतहिते रतः ।
प्रदाय विद्यां पुत्रस्य मन्त्रं च विधिपूर्वकम् ॥११॥

संस्कारमात्मनः सर्वमुपदिश्य तदानघे ।
पुण्यक्षेत्रे शुचौ देशे विद्वद्भिश्च समावृते ॥१२॥

---

९/१-२—क— × × × × × × × × । ९/१—ग४, न८—तस्मिन्नेवाभ्यसेदैक्यं । ९/२—त—जीवात्मपरमात्मवित् ।

१०/१-२—त, क— × × × × × × × × । १०/१—ग२— ——————काल:(?) ; न३— ——————कामं(?) ; न६—विनिश्चितात्मधी:(?)———; ग३—विनिश्चितात्मन:(?) कालं । १०/२—ग२—अन्ये वा(?)—————; न३—निवार्णपरमार्थवित् । १०/३-४—क— × × × × × × × × । १०/३—ग३—निर्भयस्तु प्रसन्नात्मा । १०/४—अस्मिश्चरणे वहव: पाठभेदा: हस्तलेखेषु दृश्यन्ते। मुद्रितपुस्तकेष्वपि त्रय: सन्ति। तेभ्य एक ८ हस्तलेखेष्वस्ति तथापि तेन वाक्यात्सम्यगर्थबोधो न भवतीति मन्ये। तेन द्वाभ्यां हस्तलेखाभ्यां प्राप्त: पाठोऽत्र स्वीकृत: समीचीनत्वहेतुमवलम्ब्य, सर्वे च भेदा अत्र प्रदर्श्यन्ते । न१, २—मर्त्यस्तु———; ग१, ४, ५, ६, न३, ७, ८ त—मृत्योस्तु—————; त्रि. पु.—मृत्योस्तु—————; ग२—भृत्या तु(?)—————; न४, ग३—कुर्वीत——————; न६—कुवति (?कुर्वीत)—————; न५—ह्यर्थविच्च जितेन्द्रियः ; मुं. पु., न. पु—भूतेषु विजितेन्द्रियः ; मु. पु., क. पु.—भूत्वा तु—————।

११/१-२—क— × × × × × × × × । ११/१—ग१, ५, ६, न४, ६, ८—स्वधर्मनिरत: ———; न२—स्वकर्मनिरत: शान्तं(?) । ११/३-४—क— × × × × × × × × । ११/३-ग५, ६— ———योगं———। ११/४—ग२—समन्त्रं— —————।

१२/१-२—क— × × × × × × × × । अत्र यद्यपि ७ हस्तलेखेषु त्रि. पु. च दृश्यमाण: पाठ: स्वीकृत: समीचीनत्वदृष्टया तथापि सर्वेऽपि पाठभेदा अत्र दीयन्ते । १२/१—न१, २, ५, ७, ८, ग४, त, त्रि. पु.—संस्कारमात्मन: सर्वं ; ग१— ——————कार्यं ; न३—संस्काराद्यात्मन: कार्यं ; न६—संस्काराद्यात्मन: सर्वं ; ग५, ६—संस्कारान्वा तथा सर्वान् ; ग३—संस्कारेणात्मन: सर्वं(?) ; न४—संस्कारेणात्मनं(?)सर्वं; मुं पु.—संस्कारानात्मन: सर्वान् ; न. पु.—संस्काराण्यात्मन: सर्वाणि(?) ; मुं. पु., क. पु.—संस्काराण्यात्मन: सर्वं(?) ; ग२—संस्कारस्यात्मन: पूर्वं । १२/२—न२, ३— ——तदानघे ; ग१, २, त्रि. पु.—————तदानध ; न६—तदानघ: ; ग४— —————तथानघ: ; ग५— —————तथानध(?) ; न१, ५, ७, ८, ग६, न. पु., मुं. पु. मु. पु., क. पु.—तथानघे ; न४, ग३— —————यथाविधि । १२/३-४—क— × × × × × × × × । १२/४—ग१, ५—विद्वद्भिः सुसमावृते ।



भूमौ कुशान्समास्तीर्य कृष्णाजिनमथापि वा ।
तस्मिन्सुवद्धपर्यङ्को मन्त्रैर्वद्धकलेवरः ॥१३॥

आसने नान्यधीरास्ते प्राङ्मुखो वाप्युदङ्मुखः ।
नवद्वाराणि संयम्य गार्ग्यस्मिन्ब्रह्मणः पुरे ॥१४॥

उभिद्रहृदयाम्भोजे प्राणायामैः प्रबोधिते ।
व्योम्नि तस्मिन्प्रभारूपे स्वरूपे सर्वकारणे ॥१५॥

मनोवृत्तिं सुसंयम्य परमात्मनि पण्डितः ।
मूर्ध्न्याधायात्मनः प्राणं भ्रुवोर्मध्येऽथवानघे ॥१६॥

कारणे परमानन्दे आस्थितो योगधारणाम् ।
ओमित्येकाक्षरं बुद्धया व्याहरन्सुसमाहितः ॥१७॥

---

१३/१-२—क— × × × × × × × × । १३/१—ग३—भौमाकाशान्समास्तीर्य(?) । १३/३-४—क— × × × × × × × × । १३/३—न१, २, ५, ७, ग२—तस्मिस्तु वद्धपर्यङ्के ; ग१, ३, ४, ५, ६, त—तस्मिस्तु वद्धपर्यङ्को । १३/४—न३, ग६—मन्त्रैर्वद्धकलेवरं(?) ; न४—मन्त्रैर्वध्द्वा कलेवरं । † न१, २, ५, ७, ग२—मन्त्रैर्न्यस्तकलेवरे ।

१४/१-२—क— × × × × × × × × । १४/१—न१, २, ४, ५, ६, ग३— ———ऽनन्यधीरास्ते ; न७— ————ननाधीरास्ते(?) ; ग२—आसीन: स्वस्थचित्तस्तु ; ग५, ६—आसने ह्यधिरुह्यास्ते । १४/२—न७— —————वा उदङमुख: (?उदङ्मुख:) । १४/३-४—क— × × × × × × × × । १४/३—ग१—पुनर्द्वाराणि———।

१५/१-२—क— × × × × × × × × । १५/१—ग३—उन्मिन्न—(?)—————; न२—उभ्दिदृ(?)———। १५/२—त—प्राणायामैर्विबोधिते ; ग१, न७, ८—प्राणायामप्रबोधिते ; ग२—प्राणेन प्रतिवोधिते ; न१, ५—प्राणेनैव प्रवोधिते ; न२, ४—प्रणवेन प्रवोधिते ; न६—प्रणवेन प्रचोदिते ; ग३—प्रणवेन सुवोधिते । १५/३-४—क— × × × × × × × × । १५/४—न१, ७ ग४, ५—त्वरूपे (?त्वंरूपे)———; न३—त्वंरूपे———; न८—व्यरूपे(?)—————।

१६/१-२—क— × × × × × × × × । १६/१—न१, २, ५, ७—मनोवृत्ती:—————; न३—मनोवृत्तं—————; न४—मनो हृदि—————। १६/२—ग१, ३,— —————पण्डिते । १६/३-४—क— × × × × × × × × । १६/३—ग१— ——————प्राणान् । १६/४—ग४, ६, न८— —————वरानने ; न३— —————तथानघे ; ग२— —————ऽथवा भवेत् ; न४, ग३— —————ऽथवा नयेत् ।

१७/१-२—न१, २, ग१, २, ४, त, क— × × × × × × × × । १७/१—न४—कारणं परमानन्दं(?) ; ग३—कारणं (?कारणे) परमानन्दे । १७/२—ग३— —————योगधारणे । १७/३-४—क— × × × × × × × × । १७/३—न१, ३, ४, ८, ग५, ६— ——————ब्रह्म । १७/४—न४, ग३—व्याहरन्मुनिसत्तमे ।

शरीरं संत्यजेद्विद्वानात्मैवाभून्नरोत्तमः ।
यस्मिन्समभ्यसेद्विद्वान्योगेनैवात्मदर्शनम् ॥१८॥

तदेव संस्मरन्विद्वांस्त्यजेदन्ते कलेवरम् ।
यं यं सम्यक्स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥१९॥

तं तमेवैत्यसौ भावमिति योगविदो विदुः ।
त्वं चैवं योगमास्थाय ध्यायन्स्वात्मानमात्मनि ॥२०॥

स्वधर्मनिरता शान्ता त्यजान्ते देहमात्मनः ।
ज्ञानेनैव सहैतेन नित्यकर्माणि कुर्वतः ॥२१॥

---

१८/१-२—क— × × × × × × × × । १८/१—ग५— ————संत्यजेद्धीमान् । १८/२-न१, २, ५, ७—आत्मवांस्तु———; ग५, ६—आत्मैवायं————; ग२—आत्मनैव———; न८—आत्मैव स्यान्नसंशयः । १८/३-४—क—× × × × × × × × । १८/३—ग५— ————समभ्यसेद्धीमान् ; न४, ग३—यद्वा——————————। १८/४—न६—त्यजेदन्त्ये (?) कलेवरम्; ग३— × × × × ।

१९/१-२—क— × × × × × × × × । १९/१—न१, २, ३, ४, ५, ७, ग१, ४—तदेव संस्मरेद्विद्वान् ; न८—तदेव संस्मरन्वापि ; ग५, ६—यदेव संस्मरेद्विद्वान् ; ग ३— × × × × । १९/२—न२—त्यजत्यन्ते(?)———; न५—त्यजन्नन्ते————। १९/३-४—न१, ५, ग५, ६, क— × × × × × × × × । १९/३—न२, ३, ६, ७, ८, ग३, ४, त—यं यं वापि——————; न४—यं यं चापि——————।

२०/१-२—क— × × × × × × × × । २०/१—न३— ————व्रजेद्भावं ; न४, ग३— ——————भवेद्भावं(?) ; न१, २, ५, ६, ७, ८, ग१, ४, ५, ६, त— ——————भजेद्भावं (?) । २०/२—ग४, न८—इति वेदविदो———। २०/३-४—क— × × × × × × × × । २०/३—न४, ५, ६, ७, ८, ग३, ४, ५, ६—त्वं चैव——————; न३—त्वं चैव योगमभ्यस्य । २०/४-अत्र दृश्यमाणेभ्यो पाठेभ्यो य समीचीनो मतः सो यद्यपि स्वीकृतस्तथापि सर्वेऽपि पाठभेदा यथा तथा दीयन्ते । न३, ६, ८, ग४—ध्यायन्स्वात्मानमात्मनि ; न५—ध्यायन्स्वात्मानमात्मना ; न४, ग३—ध्यायन्नात्मानमात्मना ; न२, त—ध्यायन्त्यात्मानमात्मनः(?) ; न१, ७, ग१, २, ५, ६—ध्यायन्यात्मानमात्मना (?) ; मुं. पु., न. पु., मु. पु.—ध्यायन्त्यात्मानमात्मनि ; क. पु.—ध्यायन्नात्मानमात्मनि ।

२१/१-२—क— × × × × × × × × । २१/१—न१, ७— ———निरता त्वं च ; न५— ——————निरतत्वं च (?निरता त्वं च) ; न२, ग२, त—स्वकर्मनिरता शान्ता । २१/२—ग१-त्यजस्व— ——————; ग२, न४, ६, ८—त्यजन्ते (?त्यजान्ते)——————; ग४—त्यजान्ते देह-मात्मना(?) । २१/३-४—क— × × × × × × × × । २१/३—त, ग४, न८—ध्यानेनैव(?) ——————; न१, २, ५—ज्ञानेनैव सहितेन । २१/४—ग२—नित्यं——————————।



निवृत्तफलसङ्गस्य मुक्तिर्गार्गि करे स्थिता ।

यदुक्तं ब्रह्मणा पूर्वं कर्मयोगसमुच्चयम् ॥२२॥

तदेतत्कीर्तितं सर्वं साङ्गोपाङ्गं विधानतः ।
त्वं चैव योगमभ्यस्य यमाद्यष्टाङ्गसंयुतम् ॥२३॥

निर्वाणं पदमासाद्य प्रपंचं संपरित्यज ॥२४॥

इति श्रीयोगयाज्ञवल्क्ये दशमोऽध्यायः ॥

---

२२/१-२—क— × × × × × × × × । २२/१—ग३— ——————संगम्य(?) ; न३-निवृत्तिफलसंगम्य(?) । २२/२—न१— ——————करे स्थिते । २२/३—ग१, क— × × × × । २२/४—न३— ——————समुच्चयः(?) ; क— + + + + समुच्चयम् ; ग६— ————सम-न्वयम् ; न४—सर्वयोगसमुच्चयम् ।

२३/१—ग३—व्रत्ते—(?तदे—) तत्कीर्तितं—; न६—तवैतत्कीर्तितं—; ग५—तदेतत्कीर्तिदं———; ग१, न४—तदेतत्कथितं———; न३—स एषः कीर्तिः(?) सर्वत्र । २३/२—न३, ४, ५, ८; ग३, क—साङ्गोपाङ्गविधानतः । २३/३—न१, २, ८, ग५, ६, क—त्वं चैवं————; न४, ग३—त्वं चैव योगमास्थाय ; ग१— × × × × । २३/४—ग३— ——————संयुता; न७— ——————संपुटं ; ग२—योगाष्टाङ्गैः सुसंयुतम् ; ग१— × × × × ।

२४/१—ग३— ————परमासाद्य ; क— ————पदमास्थाय ; न३, ५, ६, ग५—निर्वाण-पदमासाद्य ; ग२—सर्वासां पदमासाद्य(?) ; ग१— × × × × । २४/१-२—ग१— × × × × × × × × । २४/२—ग२—तं व्रतं च परित्यज ; न४—त्यजांते च कलेवरम् ; ग३—त्यजस्वान्ते कलेवरम् ; न१, २, ५, ६, ७, ८, ग४, ५, ६, त, क—सप्रपंचं परित्यज ।

## एकादशोऽध्याय :॥

इत्येवमुक्ता मुनिना याज्ञवल्क्येन धीमता ।
ऋषिमध्ये वरारोहा वाक्यमेतदभाषत ॥१॥

*गार्ग्युवाच—

योगयुक्तो नरः स्वामिन्सन्ध्ययोर्वाथवा सदा ।
वैधं कर्म कथं कुर्यान्निष्कृतिः का त्वकुर्वतः ॥२॥

इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा ।
तां समालोक्य भगवानिदमाह नरोत्तमः ॥३॥

एकादशोऽध्याय :॥

१/१—न८—इत्येवमुक्तं————; ग१— ——————विधिना ; न३— ××××। १/२—न३—××××। १/३—ग१, २, न४—ऋषीनालोक्य नेत्राभ्यां ; न३— ××××। १/४—ग१, २, न४—वाक्यमेतदुवाच ह, न३— ××××।

*ग४, न८, क—गार्गी ।; न२, ७— ××××।

२/१—न१, २, ५, ७, त—योगयुक्तो नरः स्वामिन् ; ग१—योगयुक्तनरस्यास्य ; ग२—योगयुक्तं(?) मनुष्यस्य। २/२—न३— ——————वाप्यवा(?) सदा ; ग५, ६— ————वापि वा———; ग३— ——————वा न वा सदा; न४— —————वा यथा सदा। २/३—ग२—यत्कर्तव्यं मुनिश्रेष्ठ। २/४—अत्र पाठभेदानामतीव वाहुल्याच्चरणं द्विधा विभज्य साम्यवैषम्ये निर्णेतव्ये भवतः ; सर्वेऽपि भेदाश्चोल्लिख्यन्ते। स्वीकृतस्य पाठस्य मूलग्रन्थेऽस्तित्वविषये न शङ्कायै स्थानं वर्तते। तस्य द्वौ विभागौ :—(१) निष्कृतिः ; (२) का त्वकुर्वतः । प्रमाणग्रन्थेषु तु (१) न१, ३, ७, ग५, ६, त, क, त्रि. मुं. न. मु. पुस्तकानि—निष्कृतिः ; न२, ५, ग१, न. पु.—निःकृति : (?निष्कृतिः); न४, ६—निकृतिः (?निष्कृतिः) ; ग४, न८—निष्कृतिं(?); ग३—निवृत्ति(?); ग२— तत्सर्वं; (२) न२, ४, ६, ७, ८, ग३, ४, क, त्रि. पु.—का त्वकुर्वतः ; मुं. पु.———ह्यकुर्वतः ; न. पु.—का च तत्वतः; ग२—वद तत्त्वतः; न१—का च कुर्वतः(?) !; त, मु. पु., क. पु.— का न कुर्वतः ; न३—कात्र कुर्वतः; ग१—का तु कुर्वतः(?) ; न५—कालकुर्वतः(?); ग५, ६—किमकुर्वतः।

३/१—न२, ग१, त—इत्युक्ते————; न७— ——————++++। ३/२—न६— ——————स्तथा ; ग५, ६, क—ब्रह्मविद्ब्राह्मणप्रियः। ३/३—न३, ८, ग२, ४— ————कृपया ; ग५, ६, क— ——————नेत्राभ्यां। ३/४—ग३— ++++रोत्तमः ; ग२— ————महामतिः।



†याज्ञवल्क्य उवाच—

योगयुक्तमनुष्यस्य सन्ध्ययोर्वाथवा निशि ।
यत्कर्तव्यं वरारोहे योगेन खलु तत्कृतम् ॥४॥

आत्माग्निहोत्रवह्नौ तु प्राणायामैर्विवर्धिते ।
विशुद्धचित्तहविषा विध्युक्तं कर्म जुह्वतः ॥५॥

निष्कृतिस्तस्य किं वाले कृतकृत्यस्तदा खलु ।
वियोगे सति सम्प्राप्ते जीवात्मपरमात्मनोः ॥६॥

विध्युक्तं कर्म कर्तव्यं ब्रह्मविद्भिश्च नित्यशः ।
वियोगकाले योगी च दुःखमित्येव यस्त्यजेत् ॥७॥

† ग५, ६, क—याज्ञवल्क्यः ; न३, ६, ८, ग२, त—श्रीभगवानुवाच; न१, २, ५, ७, ग१—××××। ४/१—न४—योगयुक्तो मनुष्यस्तु ; ग५, ६, क—योगयुक्तस्य मर्त्यस्य। ४/२— न२, ३, ६, ग१, ४, क— ——————वा निशम् ; न५— —————दिवा निशम् ; ग५, ६———वाँपि वा सदा। ४/३—ग४, न८—न कर्तव्यं———; ग५, ६, क—किं कर्तव्यं—————। ४/४—न१, २, ७—योगतः ——————।

५/१—ग५, ६— ——————वह्नौ च । ५/२—न३, ४, ६, ग३— —————विदीपिते ; न१, ग१— प्राणयज्ञैर्विधीयते ; न२—प्राणयज्ञैर्विवर्धिते ; ग४—प्राणायामो विवद्यते ; न८—विध्युक्तं कर्म जुह्वतः । ५/३—ग५—विशुद्धचित्तवपुषा ; न६—विशुद्धशुद्धहविषो(?) ; न८—विशुद्धचित्ते विषय— । ५/४—न१, २, ३, ५, ७, ग१, २, ५, ६, क— —————कुर्वतः ; न६—विशुद्धं कर्म कुर्वतः ; न४—विध्युक्तं कर्म तु कुतः ; न८— ——प्राणायामो विवक्ष्यते ।

६/१—न३— ——————किं पाले (?बाले); न७— —————किं वास्ते(?); न८— ——————किं वाते(?) ; न५— ——————किं चांते। ६/२—न२, ६, ७, ८, ग१, ६, क— ——————तथा खलु ; ग४—कृतरन्ध्रस्तथा खलु । ६/३—ग६—वियोगे खलु—————। मुद्रित—पुस्तकेभ्यो, त्रि. पु., मुं. पु.—वियोगे सति————; न. पु.—संयोगे——————; मु. पु., क. पु.—प्रयोगकाले—————। ६/४—न५—जीवात्मपरमात्मनः(?) ।

७/१—ग१—विध्युक्तमेवं————; ग५—विध्युक्तमेव—————। ७/२— न ८——————निश्चितः (?नित्यशः) ; न३, ४, ६, ग३—योगविद्भिश्च————। ७/३—ग३— ——————योगाच्च ; ग२—विशुद्धकाले गार्ग्येतत् ; ग६, क—कालेनैव पुनर्योगी ; ग५—कामेनैव पुनर्योगं(?) ; न४—××××। ७/४—न१, २, ५, ७, ग१, २, ४, त— ——————यस्त्यजेत् ; न६— ————यद्व्रजेत् ; न३— ————यस्य यत् ; न४—××××।

कर्माणि तस्य निलयः निरयः परिकीर्तितः ।
न देहिनां यतः शक्यं त्यक्तुं कर्माण्यशेषतः ॥८॥

तस्मादामरणाद्वैधं कर्तव्यं योगिभिः सदा ।
त्वं चैव मात्यया गार्गि वैधं कर्म समाचर ॥९॥

योगेन परमात्मानं यजंस्त्यज कलेवरम् ।

इत्येव मुक्त्वा भगवान्याज्ञवल्क्यस्तपोनिधिः ॥१०॥

---

८/१–ग५, ६, क– ————वै गार्गि ; न१, ५, ७– ————निरये(?) ; न२– ————नीरूपे(?) ; ग१– ————निलयं ; –न८–कर्मणा———; ग२–कर्मणस्तस्य निलय:; न४, ग३–कर्मयोगस्य निलयो । ८/२–न४, ग३–निलयः———; न१–निलयं परिकीर्तितम् ; न२–निलये परिकीर्तितम् ; ग१–निरयं परिकीर्तितम् ; ग२–विलयः परिकीर्तितः ; ग५, ६–निष्क्रियः (?) परिकीर्तितः । क–निष्क्रयः परिकीर्तितः । ८/३–ग५– ———ततः शक्यं ; न१, ३, ६, ग६–न देहिना———; न८, क–न देहिना यत्तच्छक्यं ; न४, ग३–न देहिनाऽपि यच्छक्यं ; न२, ७–नो देहेन यतः शक्यं । ८/४–न८–त्यक्तु कर्माण्यदोषतः(?) ।

९/१–क–तस्मादामरणाद्गार्गि ; न६–तस्मादामरणाच्चैवं ; ग२–तस्मादाहरणं चैव । ९/२–न१, २, ५, ६, ७, त– ————योगिना——; ग५– ————योगिनां——। ९/३–अस्मिश्चरणे पुनः पाठानामतीव वैविध्यं दृश्यते । तेन तत्त्रिधा विभज्य साम्यवैषम्ये निर्णेतव्ये भवतः । ते विभागाः–(१) त्वं चैव ; (२) मात्यया: ; (३) गार्गि । तेभ्यो "गार्गि" शब्दोऽन्ते सर्वत्रैव वर्तते । प्रथमद्वयोर्विभागयो: पाठास्तु:–(१)–न१, २, ३, ४, ५, ७, ८, ग१, ३, ४, त, त्रि. पु., मुं. पु., न. पु. क. पु.–त्वं चैव ; मु. पु.– त्वं स——; न६–पंचैव; ग२, ५, ६, क–तस्मात् : (२)–न३–मात्यया: ; ग१, न४, त्रि. पु., मुं. पु.–मात्ययात्(?) ; ग४, न८–मा त्यजेत्; न६–मात्रया(?) ; ग३–मात्राया (?); न१, २, ५, ७, त–आत्मतया; न. पु.–(त्वं चैव) संत्यजन्; क. पु.–(त्वं चैव) संत्यजन्तीह ; मु. पु.–(त्वं) संत्यजन्ती(वै) ; ग२–(तस्मात्) आहरणं ; ग५, क–(तस्मात्) आमरणात् ; ग६–(तस्मात्) आरम्भणात् । ९/४–ग३–वैदि(?) कर्म——; ग२–सर्वं कर्म———; ग१–वैधं कर्म समाचरेः ; न७– ————समाचार(?) ।

१०/२–अत्र पुनः पाठानामतीव वैविध्यं दृश्यते । तेन चरणं द्विधा विभज्य साम्यवैषम्ये निर्णेतव्ये । तौ विभागौ:–(१) यजंस्त्यज ; (२) कलेवरम् । प्रमाणग्रन्थेषु तु:–(१)–ग१, ४, त्रि. पु., मुं. पु.–यजंस्त्यज ; क. पु.–युञ्जंस्त्यज ; न. पु.–युज्यस्त्यज ; न३, ५, ६–यज त्यज ; ग४–यजत्त्यज ; मु. पु.–युञ्जन्ती त्यज(?); न२–योजयित्वा ; ग२–यजेदन्ते(?त्यजेदन्ते) ; न१, ४ –यज स्थित्वा ; ग३–यजा(?) स्थित्वा ; न७–पूजयित्वा(?); ग५, ६, क, न८–जय त्वं च; (२)–ग१, २, ३, ४, ५, ६, न१, ३, ५, ६, ८, त, क, त्रि. पु., मुं. पु., न. पु. मु. पु., क. पु.—कलेवरम् ; न२, ४, ७–कलेवरे । १०/३–न१–इत्युक्त्वा स भगवान् ; न५– इत्येवमुक्त्वा स भगवान् । १०/४–ग५–याज्ञवल्क्यस्तपोधनः ।



ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।
सन्ध्यामुपास्य विधिवत्पश्चिमां सुसमाहिताः ॥११॥

गच्छन्तु साम्प्रतं सर्वे ऋषयः स्वाश्रमं प्रति ।

इत्येवमुक्ता मुनिना मुनयः संश्रितव्रताः ॥१२॥

विश्वामित्रो वसिष्ठश्च गौतमश्चाङ्गिरास्तथा ।
अगस्त्यो नारदश्चैव वाल्मीकिर्बादरायणिः ॥१३॥

पैङ्गिर्दीर्घतमा व्यासः शौनकश्च तपोधनः ।
भार्गवः काश्यपश्चैव भरद्वाजस्तथैव च ॥१४॥

---

११/१–न६– ————भगवान् । ११/३–न६–सन्ध्यामुपास्ते(?)———। ११/४–न१, २, ३, ५, ६, ग३– ————सुसमाहितः(?) ; न८– ————तु समाहितः(?) ; ग५– ————तु समाहिताः ।

१२/२–न६– ——— –श्चाश्रमं——; ग२– ———स्वाश्रमान्स्वकान्; न३, ८, ग४, क–मुनयः स्वाश्रमं——। १२/३–ग५, ६, क–इत्युक्तो(?) मुनिना तेन ।

१३/२–न३–गौतमश्चाङ्गिरस्तथा ; ग६–गौतमाङ्गिरसोस्तथा (?) ; न८–गौतमाश्चाङ्गिरास्तथा । १३/४–न३, ५, ग१, ४, ५–वाल्मीकिर्बादरायणः ।

१४/१–अस्मिश्चरणे पुनः पाठानां क्षोभोत्पादकं वैविध्यं दृश्यते। तेन तं त्रिधा विभज्य साम्यवैषम्ये निर्णेतव्ये भवतः । ते विभागाः–(१) पैङ्गिः ; (२) दीर्घतमा (३) व्यासः । तेभ्यो "व्यासः" शब्द सर्वसामान्यः । प्रथमविभागद्वयसम्बधिनाः पाठाश्चेदृशाः—(१)– न१, ८, ग१, ४, क, त्रि. पु., मुं. पु.–पैङ्गिः ; न. पु.–पैली(?) ; ग६–पंगीक(श्च) ; ग५–अङ्गिरा(श्च) ; न२, ५, ७–गार्ग्यः ; त, न६, मु. पु., क. पु.–योगी ; ग२–मुनिः ; ग३–गर्गः ; न३–ऐंद्रा; न४–× × ; (२)—न१, ५, ग१, ३, ४, त, त्रि. पु.–दीर्घतमा ; न२, ३, ७, ८, ग२, ३, क, मुं. पु., न. पु., मु. पु., क. पु.–दीर्घतपा ; ग५–(अंगिरा–)श्चतपा(?) ; ग६–(पंगीक-) श्चतपो(?) ; न४– × × × × । १४/२–न३– ————तपोनिधिः ; न६– ————महानिधिः(?) ; न४– × × × × । १४/३–न२, ५, ७, ८, ग३, क– ————कश्यपश्चैव; त– ——— –श्च्यवनश्चैव; ग२, न४– × × × ×। १४/४–न६–भारद्वाजस्तथैव च ; ग१, ४, न८, त–भरद्वाजस्तपोधनः; ग५, ६, क–भरद्वाजस्तपोनिधिः ; न१, २, ५, ७–भारद्वाजस्तपोधनः ; ग२– × × × × ।

तपस्विनस्तथा चान्ये वेदवेदाङ्गवेदिनः ।
याज्ञवल्क्यं सुसम्पूज्य गीर्भिराशीभिरुत्तमैः ॥१५॥

ते यान्ति मुनयः सर्वे स्वाश्रमेषु यथागतम् ।

गतेषु स्वाश्रमेष्वेषु तापसेषु तपोधना ॥१६॥

प्रणम्य दण्डवद्भूमौ वाक्यमेतदभाषत ।

*गार्ग्युवाच—

भगवन्सर्वशास्त्रज्ञ सर्वभूतहिते रत ॥१७॥

भवमोक्षाय योगीन्द्र भवद्भिर्भाषितं तु यत् ।

---

१५/१–न४–तपस्विनस्तथा ✝✝ । १५/२–न४, ग३– ——— –वादिनः ; न८, क– ———वेदान्तवेदिनः ; त– × × × × । १५/३–ग१– ————समभ्यर्च्य ; ग४–नमस्कृत्य————; त– × × × × । १५/४–इदं चरणं त्रिधा विभज्य पाठो निश्चितः। ते विभागाः–(१)गीर्भिः ; (२) आशीभिः ; (३) उत्तमैः । यथा स्वीकृतं चरणं "न८, क" लेखयोरेव लभ्यते । तदन्तर्गताः शब्दास्तु विशेषेषु दृश्यन्ते । सर्वेऽपि पाठभेदा विभागश अत्र प्रदर्श्यन्तेः– (१) न१, २, ३, ४, ५, ६, ७, ८, ग१, ३, ४, ५, क, त्रि. पु., मुं. पु., मु. पु., क. पु.—गीर्भिः ; ग२–वाग्भिः ; ग६–गंभी–(रग्याभिः(?) ; न. पु.–गार्गी(?) ; त– × ×। (२) न३, ६, ८, क, न. पु.–आशीर्भिः ; न१, २, ५, ७–आप्ताभिः ; ग१, ३, ४, न४, मु. पु.–अग्र्याभिः ; ग५, क. पु.–अन्याभिः ; ग६–(गंभी-) रग्याभिः; ग२–अर्घ्याभिः; त्रि. पु., मुं. पु.–पुण्याभिः ; त– × × ×। (३) ग२, न८, क–उत्तमैः ; न१, २, ३, ४, ५, ६, ७, ग१, ३, ५, ६, मु. पु. क. पु.–उत्तमम् ; न. पु.–उत्तमाम्(?) ; त्रि. पु., मुं. पु.–उत्तमाः(?) ; त– × × ; ग४—तपोधनम् ।

१६/१–न१, ४–ते याताः———; न२, ७–ते ययु.——; ग२–ते गताः———; ग५, ६, क– तेनैव————; त– × × × ×। १६/२–ग२–स्वाश्रमांस्तु——; ग४–स्वाश्रमं तु———; न७–स्वाश्रमेषु यथायथम्; त– × × × ×। १६/३–त–गतेषु ते स्वाश्रमेषु; ग३, न३, ४– ———स्वाश्रमे तेषु । १६/४–न५–तपसिपु (?तापसेषु)—; न१–स्वाश्रमेषु———; न३–तापसेषु तपोनिधौ(?) ; न८– ———तपोधनाः (?तपोधना); ग४–स्वरूपेषु तपोधनम्(?) (?) ; ग५, क–स्वाश्रमे सा तपोधना ; ग६–स्वाश्रमे वा तपोघनम्(?) ।

१७/१–न३– ——— –दभाषतः (?–द्भाषत); ग३– ——— –दुवाच ह; त–तमेतदभिभाषत । *न४–श्रीगार्ग्युवाच; ग५, ६–गार्गी–; ग४, न८– × × × × ।

१८/१–ग५, ६, क–भवमोक्षाय योगीन्द्र; न४, ५, ६, ७, ८, ग१, २, त–योगं————; न१,–यन्मे————; न३–योगो विज्ञाय(?)———; ग४–भोगमोक्षाय(?)———; ग३–योग मुक्षाय गार्गि(?) ।



यमाद्यष्टाङ्गसहितो योगो मुक्तेस्तु साधनम् ॥१८॥

तदेतद्विस्मृतं सर्वं सर्वज्ञ तव सन्निधौ ।
योगं ममोपदिश्याद्य साङ्गं संक्षेपरूपतः ॥१९॥

त्रातुमर्हसि सर्वज्ञ जन्मसंसारसागरात् ।

इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा ॥२०॥

आलोक्य कृपया दीनां स्मितपूर्वमभाषत ।

उत्तिष्ठोत्तिष्ठ किं शेषे भूमौ गार्गि वरानने ॥२१॥

वक्ष्यामि ते समासेन योगं सम्प्रति तं शृणु ॥२२॥

इति श्रीयोगयाज्ञवल्क्ये एकादशोऽध्यायः ॥

---

न३, ६, ७, ८, ग१, ३, ४, ५, ६, त, क–भवद्भिर्भाषितं तु यत् ; न३, ग२–भवता भाषितस्तु यः । १८/२–न१, २, ४, ५, ६, ७, ८, ग१, ३, ४, ५, ६, त, क–भवद्भिर्भाषितं तु यत् ; न३, १८/३–ग१, ५, ६, न५–यमाद्यष्टांगसंयुक्त (:); न१, ४, ६, ८, ग४, क– ————सहितं (?); ग३–यद्यद्दृष्टांगसहितं(?) । १८/४–न३, ८————कारणम्; न१, ४, ६, ग१, क–योगं मुक्तेस्तु साधनम्; न५–योगमुक्तिस्तु———; ग३–योगयुक्तस्तु————; न७–योगस्तु मुक्तिसाधनम् ।

१९/१–ग४–तदेतेन स्मृतं सर्व(?) ; न३–स एव विस्मृतः सर्वः (?) ; ग२–तदेतच्च स्मृतं ————तदसंनिधौ (?तव संनिधौ) ; ग२–यज्ज्ञानं तव सन्निधौ ✝✝ । १९/२–न३– ————तदसंनिधौ ; ग४– ——मे चोपदिश्याद्य ; ग६, (?) । १९/३–न१, २, ग१, त– —योगं ममोपदिश्यात्र ; ग४– ——मे चोपदिश्याद्य ; न३– ——(म–) मोपदिश्याद्य त्वं क–योगं ममाद्योपदिश; ग२– ———मे योगशास्त्रं त्वं(?); न३– ——(म–) मोपदिश्याद्य त्वं (?) ; ग३– ———तु नोपदिश्याद्य(?) । १९/४–ग५, ६, क–सर्वं————; न३– ———संज्ञेयरूपतः ; ग१– ———संक्षेपतः पुनः ; ग२–ब्रूहि संक्षेपतो यतः ।

२०/१–ग६–श्रोतुमर्हसि(?)——। २०/२–ग२–यन्मां——————। २०/४–ग४– ——————स्तथा ; ग६– —————स्त्वया(?) ; ग१–याज्ञवल्क्यस्तपोनिधिः ।

२१/१–ग३– ————— –दिनां (?दीनां); न१, २, ३, ५, ६, ७, ८, ग१, ४, त– ———— –मथाब्रवीत्; क– ———कृपणां———। २१/२–न१, २, ५, ७, ८, ग१, ४, त– ———— किं शेते(?) । २१/४–ग५, ६, न३–तेन पूर्वमभाषत । २१/३–न२, ५, ७, ग१– ——— किं शेते(?) । २१/४–ग५, ६, क–गार्गि भूमौ——।

२२/१–न१, २, ५– ———तं———; न६–वक्ष्यामीति————; ग३– वक्ष्यामि त(?ते)———। २२/२– न१, २, ५, ७, ८, ग३, ४, ५, ६, क– ——————तच्छृणु ; ग२– ———स्थिरमना———।

## द्वादशोऽध्याय :

*याज्ञवल्क्य उवाच—

सव्येन गुल्फेन गुदं निपीडच सव्येतरेणैव निपीडच सन्धिम् ।
सव्येतरं न्यस्य करेतरस्मिन्शिखां समालोकय पावकस्य ॥१॥

---

द्वादशोऽध्याय : ॥

*ग५, ६, न८—याज्ञवल्क्यः ; न१, २, ३, ५, ६, ७—श्रीभगवानुवाच ; ग१, २, त—× × × × । "क" लेखः एकादशाध्यायान्ते समाप्यते । तेनास्मिन्नध्याये १५ भ्य एव हस्तलेखेभ्यो टिप्पण्यो भविष्यन्ति । "ग१" लेखे यद्यपि द्वादशाध्यायो न कुत्राप्यङ्कितस्तथापि तत्स्थाः श्लोकास्तस्मिन्नेकादशाध्याये वर्तन्त एव । ग२", "ग६" लेखयोरध्यायान्तर्गतानां श्लोकानामारम्भात्पूर्वं ३ अधिका विसङ्गताः श्लोका विद्यन्ते ते :—

ग२—दुर्लभं जन्म मानुष्यं, विवेकमतिदुर्लभम् ।
दुर्लभा देवमुक्तिस्तु[1] ज्ञानं त्रैलोक्यदुर्लभम् ॥१॥

पुण्यक्षेत्रे[2]विषयविरतिःसत्तपः[3]सत्यवाक्यम्
दाना[4] वाक्यं परुषरहितं[5] व्याप्य+++श्च योगः[6] ।
धर्मो जन्तुष्वगतिषु तया[7] जन्मने पापशुद्धिः[8]
सत्यज्ञानं[9] भवभयहरं तुष्टिरिष्टं विभूतिः[10] ॥२॥

चित्तायत्तं धातुबद्धं शरीरं[11] चित्ते नष्टे धातवो[12]यान्ति नाशम् ।
तस्माच्चित्तं यत्नना[13] रक्षणीयं[14] स्वस्थे चित्ते बुद्धयः संभवन्ति ॥३॥

"ग६" लेखे पाठन्तराणि—१. देवभक्तिश्च ; २. पुण्यक्षेत्रं ; ३. संतपः ; ४. दानं ; ५. पुरुषरहितं ; ६. प्राणिहिंसावियोगः ; ७, धर्मो जीवेष्वगतिषु दया ; ८. जान्हवी पापशुद्धिः ; ९. सम्यग्ज्ञानं ; १०. तुष्टियिष्टा विभूतिः ; ११. पातु सर्वं शरीरं ; १२. यातवो ; १३. यत्नतः ; १४. चिक्षणीयं । द्वयोरपि लेखयोरशुद्धयो दृश्यन्ते तथापि प्रस्तुतग्रन्थविसङ्गता इमे श्लोका इति तेषां शुद्धपाठनिर्णये यत्नो न क्रियते ।

१/१—न१, ५, ७— ————निवध्द्य; ग१— ————निरस्य ; न२— ———— निबध्द्वा । १/२—ग२— ————शक्तिम्(?) ; न४— ————दण्डम् (?) ग४— ————सव्यम्; न३— ————सन्धिम् ; न५, ७—सव्ये करेणैव(?)————; ग६—सव्ये तले न्यस्य तथेतरश्च(?) । १/३—इदं चरणं त्रिधा विभज्य साम्यवैषम्ये निर्णेतव्ये । ते विभागाः—(१)सव्येतरं ; (२) न्यस्य ; (३) करेतरस्मिन् । लेखादिविभागाः—(१)—ग१, ४, त, त्रि. पु., मुं. पु., मु. पु., क. पु.—सव्येतरं ; न३, ४, ८, ग२, ३—सव्येतरे ; ग५, ६—सव्ये तले; न१, २, ५, ७—सव्ये करे ; (२)—ग१, ४, न८, त, त्रि. पु., मुं. पु., न. पु., मु. पु., क. पु.—न्यस्य; न२, ३, ४, ५, ७, ग२, ३, ५, ६—न्यस्त ; न१—अभ्यस्त(?) ; न६—स्वस्त्य ; (३)—न. पु.—करेतरस्मिन् ; ग१ २, न१, २, ३, ५, ७, त्रि. पु., मुं. पु., क. पु.—करेतरेऽ-(?करेतर—)स्मिन् ; न६—करेपरेऽस्मिन् ; न४, ग३—करेतरस्तु(?) ; ग४—करं करेतरे ; त, मु. पु.—कलेवरेऽस्मिन् ; ग५, न८—तथेतरं च ; ग६— तथेतरश्च । १/४—ग३— ————पावनस्य(?) ; न३—शिलां(?)———— ; ग२—शिखां समालोक्य च ।





आयुर्विघातकृत्प्राणो निरुद्धस्त्वासनेन वै ।
याति गार्गि तदापानात्कुलं वह्नेः शनैः शनैः ॥२॥

वायुना वातितो वह्निरपानेन शनैः शनैः ।
ततो ज्वलति सर्वेषां स्वकुले देहमध्यमे ॥३॥

प्रातःकाले प्रदोषे च निशीथे च समाहितः ।
मुहूर्तमभ्यसेदेवं यावत्पंचदिनद्वयम् ॥४॥

ततस्त्वात्मनि विप्रेन्द्रे प्रत्ययाश्च पृथक्पृथक् ।
सम्भवन्ति तदा तस्य जितो येन समीरणः ॥५॥

---

२/१—न३—आयुर्विघातकप्राणः ; ग५—आयुर्विघातकः——; ग३—आयुर्विध्यांत कृत्प्राणः (?) ; ग२—आयुर्निपूतकणे(?)+++ । २/२—ग१, ६— ————तु ; न५—निरुद्धः श्वसनेन वै ; न४—रुद्धयस्व स्वासनेन वै ; ग२—निरुद्धय स्वां(?) शनैः शनैः । २/३—न६— ————तथापानात् ; न१————तदापाने(?) ; न२, ७— ————तदापानं(?) ; ग२— ————सदापानात् ; ग५, ६, न८—तथापानः(?) ; न४, ग३— ————तदादौ च ; ग४—× × × × । २/४—ग३— ——वह्नि शनैः शनैः (१) ; न१—कुले वह्नेः———— ; न२—कुम्भं(?)———— ; ग२—तत्कुलं वह्निना—— ; ग४—× × × × ।

३/१—न४, ग३— ————पातितो(?)—— ; त— ————चालितो— ; ग२— ————वासिरो(?)—— ; न३— ————वर्धितो—— ; ग४—× × × × । ३/२—न३—तस्पानेन(?) ———— ; ग४—× × × × । ३/३—ग५— ——ज्वरति(?)—— ; ग४,—× × × × । ३/४—न१, २, ५, ७, ग६—स्वकुलं———— ; ग२—भास्वरे———— ; ग३—नकुशे(?)———— ; ग५— ————हेममध्यमे(?) ; ग४, क. पु.—× × × ×।

४/१—न४—प्राप्तकाले(?)———— ; ग४—× × × × । ४/२—न१, त— ————समाहिता ; न३—निशीथाभ्यां———— ; ग४—× × × × । ४/४—ग४, न८— ————दिनत्रयम् ; न१— ————दिने द्वयम्(?) ।

५/१—न६, ८— ———श्चात्मनि—— ; न२, ४, ७— ————स्वात्मनि—— ; ग५, ६— ——स्त्वेतानि— ; ग३—स्वात्मनि विप्रेन्द्र(?) ; न३—तपः(?) स्वात्मनि विप्रेन्द्र(?) । ५/२—न६, ग१, ५, ६—प्रत्ययानि(?)———— ; ग४, न८—प्रत्यङ्गानि(?)———— । ५/३—न६, ८— ————तथा तस्य ; न४— ————तदास्यांतर् ; ग३— ————सदा स्वांतर् ; न१—संभवति(?)———— ; ग५, ६— ————सदा तस्य । ५/४—ग१, न१, ५— ————यस्य ; न८—जितेन न सजारणः(?) ।

शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ।
नादाभिव्यक्तिरित्येते चिह्नान्यादौ भवन्ति हि ॥६॥

अल्पमूत्रपुरीषः स्यात्षण्मासे वत्सरेऽपि वा ।
आसने वाहने पश्चान्न भेतव्यं त्रिवत्सरात् ॥७॥

*ततोऽनिलं वायुसखेन सार्धं धिया समारोप्य निरोधयेत्तम् ।
ध्यायन्सदा चक्रिणमप्रवुद्धं नाभौ सदा कुण्डलिनीनिविष्टम् ॥८॥

शिरां समावेष्य मुखेन मध्यामन्याश्च भोगेन शिरास्तथैव ।
स्वपुच्छमास्येन निगृह्य सम्यक्पथश्च संयम्य मरुद्गणानाम् ॥९॥

---

६/१—न५— ———दीतिः(?) ; न४, ग३—शरीरे————। ६/२—ग४—वह्नेर्जाठरं
वर्तिनः(?) ; ग३—वह्निजठर———(?) । ६/३—न४— ——— —रित्येतत्(?) ; न१
——— —रित्येव ; न५, ७— ——— —रित्येवं । ६/४—न३—प्रत्त्ययाः संभवन्ति हि ।

७/१—न१, २, ३, ५, ७, ग२, ३, ६, त— ———मूत्रपुरीषं———। ७/२—न१, २, ३, ४,
५, ७, ग१, ३, ४, त— ———वत्सरे तथा; न८—षण्मासाद्वत्सरेण वा ; ग२—षण्मासे वत्सरे त
(?ऽथवा) । ७/३—न४—प्रासने वाहने———; न८—आसनेन भवेत्पश्चात्(?) ; ग२—आहा
बहुभोजत्वं(?) ; ग६—"आहारं बहुभोजित्वं" इत्यधिकायां पंक्त्याम् । ७/४—ग५—न भेत्तव्यं (?भेतव्यं)
———; ग६—"न भोक्तव्यं त्रिवत्सरात्" इत्यधिकायां पंक्त्याम् ; न१, २, ४, ५, ७, ग३,
त—न गन्तव्यं————; ग२, ६—लघुत्वं वत्सराद्ध्रुवम् ; न८—लभेदेवं त्रिवत्सरात् ।

*अत्र "न१, २, ५, ७" लेखेषु त्रयः श्लोकाः "दृष्टचिन्हस्ततस्तस्मिन्" इत्याद्याः "दहत्यत्र न
संशयः" इत्यन्ताः। ते नाधिकाः किन्तु ६. ६७–६९ एवेति नात्रोद्धृताः।

८/१—न३—ततो विलं(?)————; न७—सतो विलं——सम्यक्; न२—ततोऽनिलं————
सम्यक् ; न४— ————वायुमुखेन(?)सार्धं । ८/२—न४— ———— निरोधय त्वम्; ग३—
————निरोधयित्वा ; ग४—धिया समासाद्य निरोधयेत्तम् । ८/३—न२, ३, ६—ध्यायेत्सदा
————; ग५, ६, न८—ध्यायन्सदा चक्रिणमप्रमेयम् । ८/४—ग२, ४, न८— ————
कुण्डलीसंनिविष्टम् ; न६— ————कुण्डलीसंप्रविष्टम् ; ग५, ६— ————कुण्डलिनं
प्रविष्टम् ; न२, ३, ५, ग१— ————कुण्डलिनं निविष्टम् ; न४— ————कुण्डलिनीं
प्रविष्टाम्(?) ; ग३— + + + + + कुण्डलिनीं प्रतिष्ठाम् ।

९/१—इदं चरणं चतुर्धा विभज्य साम्यवैषम्ये निर्णेतव्ये भवतः। ते च विभागाः—(१) शिरां ;
(२) समावेष्टच ; (३) मुखेन ; (४) मध्यां । तेभ्यो "मुखेन" शब्दः सर्वसमानः । १, २, ४
शब्दानां च विषये पाठभेदा अत्र दृश्यन्तेः—(१)—न३, ६, ८, ग१, ४, ५, ६, ५ मुद्रितानि पुस्तकानि—शिरां;
न४—शिरः ; ग३—मुखं ; न१, २, ५, ७, ग२, त—द्वारं; (२)—न२, ३, ४, ६, ८, ग१, २, ४, ६,
मुं. पु., न. पु., मु. पु., क. पु.—समावेष्टच ; त्रि. पु.—× × ; न१, ५, ग३, त—समावेश्य ;
न७—समावेक्ष्य ; ग५—सुषुम्णां च ; (४) न६, ग१, ४, ५, त्रि. पु.—मध्यां ; न४, ८, ग३—मध्यात् ;
न१, २, ७, ग२, त—मध्यमं ; न५—मध्यं ; न५—मध्यं ; न३, मुं. पु., न. पु., मु. पु., क. पु.—मध्ये;
ग६—वह्नौ(?) ९/२—ग२—त्वन्येन————; न१, ५—अन्यानुभोगेन शिरस्तथैव ; न२—
अन्येन भोगेन शिरा—; न७—अन्येन योगेन शिरा———; ग३, न८, त—अन्यांश्च भोगेन शिरांस्तथैव।
९/३—न१—स्वपुछ—(?—पुच्छ) मासेन (?मास्येन)———; न८—स्वपुच्छमन्येन(?)————;
ग३— ————निगूह्य———; ग५—स्वच्छन्दमास्येन————। ९/४—न६—प+श्च
————; ग४— ——संस्मृत्य(?)———; न८—पथं च(?)————।



प्रसुप्तनागेन्द्रवदुच्छ्वसन्ती सदा प्रवुद्धा प्रभया ज्वलन्ती ।
नाभौ सदा तिष्ठति कुण्डली सा तिर्यक्सु देहेषु तथेतरेषु ॥१०॥

वायुना विहृतवह्निशिखाभिः कन्दमध्यगतनाडिषु संस्थाम् ।
कुण्डलीं दहति यस्त्वहिरूपां संस्मरन्नरवरस्तु स एव ॥११॥

सन्तप्ता वह्निना तत्र वायुना च प्रचालिता ।
प्रसार्य फणभृद्भोगं प्रवोधं याति सा तदा ॥१२॥

बोधं गते चक्रिणि नाभिमध्ये प्राणाः सुसम्भूय कलेवरेऽस्मिन् ।
चरन्ति सर्वे सह वह्निनैव यथा पटे तन्तुगतिस्तथैव ॥१३॥

---

१०/१—त—प्रसुप्तनागेन्द्र इवोच्छ्वसन्ती; ग३—प्रबुद्ध————————; न२—प्रवुद्धनागेन्द्र-
(-वदु-) च्छ्वसन्ती ; ग५, ६—सुषुप्तनागेन्द्र इव श्वसन्ती । १०/२—ग४—सदा प्रवुद्धप्रभया
———; ग३—सदा प्रवुद्धा प्रलये(?)———; ग१, न४—सदा प्रवुद्धा प्रभया———; न२, ५, ७—
सदा प्रवुद्धा प्रभया———; न१—हृदात्प्रवृद्धा————; ग५, ६, न८—सदा प्रवुद्धाग्निरिव———।
१०/३—ग६— ————————सदा । १०/४—न४, ग३—तिर्यक्सु देहेषु + + + + ; न३—
तिर्यक् स्वदेहेषु— ————।

११/१—न३— ——विगत————; ग४, ५, ६— ——विधृत————; न७—
———वितत———; न१, २, ५— ——वातितो वह्नि———(?) ; न८—वायुना विधृतो वह्निः ;
११/२—न२, ३— ————————संस्था
(अनुष्टुप् छन्दोऽस्मिल्लेखे) ; न४, ग३—× × × × । ११/२—न२, ३— ————संस्थाम्(?) ;
ग५, ६—तुन्दमध्यगतवह्निषु संस्थाम्(?) ;
(?संस्थाम्) ; त— ————नाडीभिः संस्था(?) ; ग५, ६—तुन्दमध्यगतवह्निषु संस्थाम्(?) ; ११/३—ग२,
न४, ग३—+ + + सुपूर्य संस्थाम् ; न८—शिरोभिः कन्दमध्यगः (अनुष्टुप् छन्दः) । ११/३—ग२,
न२, ३—कुण्डली (?कुण्डलीं————; ग४—कुण्डला (?कुण्डलीं)————;
न८— ————यमस्त्वहिरूपां (?यस्त्वहिरूपां) ; न४—× × × × । ११/४—ग४— ——— —
———न्नरवरः स स एव; न२—संस्मरनेह(?)वरस्तु ; न३—संस्तुत + + + + + एव; ग३—संस्मरन्नर-
वरस्तु + + + ; न४—× × × × × × ; त—सो भवेद्गिरिधरस्तु न वान्यः।

१२/१—न७— ———वायुना(?)———; न१, ५—सन्तप्तवह्निना;—— ग१, ४, न६—
सन्तप्तो————; ग५, ६—सन्तप्तो वह्निना यस्तु –; न४— ग३—× × × × । १२/२—
न३— ————प्रवातिता ; न८— ————प्रपातिता ; न६, ग४— ————प्रवातितः ;
ग६— ————प्रचोदितः ; ग५— ————प्रचोदिता ; ग२— ————प्रवोधिता ; न४,
ग३—× × × × । १२/३—न२, ७, ग२— ——फणिवद्भोगं ; न५— ———फणवद्भोगं ;
न३— ————फलवद्भोगं ; न१— ————पूर्णवद्भोगं(?) ; न४, ग३—× × × × । १२/४—
न२, ५, ७, ग२— प्रवोधं याति सा तदा ; ग६—भ्रुवोधं (?प्रवोधं) याति सा तदा ; न३, ६, ८,
ग१, ५, ६, त, त्रि. पु., मुं. पु.— ————तत्तथा(?) ; न. पु., मु. पु., क. पु.— ————
यात्यसौ तदा ; ग४—प्रवोधयति(?) तत्तदा ; न४, ग३—× × × × ।

१३/१—न३—वोधं गति (?गते)————; न१, ५, ग४—बोधं गता कुण्डली————; न८—
बोधं गतां कुण्डली————(?) ; न२—बोधं गता कुण्डलिनी च नाभिं(?) ; न७—बोधं गता
कुण्डलिनी च मध्ये ; त, न४, ग३—× × × × × × । १३/२—न८—प्राणान्(?)————;
न५—प्राणास्तु संभूय———; न१, २—प्राणस्तु(?) संभूय———; ग५—प्राणः सुसम्भूय(?)———;
न७—प्राणोस्तु (?प्राणास्तु)————; न३—+ + + + + कलेवरेऽस्मिन् ; त, न४, ग३—× ×
× × × × । १३/३—न७—चरन्ति सर्वं (?सर्वे)————; ग५—चलन्ति————————;
त, न४, ग३—× × × × × × । १३/४—न३— ————तंतुगतस्तथैव(?) ; न६— ————
————तंतुततिस्तथैव ; न८—यथा पटास्तन्तुगतास्तथैव ; त, न४, ग३—× × × × × × ।

पृष्ठमध्ये स्थिता नाम्ना सह मूर्ध्नि स्थिता सदा ।
मुक्तिमार्गः सुषुम्ना सा ब्रह्मरन्ध्रेति कीर्त्तिता ॥ ३० ॥

अव्यक्ता सैव विज्ञेया सूक्ष्मा सा वैष्णवी स्मृता ।
इडा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे ॥ ३१ ॥

इडा तस्याः स्थिता सव्ये दक्षिणे पिङ्गला स्थिता ।
इडायां पिङ्गलायां च चरतश्चन्द्रभास्करौ ॥ ३२ ॥

इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः ।
चन्द्रस्तामस इत्युक्तः सूर्यो राजस उच्यते ॥ ३३ ॥

विषभागो रवेर्भागः सोमभागोऽमृतं स्मृतम् ।
तावेव धत्तः सकलं कालं रात्रिन्दिवात्मकम् ॥ ३४ ॥

भोक्त्री सुषुम्ना कालस्य गुह्यमेतदुदाहृतम् ।
सरस्वती कुहूश्चैव सुषुम्नापार्श्वयोः स्थिते ॥ ३५ ॥

गान्धारी हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः ।
कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ॥ ३६ ॥

यशस्विन्याः कुहोर्मध्ये वारणा च प्रतिष्ठिता ।
पूषायाश्च सरस्वत्याः स्थिता मध्ये तपस्विनी ॥ ३७ ॥

गान्धारायाः सरस्वत्याः स्थिता मध्ये च शङ्खिनी ।
अलम्बुषा च विप्रेन्द्रे! कन्दमध्यादवस्थिता ॥ ३८ ॥

पूर्वभागे सुषुम्नायास्त्वामेढ्रान्तं कुहूः स्थिता ।
अधश्चोर्ध्वं च विज्ञेया वारणा सर्वगामिनी ॥ ३९ ॥

यशस्विनी च याम्यस्य पादाङ्गुष्ठान्तमिष्यते ।
पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि मे प्रिये! ॥ ४० ॥



याम्ये पूषा च नेत्रान्तं पिङ्गलायां तु पृष्ठतः ।
तपस्विनी तथा गार्गि ! याम्यकर्णा(न्तमिष्य)ते ॥ ४१ ॥

सरस्वती तथा चोर्ध्वमाजिह्वायाः प्रतिष्ठिता ।
आ सव्यकर्णाद् विप्रेन्द्रे ! शङ्खिनी चोर्ध्वगा मता ॥४२॥

गान्धारा सव्यनेत्रान्ता इडायाः पृष्ठतः स्थिता ।
इडा च सव्यनासान्तं सव्यभागे व्यवस्थिता ॥ ४३ ॥

हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ।
विश्वोदरा तु या नाडी तुन्दमध्ये व्यवस्थिता ॥ ४४ ॥

अलम्बुषा महाभागे! पायुमूलादधोगता ।
एतास्वन्याः समुत्पन्नाः सिरास्वन्याश्च तास्वपि ॥४५॥

यथा ह्याखुबिले तद्वदब्जपत्रेषु वा सिराः ।
नाडीष्वेतासु सर्वासु विज्ञातव्यास्तपोधने! ॥ ४६ ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ४७ ॥

एते नाडीषु सर्वासु चरन्ति दश वायवः ।
एतेषु वायवः पञ्च मुख्याः प्राणादयः स्मृताः ॥ ४८ ॥

तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे! ।
प्राण एवैतयोर्मुख्यः स सर्वप्राणभृत् सदा ॥ ४९ ॥

आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे ।
प्राणालय इति प्राहुः पादाङ्गुष्ठेऽपि केचन ॥ ५० ॥

अधश्चोर्ध्वं च कुण्डल्याः परीत्य प्राणसंज्ञकः ।
तिष्ठन्नेतेषु चक्रेषु प्रकाशयति दीपवत् ॥ ५१ ॥

व्यानः (श्रोत्रा)क्षिमध्ये च कृकट्यां गुल्फयोरपि ।
घ्राणे गले स्फिजोद्देशे तिष्ठत्यत्र न संशयः ॥ ५२ ॥
अपाननिलये केचिद् गुदमेढ्रोरुजानुषु ।
उदरे वंक्षणे कट्यां जघने तौ वदन्ति हि ॥ ५३ ॥
उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ।
समानः सर्वगात्रेषु सर्वं प्राप्य व्यवस्थितः ॥ ५४ ॥
भुक्तसर्वरसं गात्रे व्यापयन् वह्निना सह ।
द्विसप्ततिसहस्रेषु नाडीमार्गेषु सञ्चरन् ॥ ५५ ॥
समानवायुरेवैकः साग्निर्व्याप्य व्यवस्थितः ।
अग्निभिः सह सर्वत्र साङ्गोपाङ्गकलेबरे ॥ ५६ ॥
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।
तुन्दस्थं जलमन्नं च रसानि च समीकृतम् ॥ ५७ ॥
तुन्दमध्यगतः प्राणस्तानि कुर्यात् पृथक् पृथक् ।
पुनरग्नौ जलं स्थाप्यं त्वन्नादीनि जलोपरि ॥ ५८ ॥
स्वयं च पात्रं सम्प्राप्य तेनैव सह मारुतः ।
प्रवाति ज्वलनं तत्र देहमध्यगतं पुनः ॥ ५९ ॥
वायुना पातितो वह्निरपानेन शनैः शनैः ।
तदा ज्वलति विप्रेन्द्रे! स्वकुले देहमध्यमे ॥ ६० ॥
ज्वालाभिर्ज्वलनस्तत्र प्राणेन प्रेरितस्ततः ।
जलमत्युष्णमकरोत् कोष्ठमध्ये गतस्तथा ॥ ६१ ॥
अन्नव्यञ्जनसंयुक्तं जलोपरि समर्पितम् ।
ततः स पक्वमकरोद् वह्निः सन्तप्तवारिणा ॥ ६२ ॥



स्वेदमूत्रे जलं स्यातां वीर्यरूपं रसो भवेत् ।
पुरीषमन्नं स्याद् गार्गि! प्राणः कुर्यात् पृथक् पृथक् ॥ ६३ ॥
समानवायुना सार्धं रसं सर्वासु नाडिषु ।
व्यापयन् श्वासरूपेण देहे चरति मारुतः ॥ ६४ ॥
रोमरन्ध्रैश्च नवभिर्विण्मूत्रादिविसर्जनम् ।
कुर्वन्ति वायवः सर्वे शरीरेषु निरन्तरम् ॥ ६५ ॥
निःश्वासोच्छ्वासकासाश्च प्राणकर्मेति कीर्त्तिताः ।
अपानवायोः कर्मैतद् विण्मूत्रादिविसर्जनम् ॥ ६६ ॥
हानोपादानचेष्टादि व्यानकर्मेति चेष्यते ।
उदानकर्म तत् प्रोक्तं देहस्योन्नयनादि यत् ॥ ६७ ॥
पोषणादि समानस्य शरीरे कर्म कीर्त्तितम् ।
उद्गारादिगुणो यस्तु नागकर्मेति चोच्यते ॥ ६८ ॥
निमीलनादि कूर्मस्य क्षुतं वै कृकरस्य च ।
देवदत्तस्य विप्रेन्द्रे! तन्द्री कर्मेति कीर्त्तितम् ॥ ६९ ॥
धनञ्जयस्य शोफादिसर्वकर्म प्रकीर्त्तितम् ।
ज्ञात्वैवं नाडिसंस्थानं वायूनां स्थानकर्मणी ॥ ७० ॥
विधिनोक्तेन मार्गेण नाडीसंशोधनं कुरु ॥ ७०½ ॥

इति याज्ञवल्क्यगीतासूपनिषत्सु
चतुर्थोऽध्यायः ॥

---

### अथ पञ्चमोऽध्यायः ।

गार्गी—

भगवन्! ब्रह्मविच्छ्रेष्ठ! सर्वशास्त्रविशारद! ।
केनोपायेन शुद्धाः स्युर्नाड्यो मे तं वद प्रभो! ॥ १ ॥

इत्युक्तो ब्रह्मवेदिन्या ब्रह्मविद् ब्राह्मणस्तथा ।
तां समालोक्य कृपया नाडीशुद्धिमभाषत ॥ १ ॥
विध्युक्तकर्मसंयुक्तः कामसङ्कल्पवर्जितः ।
श्रुतविद्यो जितश्रान्तः सत्यधर्मपरायणः ॥ ३ ॥
गुरुशुश्रूषणरतः पितृमातृपरायणः ।
स्वाश्रमस्थः सदाचारो विद्वद्भिश्च सुशिक्षितः ॥ ४ ॥
तपोवनं सुसम्प्राप्य फलमूलोदकान्वितम् ।
तत्र रम्ये शुचौ देशे ब्रह्मघोषसमन्विते ॥ ५ ॥
स्वधर्मनिरतैः शान्तैर्ब्रह्मविद्भिः समावृते ।
वारिभिश्च सुसम्पूर्णे पुष्पैर्नानाविधैर्युते ॥ ६ ॥
फलमूलैश्च सम्पूर्णे सर्वकामफलप्रदे ।
देवालये वा नद्यां वा ग्रामे वा नगरेऽथवा ॥ ७ ॥
सुशोभनं मठं कृत्वा सर्वरक्षासमन्वितम् ।
त्रिकालस्नानसंयुक्तः स्वधर्मनिरतः सदा ॥ ८ ॥
वेदान्तश्रवणं कुर्वंस्तस्मिन् योगं समभ्यसेत् ।
केचिद् वदन्ति मुनयस्तपस्स्वाध्यायसंयुताः ॥ ९ ॥
स्वधर्मनिरताः शान्तास्तन्त्रेषु च सदारताः ।
निर्जने निलये रम्ये वातातपविवर्जिते ॥ १० ॥
विध्युक्तकर्मसंयुक्तः शुचिर्भूत्वा समाहितः ।
मन्त्रैर्न्यस्ततनुर्धीरः सितभस्मधरः सदा ॥ ११ ॥
मृद्वासनोपरि कुशान् संस्तीर्य ह्यथवाजिनम् ।
विनायकं सुसम्पूज्य फलमूलोदकादिभिः ॥ १२ ॥



इष्टदेवं गुरुं नत्वा तत आरभ्य चासनम् ।
प्राङ्मुखोदङ्मुखो भूत्वा जितासनगतः स्वयम् ॥ १३ ॥
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।
नासाग्रे शशभृत ख.... ....श्चतुरीयकम् ॥ १४ ॥
स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ।
इडया वायुमारोप्य पूरयित्वोदरस्थितम् ॥ १५ ॥
ततोऽग्निं देहमध्यस्थं ध्यायन् ज्वालावलीयुतम् ।
रेफं च बिन्दुसंयुक्तमग्निमण्डलसंस्थितम् ॥ १६ ॥
ध्यायन् विरेचयेत् पश्चान्मन्दं पिङ्गलया पुनः ।
पुनः पिङ्गलयापूर्य घ्राणं दक्षिणतः सुधीः ॥ १७ ॥
पुनर्विरेचयेद् धीमानिडया तु शनैः शनैः ।
त्रिचतुर्वत्सरं वाऽथ त्रिचतुर्मासमेव वा ॥ १८ ॥
षट्कृत्व आचरेन्नित्यं रहस्येवं त्रिसन्धिषु ।
नाडीशुद्धिमवाप्नोति पृथक् चिह्नोपलक्षितम् ॥ १९ ॥
शरीरलघुता दीप्तिर्वह्नेर्जठरवर्त्तिनः ।
नादाभिव्यक्तिरित्येते चिह्नं तत्सिद्धिसूचकम् ॥ २० ॥
यावदेतानि सम्पश्येत् तावदेव समाचरेत् ॥ २०½ ॥

इति याज्ञवल्क्यगीतासूपनिषत्सु
पञ्चमोऽध्यायः ॥

---

### अथ षष्ठोऽध्यायः ।

प्राणायाममथेदानीं प्रवक्ष्यामि विधानतः ।
समाहितमनास्त्वं च शृणु गार्गि! वरानने ॥ १ ॥

प्राणापानसमायोगः प्राणायाम इतीरितः ।
प्राणायाम(इति ? स्त्रिधा) प्रोक्तो रेचपूरककुम्भकैः ॥ २
वर्णत्रयात्मका ह्येते रेचपूरककुम्भकाः ।
स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ ३ ॥
इडया वायुमारोप्य पूरयित्वोदरस्थितम् ।
शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरन् ॥ ४ ॥
धारयेत् पूरितं पश्चाच्चतुष्षष्ट्या तु मात्रया ।
मकारमूर्तिमत्रापि संस्मरन् प्रणवं जपेत् ॥ ५ ॥
यावद्वा शक्यते तावद्धारणं जपसंयुतम् ।
पूरितं रेचयेत् पश्चात् प्राणं बाह्यानिलान्वितम् ॥ ६
शनैः पिङ्गलया गार्गि! द्वात्रिंशन्मात्रया पुनः ।
प्राणायामो भवेदेष पुनश्चैव समभ्यसेत् ॥ ७ ॥
ततः पिङ्गलयापूर्य मात्रैः षोडशभिस्तथा ।
उकारमूर्त्तिमत्रापि संस्मरन् सुसमाहितः ॥ ८ ॥
पूरितं धारयेत् प्राणं प्रणवं विंशतिद्वयम् ।
जपेदत्र स्मरन् मूर्त्तिं मकाराख्यां महेश्वरीम् ॥ ९ ॥
यावद्वा शक्यते पश्चाद् रेचयेदिडयानिलम् ।
एवमेव पुनः कुर्यादिडयापूर्य पूर्ववत् ॥ १० ॥
नाड्या प्राणं समारोप्य पूरयित्वोदरस्थितम् ।
प्रणवेन सुसंयुक्तां व्याहृतीभिश्च संयुताम् ॥ ११ ॥
गायत्रीं वा जपेद् विप्रः प्राणसंयमने त्रयः ।
पुनश्चैवं त्रिभिः कुर्यात् पुनश्चैव त्रिसन्धिषु ॥ १२ ॥



यद्वा समभ्यसेन्नित्यं वैदिकं लौकिकं तथा ।
प्राणसंयमने विद्वान् जपेत् तद्विंशतिद्वयम् ॥ १३ ॥
ब्राह्मणः श्रुतसम्पन्नः स्वधर्मनिरतः सदा ।
स वैदिकं जपेन्मन्त्रं लौकिकं न कदाचन ॥ १४ ॥
केचिद् भूतहितार्थाय जपमिच्छन्ति लौकिकम् ।
द्विजवत् क्षत्रियस्योक्तः प्राणसंयमने जपः ॥ १५ ॥
वैश्यानां धर्मयुक्तानां स्त्रीशूद्राणां तपस्विनाम् ।
प्राणसंयमने गार्गि! मन्त्रं प्रणववर्जितम् ॥ १६ ॥
नमोन्तं शिवमन्त्रं वा वैष्णवं वेष्यते बुधैः ।
यद्वा समभ्यसेच्छूद्रस्त्वार्षकं विधिपूर्वकम् ॥ १७ ॥
प्राणसंयमने स्त्री च जपेत् तद्विंशतिद्वयम् ।
न वैदिकं जपेच्छूद्रः स्त्रियश्च न कदाचन ॥ १८ ॥
स्वाश्रमस्थस्य वैश्यस्य केचिदिच्छन्ति वैदिकम् ।
सन्ध्ययोरुभयोर्नित्यं गायत्र्या प्रणवेन वा ॥ १९ ॥
प्राणसंयमनं कुर्याद् ब्राह्मणो वेदपारगः ।
नित्यमेवं प्रकुर्वीत प्राणायामांस्तु षोडश ॥ २० ॥
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ।
ऋतुत्रयात् पुनन्त्येनं जन्मान्तरकृतादघात् ॥ २१ ॥
वत्सराद् ब्रह्मविद्वा स्यात् तस्मान्नित्यं समभ्यसेत् ।
योगाभ्यासरतास्त्वेवं स्वधर्मनिरताश्च ये ॥ २२ ॥
प्राणसंयमनेनैव सर्वे मुक्ता भवन्ति हि ।
बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ २३ ॥

सम्पूर्णकुम्भवद् वायोर्धारणं कुम्भको भवेत् ।
बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः ॥ २४ ॥
प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ।
कम्पको मध्यमः प्रोक्त उत्थानं चोत्तमोत्तमः ॥ २५ ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवम् ।
सम्भवत्युत्तमे गार्गि! प्राणायामे सुखी भवेत् ॥ २६ ॥
प्राणे लयति तेनैव देहस्यान्तरततोऽधिकः ।
देहश्चोत्तिष्ठते तेन कृतासनपरिग्रहः ॥ २७ ॥
निःश्वासोच्छ्वासकौ तस्य न विद्येते कथञ्चन ।
देहे यद्यपि तौ ...........विककृतावुभौ (?)॥ २८ ॥
तथापि नश्यतस्तेन प्राणायामोत्तमेन हि ।
तयोर्नाशे समर्थः स्यात् कर्त्तुं केवलकुम्भकम् ॥ २९ ॥
रेचकं पूरकं मुक्त्वा यत् स्थित्वा वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ॥ ३० ॥
रेच्य चापूरयत् कुर्यात् स वै सहित(कुम्भकः) ।
सहितं केवलं वाथ कुम्भकं नित्यमभ्यसेत् ॥ ३१ ॥
यावत् केवलसिद्धिः स्यात् तावत् सहितमभ्यसेत् ।
केवलं कुम्भके सिद्धे रेचपूरणवर्जिते ॥ ३२ ॥
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते ।
मनोजवत्वं लभते पलितादि च नश्यति ॥ ३३ ॥
मुक्तेरयं महामार्गो मकराख्योत्तरात्मनः ।
ज्ञानं चोत्पादयत्येव कुम्भकप्राणसंयमः ॥ ३४ ॥



प्राणसंयमनं नाम देहे प्राणादिधारणम् ।
एष प्राणजयोपायः सर्वमृत्यूपघातकः ॥ ३५ ॥
किञ्चित् प्राणजयोपायं तव वक्ष्यामि तत्त्वतः ।
बाह्यात् प्राणं समाकृष्य पूरयित्वोदरस्थितम् ॥ ३६ ॥
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ।
धारयेन्मनसा प्राणं सन्ध्याकालेषु सर्वदा ॥ ३७ ॥
सर्वरोगविनिर्मुक्तो जीवेद् योगी गतक्लमः ।
नासाग्रे धारणं गार्गि! वायोर्विजयकारणम् ॥ ३८ ॥
सर्वरोगविनाशः स्यान्नाभिमध्ये च धारणात् ।
शरीरं लघुतां याति पादाङ्गुष्ठे च धारणात् ॥ ३९ ॥
रसनावायुमाकृष्य यः पिबेत् सततं नरः ।
श्रमदाहौ न तस्य स्तो नश्यन्ति व्याधयस्तथा ॥ ४० ॥
सन्ध्ययोर्ब्राह्मकाले वा वायुमाकृष्य यः पिबेत् ।
त्रिमासात् तस्य कल्याणि! जायते वा सरस्वती ॥ ४१ ॥
षण्मासाभ्यासयोगेन महारोगात् प्रमुच्यते ।
आत्मन्यात्मानमारोप्य कुण्डल्यां यस्तु धारयेत् ॥ ४२ ॥
क्षयरोगादयस्तस्य नश्यन्तीत्यपरे विदुः ।
जिह्वया वायुमानीय जिह्वामूले निरोधयेत् ॥ ४३ ॥
यः पिबेदमृतं विद्वान् सकलं भद्रमश्नुते ।
आत्मन्यात्मानमिडया समानीय भ्रुवोऽन्तरात् ॥ ४४ ॥
पिबेद् यस्त्रिदशाहारं व्याधिभिः सोऽभिमुच्यते ।
नाडिभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः ॥ ४५ ॥

घटिकैकां वहेद् यस्तु व्याधिभिः सोऽभिमुच्यते ।
मासमेकं त्रिसन्ध्यायां जिह्वयारोप्य मारुतम् ॥ ४६ ॥
पिबेद् यस्त्रिदशाहारं धारयेत् तुन्दमध्यमे ।
गुल्माषी वा ष्लिहा चान्या त्रिदोषजनितास्तथा ॥ ४७ ॥
तुन्दमध्यगता रोगाः सर्वे नश्यन्ति तस्य वै ।
ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च ॥ ४८ ॥
बहुनोक्तेन किं गार्गि! पलिता(नि? दि) च नश्यति ।
एवञ्च विजयोपायं प्राणस्य तु वरानने! ॥ ४९ ॥
शक्यमासनमास्थाय समाहितमनास्तथा ।
करणानि वशीकृत्य विषयेभ्यो बलात् सुधीः ॥ ५० ॥
अपानमूर्ध्वमाकृष्य प्रणवेन समाहितः ।
हस्ताभ्यां बन्धयेत् सम्यक् कर्णादिकरणानि च ॥ ५१ ॥
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां तु चक्षुषी ।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ॥ ५२ ॥
आनन्दानुभवं यावत् तावन्मूर्धनि धारयेत् ।
प्राणः प्रयात्यनेनैव ततस्त्वायुर्विघातकृत् ॥ ५३ ॥
ब्रह्मरन्ध्रे सुषुम्नायां मृणालान्तरसूत्रवत् ।
नालोत्पत्तिस्त्वनेनैव शुद्धस्फटिकसन्निभा ॥ ५४ ॥
आमूर्ध्नो वर्त्तते नादो वीणादण्डवदुत्थितः ।
शङ्खध्वनिनिभस्त्वादौ मध्ये मेघध्वनिर्यथा ॥ ५५ ॥
व्योमरन्ध्रगते नादे गिरिप्रस्रवणं यथा ।
व्योमरन्ध्रगते वायौ चित्ते चात्मानि संस्थिते ॥ ५६ ॥



सदानन्दी भवेद्देही वायुस्तेन जितो भवेत् ।
योगिनस्त्वपरेऽन्यत्र वदन्ति समचेतसः ॥ ५७ ॥
प्राणायामपराः पूता रेचपूरणवर्जिताः ।
दक्षिणेतरगुल्फेन सीवनीं पीडयेत् सिराम् ॥ ५८ ॥
अधस्ताद्दण्डवत्सूक्ष्मां सव्योपरि च दक्षिणाम् ।
जङ्घोर्वोरन्तरं गार्गि! निश्छिद्रं बन्धयेद् दृढम् ॥ ५९ ॥
समग्रीवशिरस्कश्च समपृष्ठः समोदरः ।
नेत्राभ्यां दक्षिणं गुल्फं लोकयन्नुपरिस्थितम् ॥ ६० ॥
भारत्या मनसा सार्धं व्याहरन् प्रणवाक्षरम् ।
आसने नान्यधीरास्ते रहस्ये विजितेन्द्रियः ॥ ६१ ॥
वैश्याः शूद्राः स्त्रियश्चान्ये योगाभ्यासरता नराः ।
शैवं वा वैष्णवं वाथ व्याहरन्नन्यमेव वा ॥ ६२ ॥
आसने नान्यधीरास्ते दीपं हस्तेऽवलोकयन् ।
आयुर्विघातकृत्प्राणस्त्वनेनाभिकुलं गतः ॥ ६३ ॥
धूमध्वजजयं यावन्नान्यधीरेवमभ्यसेत् ।
धारणं कुर्वतस्तस्य शक्तिस्थाने प्रभञ्जनम् ॥ ६४ ॥
देहश्च लघुतां याति जठराग्निश्च वर्धते ।
दृष्टचिह्नस्ततः स्थानान्मनसारोप्य मारुतम् ॥ ६५ ॥
मन्त्रमुच्चारयेद् गार्गि! नाभिमध्ये निरोधयेत् ।
यावन्मनो लयत्यस्मिन्नाभौ सवितृमण्डले ॥ ६६ ॥
तावत् समभ्यसेद् विद्वानिन्धनेदिन्धनाशनम् ।
एतेन नाभिमध्येन धारणेनैव मारुतः ॥ ६७ ॥

कुण्डलीत्वास्ति वह्निश्च दहत्यत्र न संशयः ।
सन्तप्तो वह्निना तत्र वायुना च प्रवातितः ॥ ६८ ॥
प्रसार्य फणहृद्भोगं प्रबोधं याति तत्तदा ।
प्रबुद्धे संस्मरत्यस्मिन्नादिमूले + + त्रिाणि ॥ ६९ ॥
ब्रह्मरन्ध्रे सुषुम्नायां प्रयाति प्राणसंज्ञकम् ।
सम्प्राप्ते मारुते तस्मिन् सुषुम्नायां वरानने ! ॥ ७० ॥
मन्त्रमुच्चार्य मनसा हृन्मध्ये धारयेत् पुनः ।
हृदयात् कण्ठकूपे च भ्रुवोर्मध्ये च धारयेत् ॥ ७१ ॥
तस्मादारोप्य मनसा साग्निं प्राणमनन्यधीः ।
धारयेद् यो हि विप्रेन्द्रो व्याहरन् प्रणवाक्षरम् ॥ ७२ ॥
वायुना पूरिते व्योम्नि साङ्गोपाङ्गकलेबरे ।
तदात्मा भजते तत्र यथा व्योम्नि निवर्तनः ॥ ७३ ॥
शरीरं विसिसृक्षुश्चेदेवं सम्यक् समाचरन् ।
एकाक्षरं परं ब्रह्म ध्यायन् प्रणवमीश्वरम् ॥ ७४ ॥
संभिद्य मनसा मूर्ध्नि ब्रह्मरन्ध्रं स वायुना ।
प्राणमुन्मूलयेत् पश्चान्महाप्राणे खमध्यमे ॥ ७५ ॥
देहातीते जगत्प्राणे शून्ये नित्ये ध्रुवे पदे ।
आकाशे परमानन्दे स्वात्मानं योजयेद् धिया ॥ ७६ ॥
ब्रह्मैवासौ भवेद् गार्गि ! न पुनर्जन्मभाग् भवेत् ।
तस्मात् त्वं च वरारोहे ! नित्यकर्म समाचर ॥ ७७ ॥
सन्ध्याकालेषु वा नित्यं प्राणसंयमनं कुरु ।
प्राणायामपराः सर्वे प्राणायामपरायणाः ॥ ७८ ॥



प्राणायामविशुद्धा ये ते यान्ति परमां गतिम् ।
प्राणायामादृते नान्यत् तारकं नरकादपि ॥ ७९ ॥
संसारार्णवमग्नानां तारकः प्रा संयमः ।
तस्मात् त्वं विधिमार्गेण नित्यकर्म समाचर ॥ ८० ॥
विधिनोक्तेन मार्गेण प्राणसंयमनं कुरु ॥ ८०½ ॥

इति योगयाज्ञवल्क्ये षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः ।

**याज्ञवल्क्यः—**

उक्तान्येतानि चत्वारि योगाङ्गानि द्विजोत्तमे ! ।
प्रत्याहाराणि चत्वारि शृणुष्वाभ्यन्तराणि च ॥ १ ॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ २ ॥
यद्यत् पश्यति तत् सर्वं पश्येदात्मवदात्मनि ।
प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ॥ ३ ॥
कर्माणि यानि नित्यानि विहितानि शरीरिणाम् ।
तेषामात्मन्यनुष्ठानं मनसा यत् + + + + ॥ ४ ॥
तानि सर्वाणि वक्ष्यामि यथावच्छृणु + + + ।
पादाङ्गुष्ठौ च गुल्फौ तु + + + + तथैव च ॥ ५ ॥
तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले ।
भ्रुवोर्मध्यं ललाटश्च मूर्धा च मुनिसत्तमे ! ॥ ६ ॥

मर्मस्थानानि वै तेषां मानं चाथ पृथक् शृणु ।
पादमानं तु गुल्फस्य सार्धाङ्गुलचतुष्टयम् ॥ ७ ॥
गुल्फाज्जङ्घस्य मध्यं तु विज्ञेयं तु दशाङ्गुलम् ।
जङ्घमध्याच्चितेर्मूलं यत्तदेकशताङ्गुलम् ॥ ८ ॥
चितिमूलाद् वरारोहे! जानुः स्यादङ्गुलद्वयम् ।
जानोर्नवाङ्गुलं प्राहुरूरुमध्यं मही(श्व?सु)रे! ॥ ९ ॥
ऊरुमध्यात् तथा गार्गि! पायुमूलं नवाङ्गुलम् ।
देहमध्यं तथा पायोर्मूलादर्धाङ्गुलद्वयम् ॥ १० ॥
देहमध्यात् तथा मेढ्रं तद्वत् सार्धाङ्गुलद्वयम् ।
मेढ्रान्नाभिश्च विज्ञेया गार्गि! (सा)र्ध[illegible]ङ्गुलम् ॥ ११ ॥
चतुर्दशाङ्गुलं नाभेर्हृन्मध्यं च वरानने ! ।
षडङ्गुलं तु हृन्मध्यात् कण्ठकूपं तथैव च ॥ १२ ॥
कण्ठकूपाच्च जिह्वाया मूलं स्याच्चतुरङ्गुलम् ।
नासामूलं तु जिह्वाया मूलाच्च चतुरङ्गुलम् ॥ १३ ॥
चतुरङ्गुलमाने तु मूलार्धाङ्गुलमिष्यते ।
तस्मादर्धाङ्गुलं गार्गि! भ्रुवोरन्तरमात्मनः ॥ १४ ॥
ललाटाद्(र्धो?व्यो)मसंज्ञं तदङ्गुलद्वयमेव हि ।
स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत् ॥ १५ ॥
स्थानात् स्थानात् समाकृष्य प्रत्याहारं प्रकुर्वतः ।
सर्वरोगा विनश्यन्ति योगाः सिध्यन्ति तस्य वै ॥ १६ ॥
वदन्ति योगिनः केचिद् योगेषु कुशला नराः ।
प्रत्याहारं वरारोहे! शृणु त्वं तद्वदाम्यहम् ॥ १७ ॥



सम्पूर्णकुम्भकाद् वायुमङ्गुष्ठान्मूर्ध्नि मध्यतः ।
धारयत्यनिलं बुद्ध्य प्राणायामप्रचोदितः ॥ १८ ॥
व्योमरन्ध्रात् समाकृष्य ललाटे धारयेत् पुनः ।
ललाटाद् वायुमाकृष्य कण्ठकूपे निरोधयेत् ॥ १९ ॥
कण्ठकूपात्तु हृन्मध्ये हृन्मध्यान्नाभिमध्यमे ।
नाभिमध्यात् पुनर्मेढ्रे मेढ्राद्वह्न्यालये ततः ॥ २० ॥
देहमध्याद् गुदे गार्गि! गुदात्तत्रोरुमूलतः ।
ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥ २१ ॥
चितिमूलं ततस्तस्माज्जङ्घयोर्मध्यमे तथा ।
जङ्घातस्तं समाकृष्य वायुं गुल्फे निरोधयेत् ॥ २२ ॥
गुल्फादङ्गुलयोर्गार्गि! पादयोस्तं निरोधयेत् ।
स्थानात्स्थानात् समाकृष्य यस्मेबन्ध (?) ॥ २३ ॥
यावत् पापविशुद्धात्मा जीवेदाचन्द्रतारकम् ।
एतत्तु योगसिद्ध्यर्थं प्रत्याहारं प्रकीर्तितम् ॥ २४ ॥
प्रत्याहारेषु सर्वेषु प्रशस्तमिति योगिभिः ।
नाडीभ्यां वायुमापूर्य कुण्डल्याः पार्श्वयोर्नरः ॥ २५ ॥
धारयेद् युगपत् सोऽपि भवरोगाद्विमुच्यते ।
पूर्ववद् यानि रोप्य(?) हृदये व्योम्नि धारयेत् ॥ २६ ॥
सोऽपि याति वरारोहे! परमात्मपदं नरः ।
व्याधयः किंपुनस्तस्य बाह्याभ्यान्तरवर्त्तिनः ॥ २७ ॥
नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् ।
भ्रुवोर्मध्याद् दृशोः पार्श्वात् समारोप्य समाहितः ॥ २८ ॥

धारयेत् क्षणमात्रं वा सोऽपि याति परां गतिम् ।
आभ्रूमध्यात् सुषुम्नायां मनो + + + + + + + + ॥ २९ ॥
किंपुनर्बहुनोक्तेन नित्यं कर्म समाचर(म् ?)।
यावन्मनो लयत्यस्मिन् ततः संयमनं कुरु ॥ ३० ॥

इति योगयाज्ञवल्क्ये सप्तमोऽध्यायः ॥

---

## अथ अष्टमोऽध्यायः ।

अथेदानीं प्रवक्ष्यामि धारणा(वव ? मपि) तत्त्वतः ।
यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ॥ १ ॥
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः ।
अस्मिन् ब्रह्मपुरे गार्गि ! यदिदं हृदयाम्बुजम् ॥ २ ॥
तस्मिन्नेवान्तराकाशे यद् बाह्याकाशकारणम् ।
एषा च धारणेत्युक्ता योगशास्त्रसुशिक्षितैः ॥ ३ ॥
धारणाः पञ्चधा प्रोक्तास्ताश्च सर्वाः पृथक्छृणु ।
भूमिरापस्तथा तेजो वायुराकाशमेव च ॥ ४ ॥
एतेषु पञ्चदेवानां धारणं पञ्चधोच्यते ।
पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ॥ ५ ॥
आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्त्तितम् ।
आपायोर्हृदयान्तं यद् वह्निस्थानं तदुच्यते ॥ ६ ॥
हृदयात् तु भ्रुवोर्मध्यं यावद् वायुकुलं स्मृतम् ।
आभ्रूमध्यात् तदूर्ध्वान्नमाकाशमिति चोच्यते ॥ ७ ॥



अत्र केचिद् वदन्त्यन्ये योगपण्डितमानिनः ।
आजानोर्नाभिपर्यन्तमपांस्थानमिति द्विजाः ॥ ८ ॥
नाभिमध्याद् गळान्तं यद् वह्निस्थानं तदुच्यते ।
आगळाद् भ्रूलला* .... .... .... .... ॥ ९ ॥
एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे ।
ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे । १० ॥
तस्मिन् सदाशिवे प्राणान् सृष्टिस्थित्यन्तकारिणे ।
युक्तचित्तस्तदात्मानं योजयेत् परमेश्वरे ॥ ११ ॥
अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मविद्वराः ।
प्रणवेनैव कार्याणि स्वे स्वे संहृत्य कारणे ॥ १२ ॥
प्रणवस्य तु नादान्ते परमानन्दविग्रहम् ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ १३ ॥
चेतसा संप्रपश्यन्ति सन्तः साधारभेषजः ।
त्वं तस्मात् प्रणवेनैव प्राणायामैस्त्रिभिस्त्रिभिः ॥ १४ ॥
ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ।
विशुद्धचेतसा पश्य नादान्ते परमेश्वरम् ॥ १५ ॥
अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मविद्वराः ।
भिषग्वरा वरारोहे ! योगेषु परिनिष्ठिताः ॥ १६ ॥
शरीरं तावदेतत्तु पञ्चभूतात्मकं खलु ।
तदेतत्तु वरारोहे ! वातपित्तकफात्मनाम् ॥ १७ ॥
वातात्मकानां सर्वेषां योगेष्वभिरतात्मनाम् ।
प्राणसंयमनेनैव शोषं याति कलेबरम् ॥ १८ ॥

---

* अत्र ग्रन्थांशो मातृकायां लुप्तः ।

पित्तात्मकानां त्वचिरान्न शुष्यति कलेवरम् ।
कफात्मकानां कायस्तु सम्पूर्णमचिराद् भवेत् ॥ १९ ॥
धारणं कुर्वतस्त्वग्नौ सर्वे नश्यन्ति वातजाः ।
पार्थिवे च जलांशे च धारणं कुर्वतस्तदा ॥ २० ॥
नश्यन्ति श्लेष्मजा रोगा विनश्यन्ति न संशयः ।
अस्मिन्नर्थे तथा ब्रूतामश्विनौ च भिषग्वरौ ॥ २१ ॥
प्राणसंयमनेनैव त्रिदोषशमनं नृणाम् ।
तस्मात् त्वं च वरारोहे! नित्यं कर्म समाचर ॥ २२ ॥
यमादिभिश्च संयुक्ता विधिवद् धारणं कुरु ॥२२½॥

इति योगयाज्ञवल्क्ये अष्टमोऽध्यायः ॥

---

## अथ नवमोऽध्यायः ।

भगवानुवाच —

ध्यानं सम्प्रति वक्ष्यामि शृणु गार्गि! वरानने! ।
ज्ञानमेव हि जन्तूनां कारणं बन्धमोक्षयोः ॥ १ ॥
ध्यानमात्मस्वरूपस्य वेदनं मनसा खलु ।
सगुणं निर्गुणं तच्च सगुणं बहुशः स्मृतम् ॥ २ ॥
पञ्चोत्तमानि तेष्वाहुर्वैदिकानि द्विजोत्तमाः ।
एषु मुख्यतमास्तिस्रो एकमेव हि निर्गुणम् ॥ ३ ॥
मर्मस्थानानि नाडीनां सन्धानं च पृथक् पृथक् ।
वायुस्थानानि मर्माणि ज्ञात्वा कुर्वात्मवेदनम् ॥ ४ ॥
एकं ज्योतिर्मयं शुद्धं तत्सर्वं व्योमवद् दृढम् ।
अत्यच्छममलं नित्यमादिमध्यान्तवर्जितम् ॥ ५ ॥

स्थूलं सूक्ष्ममनाकाशं + + + श्यमचक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनौपमम् ॥ ६ ॥
आनन्दमजरं सत्यं सदसत्सर्वकारणम् ।
सर्वाधारं जगद्रूपममूर्तमजमव्ययम् ॥ ७ ॥
अदृश्यं दृश्यमन्तःस्थं बहिष्ठं सर्वतोमुखम् ।
सर्वगं सर्वतःपादं सर्व(क्त?)सर्वतश्शिरः ॥ ८ ॥
ब्रह्मब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत् ।
तदेतन्निर्गुणं ध्यानमिति ब्रह्मविदो विदुः ॥ ९ ॥
अथवा परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशाद्विज्ञाय पुरुषं कृष्णपिङ्गलम् ॥ १० ॥
ब्रह्म ब्रह्मपुरे वाऽस्मिन् देहे रुन्धन् खमध्यमे ।
अत्ययात् सम्प्रपश्यन्ति सन्तस्त्वं च तथा कुरु ॥ ११ ॥
हृत्पद्मेऽष्टदळे पत्रे कन्दमध्यात् समुत्थिते ।
द्वादशाङ्गुलनाळेऽस्मिंश्चतुरङ्गुलवन्मुखे ॥ १२ ॥
प्राणायामैर्विकसिते केसरान्वितकर्णिके ।
वासुदेवं जगन्नाथं नारायणमजं हरिम् ॥ १३ ॥
चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम् ।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ॥ १४ ॥
श्रीवत्सवक्षसं विष्णुं पूर्णचन्द्रनिभाननम् ।
पद्मोदरदळाभोष्ठं सुप्रसन्नं शुचिस्मितम् ॥ १५ ॥
शुद्धस्फटिकसङ्काशं पीतवाससमच्युतम् ।
पद्मच्छविपदद्वन्द्वं परमात्मानमीश्वरम् ॥ १६ ॥

प्रभाभिर्भासयद् रूपं परितः पुरुषोत्तमम् ।
मनसालोक्य देवेशं सर्वभूतहृदि स्थितम् ॥ १७ ॥
सोऽहमात्मेति विज्ञानं सगुणं ध्यानमुच्यते ।
हृत्सरोरुहमध्येऽस्मिन् प्रकृत्यात्मककर्णिके ॥ १८ ॥
अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ।
ज्ञाननाळे महाकन्दे प्राणा(मेन ? याम)प्रबोधिते ॥ १९ ।
विश्वार्चिषं महावह्निं ज्वलन्तं सर्वतोमुखम् ।
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ॥ २० ॥
तापयन्तं स्वकं देहमापादतलमस्तकम् ।
निवातदीपवत् तस्मिन् दीपितं हव्यवाहनम् ॥ २१ ॥
दृष्ट्वा तस्य शिखामध्ये परमात्मानमक्षरम् ।
नीलतोयदमध्यस्थविद्युल्लेखेव भास्वरम् ॥ २२ ॥
नीवारशूकवद्रूपं पीताभं सर्वकारणम् ।
ज्ञात्वा वैश्वानरं देवं सोऽहमेवेति या मतिः ॥ २३ ॥
सगुणेषूत्तमं ह्यत्र ध्यानं योगविदो विदुः ।
वैश्वानरत्वं सम्प्राप्य मूर्च्छि तेनैव गच्छति ॥ २४ ॥
अथवा मण्डले पश्यन्नादित्यस्य महाद्युतेः ।
आत्मानं सर्वजगतः पुरुषं हेमरूपिणम् ॥ २५ ॥
हिरण्यश्मश्रुकेशं हिरण्मयनखं हरिम् ।
कप्यास्यासनमन्वक्त्रं(?) सृष्टिस्थित्यन्तकारिणम् ॥ २६ ।
पद्मासनस्थितं सौम्यं प्रबुद्धाब्जनिभाननम् ।
पद्मोदरदलाभाक्षं सर्वलोकाभयप्रदम् ॥ २७ ॥

जनकं सर्वदा सर्वे + + + + + धार्मिकाः ।
भासयन्तं जगत्सर्वं दृष्ट्वा लोकैकसाक्षिणम् ॥ २८ ॥

सोऽहमस्मीति या बुद्धिः सा च (ज्ञा ? ध्याने)षु शस्यते ।
एष एव तु मोक्षस्य महामार्गस्तपोधने ! ॥ २९ ॥

ध्यानेनानेन सौरेण मुक्तिं यान्ति हि सूरयः ।
भ्रुवोर्मध्येऽन्तरात्मानं भारूपं सर्वकारणम् ॥ ३० ॥

स्थाणुवन्मूर्ध्नि पर्यन्तं मध्यदेहात् समुत्थितम् ।
जगत्कारणमव्यक्तं ज्वलन्तममितौजसम् ३१ ॥

मनसालोक्य सोऽहं स्यामादित्ये ध्यानमुत्तमम् ।
अथवा बद्धपर्यङ्कः शिथिलीकृतविग्रहः ॥ ३२ ॥

शिव एव स्वयं भूत्वा नासाग्रे रोपितेक्षणः ।
निर्विकारः परं शान्तं परमात्मानमीश्वरम् ॥ ३३ ॥

भारूपममृतं ध्यायेद् भ्रुवोर्मध्ये वरानने ! ।
सोऽहमेवेति या बुद्धिः सा च ध्यानेन शस्यते ॥ ३४ ॥

अथवाष्टदलोपेते कर्णिकाकेसरान्विते ।
उन्निद्रहृदयाम्भोजे सोममण्डलमध्यमे ॥ ३५ ॥

स्वात्मानमच्छकाकारं भोक्तृरूपिणमव्ययम् ।
सुधा(रिणं ? रसं) विमुञ्चद्भिः शशिरश्मिभिरावृतम् ॥ ३६ ॥

षोडशच्छदसंयुक्तं शिरःपद्मादधोमुखात् ।
निर्गतामृतधाराभिः सहस्राभिः समन्ततः ॥ ३७ ॥

प्लावितं पुरुषं तत्र चिन्तयित्वा समाहितः ।
तेनामृतरसेनैव साङ्गोपाङ्गकलेबरम् ॥ ३८ ॥

अहमेव परं ब्रह्म परमात्माहमव्ययः ।
एवं यद्वेदनं तच्च सगुणध्यानमुच्यते ॥ ३९ ॥

एवं ध्यानामृतं कुर्वन् षण्मासान्मृत्युजिद् भवेत् ।
वत्सरान्मुक्त एव स्याज्जीवन्नेव न संशयः ॥ ४० ॥

जीवन्मुक्तस्य न क्वापि दुःखावाप्तिः कथञ्चन ।
किं पुनर्नित्यमुक्तस्य मुक्तिरेव हि दुर्लभा ॥ ४१ ॥

तस्मात् त्वं च वरारोहे! फलं त्यक्त्वैव नित्यशः ।
विधिवत् कर्म कुर्वाणा ध्यानमेव सदा कुरु ॥ ४२ ॥

अन्यान्यपि बहून्याहुर्ध्यानानि मुनिसत्तमाः ।
मुख्यान्युक्तानि चैतेभ्यो जघन्यानीतराणि च ॥ ४३ ॥

सगुणं गुणहीनं वा विज्ञायात्मानमात्मनि ।
सन्तः समाधिं कुर्वन्ति त्वमप्येवं सदा कुरु ॥ ४४ ॥

इति योगयाज्ञवल्क्ये नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः ।

भगवानुवाच —

समाधिमधुना वक्ष्ये भवपापविनाशनम् ।
भवपाशनिबद्धस्य यथावच्छ्रोतुमर्हसि ॥ १ ॥

समाधिः समतावस्था जीवात्मपरमात्मनोः ।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ॥ २ ॥

ध्यायन् यथा यथात्मान तत्समाधिस्तथा तथा ।
ध्यात्वैवात्मनि संस्थाप्य नान्यथात्मा यथा भवेत् ॥ ३ ॥

एवमेव हि सर्वत्र यत्प्रपन्नस्तु यो नरः ।
तदात्मा सोऽपि तत्रैव समाधिं समवाप्नुयात् ॥ ४ ॥

सरित्पतौ निविष्टाम्बु यथा भिन्नं फलं त्वियात् ।
तदात्मभिन्न एवात्र समाधिं समवाप्नुयात् ॥ ५ ॥

एतदुक्तं भवत्यत्र गार्गि! ब्रह्मविदां वरे! ।
कर्मैव विधिवत्कुर्वन् कामसङ्कल्पवर्जितम् ॥ ६ ॥

वेदान्तेष्वर्थशास्त्रेषु सुशिक्षितमनाः सदा ।
गुरुणा नोपदिष्टार्थं युक्त्युपेतं वरानने! ॥ ७ ॥

विद्वद्भिर्धर्मशास्त्रज्ञैर्विचार्य च पुनः पुनः ।
तस्मिन् सुशिक्षितार्थेषु सुशिक्षितमनाः सदा ॥ ८ ॥

योगमेवाभ्यसेन्नित्यं जीवात्मपरमात्मनोः ।
ततस्त्वाभ्यन्तरैश्चिह्नैर्बाह्यैर्वा कालसूचकैः ॥ ९ ॥

विनिश्चित्यात्मनः कालमन्यैर्वा परमार्थवित् ।
निर्भयः सुप्रसन्नात्मा मृत्योस्तु विजितेन्द्रियः ॥ १० ॥

स्वकर्मनिरतः शान्तः सर्वभूतहिते रतः ।
प्रदाय विद्यां पुत्रस्य मन्त्रं च विधिपूर्वकम् ॥ ११ ॥

संस्कारं ह्यात्मनः सर्वमुपदिश्य तदानघ ।
पुण्यक्षेत्रे शुचौ देशे विद्वद्भिः सुसमावृते ॥ १२ ॥

भूमौ कुशान् समास्तीर्य कृष्णाजिनमथापि वा ।
तस्मिंस्तु बद्धपर्यङ्को मन्त्रैर्बद्धकलेबरः ॥ १३ ॥

आसने नान्यधीरास्ते प्राङ्मुखो वाप्युदङ्मुखः ।
पुनर्द्वाराणि संयम्य गार्ग्यस्मिन् ब्रह्मणः पुरे ॥ १४ ॥

उन्निद्रहृदयाम्भोजे (प्राणायामप्र)बोधिते ।
व्योम्नि तस्मिन् प्रभारूपे त्वद्रूपे सर्वकारणे ॥ १५ ॥
नमोवृत्तिं सुसंयम्य परमात्मनि पण्डिते! ।
मूर्ध्न्याधायात्मनः प्राणं भ्रुवोर्मध्येऽथवानघे! ॥ १६ ॥
ओमित्येकाक्षरं बुद्ध्या व्याहरन् सुसमाहितः ।
शरीरं सन्त्यजेद्विप्रे! आत्मैवाभून्नरोत्तमः ॥ १७ ॥
तस्मिन् समभ्यसेद् विद्वान् योगेनैवात्मदर्शनम् ।
तदेव संस्मरन् विद्वांस्त्यजेदन्ते कलेबरम् ॥ १८ ॥
यं यं सम्यक् स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेव भजेद्भावमिति योगविदो विदुः ॥ १९ ॥
त्वं चैवं योगमास्थाय ध्यायन्त्यात्मानमात्मना ।
स्वधर्मनिरता शान्ता त्यज ते देहमात्मनः ॥ २० ॥
केनैवज्ञा सहैतेन (?) नित्यकर्माणि कुर्वतः ।
निवृत्तफलसङ्गस्य मुक्तिर्गार्गि! करे स्थिता ॥ २१ ॥
यदुक्तं ब्रह्मणा पूर्वं कर्मयोगसमुच्चयम् ।
तदेतत्कथितं सर्वं साङ्गोपाङ्गं विधानतः ॥ २२ ॥
त्वं चैवं योगमभ्यस्य यमाद्यष्टाङ्गसंयुतम् ।
निर्वाणं पदमासाद्य सप्रपञ्चं परित्यज ॥ २३ ॥

इति योगयाज्ञवल्क्ये दशमोऽध्यायः ॥

---

## अथ एकादशोऽध्यायः ।

इत्येवमुक्त्वा विधिना याज्ञवल्क्येन धीमता ।
ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदुवाच ह ॥ १ ॥

गार्ग्युवाच —

योगयुक्तनरस्यास्य सन्ध्ययोर्वाथवा सदा ।
वैधं कर्म कथं कुर्यान्निष्कृतिः का त्वकुर्वतः ॥ २ ॥

इत्युक्ते ब्रह्मवादिन्या ब्रह्मविद् ब्राह्मणस्तदा ।
तां समालोक्य भगवानिदमाह नरोत्तमः ॥ ३ ॥

योगयुक्तमनुष्यस्य सन्ध्ययोर्वाथवा निशि ।
यत्कर्त्तव्यं वरारोहे ! योगेन खलु तत्कृतम् ॥ ४ ॥

आत्माग्निहोत्रवह्नौ तु प्राणयज्ञैर्विधीयते ।
विशुद्धचित्तहविषा विध्युक्तं कर्म कुर्वतः ॥ ५ ॥

निष्कृतिस्तस्य किं बाले ! कृतकृत्यस्तथा खलु ।
वियोगे सति सम्प्राप्ते जीवात्मपरमात्मनोः ॥ ६ ॥

(विध्यु)क्तमेवं कर्त्तव्यं ब्रह्मविद्भिश्च नित्यशः ।
वियोगकाले योगी च दुःखमित्येव यस्त्यजेत् ॥ ७ ॥

कर्माणि तस्य निलयो निलयं परिकीर्त्तितः ।
तद्देहिनां यतः शक्यास्त्यक्तुं कर्माण्यशेषतः ॥ ८ ॥

तस्मादामरणान्तं तत् कर्त्तव्यं योगिनां सदा ।
त्वं चैव मात्ययाद् गार्गि ! वैधं कर्म समाचरेः ॥ ९ ॥

योगेन परमात्मानं यजंस्त्यज कलेबरम् ।
इत्येवमुक्त्वा भगवान् याज्ञवल्क्यस्तपोनिधिः ॥ १० ॥

ऋषीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ।
सन्ध्यामुपास्य विधिवत् पश्चिमां सुसमाहिताः ॥ ११ ॥

गच्छन्तु साम्प्रतं सर्वे ऋषयः स्वाश्रमं प्रति ।
इत्येवमुक्ता मुनिना मुनयः संशितव्रताः ॥ १२ ॥
विश्वामित्रो वसिष्ठश्च गौतमश्चाङ्गिरास्तथा ।
अगस्त्यो नारदश्चैव वाल्मीकिर्बादरायणः ॥ १३ ॥
पैङ्गिर्दीर्घतमा व्यासः शौनकश्च तपोधनः ।
भार्गवश्चैव + + + भरद्वाजस्तपोधनः ॥ १४ ॥
तपस्विनस्तथाचान्ये वेदवेदाङ्गवेदिनः ।
याज्ञवल्क्यं समभ्यर्च्य गीर्भिः पुण्याभिरुत्तमाः ॥ १५ ॥
ते यान्ति मुनयः सर्वे स्वाश्रमेषु यथागतम् ।
गतेषु स्वाश्रमं तेषु तापसेषु तपोधना ॥ १६ ॥
प्रणम्य दण्डवद् भूमौ वाक्यमेतदभाषत ।

गार्ग्युवाच —

भगवन्! सर्वशास्त्रज्ञ! सर्वभूतहिते रत! ॥ १७ ॥
योगं मोक्षाय योगीन्द्र! भवद्भिर्भाषितं तु यत् ।
यमाद्यष्टाङ्गसंयुक्तयोगयुक्तेस्तु साधनम् ॥ १८ ॥
तदेतद्विस्मृतं सर्वं सर्वज्ञ! तव सन्निधौ ।
योगं ममोपदिश्यात्र साङ्गं संक्षेपरूपकम् ॥ १९ ॥
(श्रो? त्रा)तुमर्हति सर्वज्ञ! जन्मसंसारसागरात् ।
इत्युक्तो ब्रह्मवा + + + + + + + + + दा ॥ २० ॥
आलोक्य कृपणां दीनां स्मितपूर्वमभाषत ।
उत्तिष्ठोत्तिष्ठ किं शेते भूमौ गार्गि! वरानने! ॥ २१ ॥
वक्ष्यामि ते समासेन योगं सम्प्रति तच्छृणु ॥ २१½ ॥

इति योगयाज्ञवल्क्ये एकादशोऽध्यायः ।

अथ द्वादशोऽध्यायः ।

याज्ञवल्क्य उवाच —

सव्येन गुल्फेन गुदं निरस्य
सव्येतरेणैव निपीड्य सन्धिम् ।
सव्येतरं न्यस्य करेतरेऽस्मिन्
शिखां समालोकय पावकस्य ॥ १ ॥

आयुर्विघातकृत् प्राणो निरुद्धस्त्वासनेन तु ।
याति गार्गि ! तदापानात् कुलं वह्नेः शनैश्शनैः ॥ २ ॥

वायुना वातितो वह्निरपानेन शनैः शनैः ।
ततो ज्वलति सर्वेषां स्वकुले देहमध्यमे ॥ ३ ॥

प्रातःकाले प्रदोषे च निशीथे च समाहितः ।
मुहूर्त्तमभ्यसेदेवं यावत्पञ्चादिनद्वयम् ॥ ४ ॥

ततस्त्वात्मनि विप्रेन्द्रे ! प्रत्ययानि पृथक् पृथक् ।
सम्भवन्ति तदा तस्य जितो यस्य समीरणः ॥ ५ ॥

शरीरलघुता दीप्तिर्वह्नेर्जठरवर्त्तिनः ।
नादाभिव्यक्तिरित्येते चिह्नान्यादौ भवन्ति हि ॥ ६ ॥

अल्पमूत्रपुरीषः स्यात् षण्मासे वत्सरे तथा ।
आसने वाहने पश्चान्न भेतव्यं त्रिवत्सरात् ॥ ७ ॥

ततोऽनिलं वायुसखेन सार्धं
धिया समारोप्य निरोधयेत् तम् ।
ध्यायन् सदा चक्रिणमप्रबुद्धं
नाभौ सदा कुण्डलिनीनिविष्टम् ॥ ८ ॥

सिरां समावेष्ट्य + + + ध्या-
न्याश्च भोगेन सिरास्तथैव ।
स्वपुच्छमास्येन निगृह्य सम्यक्
पथश्च संयम्य मरुद्गणानाम् ॥ ९ ॥

प्रसुप्तनागेन्द्रवदुच्छ्वसन्ती
सदा प्रबुद्धा प्रभया ज्वलन्ती ।
नाभौ सदा तिष्ठति कुण्डली सा
तिर्यक्षु देहेषु तथेतरेषु ॥ १० ॥

वायुना विहतवह्निशिखाभिः
कन्दमध्यगतनाडिषु संस्थाम् ।
कुण्डलीं दहति यस्त्वहिरूपां
संस्मरन् नरवरस्तु स एव ॥ ११ ॥

सन्तप्तो वह्निना तत्र वायुना च प्रचोदितः ।
प्रसार्य फणभृद्भोगं प्रबोधं याति तत्तथा ॥ १२ ॥

बोधं गते चक्रिणि नाभिमध्ये
प्राणाः सुसम्भूय कलेबरेऽस्मिन् ।
चरन्ति सर्वे सहवह्निनैव
यथा पटे तन्तुगतिस्तथैव ॥ १३ ॥

जित्वैवं चक्रिणः स्थानं सदा ध्यानपरायणः ।
ततो नयेदपानं तु नाभेरूर्ध्वमिदं स्मरन् ॥ १४ ॥

वायुर्यथा वायुसखेन सार्धं
नाभिं त्वतिक्रम्य गतः शरीरे ।



रोगाश्च नश्यन्ति बलाभिवृद्धिः
कान्तिस्तदानीमभवत् प्रबुद्धे ॥ १५ ॥

ब्रह्मरन्ध्रमुखमत्र वायवः
पावकेन सह यान्ति समूह्य ।
केन चेदिह वदामि तवाहं
वीक्षणं हृदि सुदीपशिखायाः ॥ १६ ॥

निरोधितः स्याद्धृदयेन सार्धं
मध्ये तदा वायुसखेन वायुः ।
सहस्रपत्रस्य मुखं प्रविश्य
कुर्यात् पुनस्तूर्ध्वमुखं द्विजेन्द्रे ! ॥ १७ ॥

प्रबुद्धहृदयाम्भोजे + + + + + + ।
बलाकाश्रेणिवद् व्योम्नि विरराज समीरणः ॥ १८ ॥

आभ्रूमध्यात् सुषुम्नायां संस्थितो हुतभुक् तदा ।
सजलाम्बुदमालासु विद्युल्लेखेव राजते ॥ १९ ॥

प्रबुद्धहृत्पद्मनि संस्थितेऽग्नौ
प्राणे च तस्मिन् प्रविवेशिते तु ।
चिह्नानि बाह्यानि तथान्तरेऽपि
दीपानि दृश्यानि भवन्ति सद्यः ॥ २० ॥

वायुमुन्नय तत्र सवह्निं
व्याहरन् प्रणवमत्र सबिन्दुम् ।
बालचन्द्रसदृशे तु ललाटे
बालचन्द्रमवलोकय बुद्ध्या ॥ २१ ॥

सवाह्निं वायुमारोप्य भ्रुवोर्मध्ये धिया तदा ।
ध्यायेदनन्यधीः पश्चादन्तरात्मानमन्तरे ॥ २२ ॥

मध्यमेऽपि हृदयेऽपि ललाटे
स्थाणुवज्ज्वलितलिङ्गमदृश्यम् ।
अस्ति गार्गि ! परमात्ममिदं त्वं
पश्य पश्य मनसा रुचिरूपम् ॥ २३ ॥

ललाटमध्ये हृदयाम्बुजे च
यः पश्यति प्राणमयीं प्रभां तु ।
शक्तिं सदा दीपवदुज्ज्वलन्तीं
सम्पश्यति ब्रह्मविदेकदृष्ट्या ॥ २४ ॥

मनो लयं यदा याति भ्रूमध्ये योगिनां नृणाम् ।
जिह्वामूलेऽमृतस्रावं भ्रूमध्ये चात्मदर्शनम् ॥ २५ ॥
कम्पनं च तथा मूर्ध्नो मनसैवात्मदर्शनम् ।
देवोद्यानानि रम्याणि नक्षत्राणि च चन्द्रमाः॥ २६ ॥
ऋषयः सिद्धगन्धर्वाः प्रकाशन्ति च योगिनाम् ।

भ्रुवोऽन्तरे विष्णुपदे रुचौ तु
मनो लयं यावदियात् प्रबुद्धे ।
तावत् समभ्यस्य सुखस्य मध्ये
सुखं सदा संस्मर पूर्णरूपम् ॥ २७ ॥

समीरणे विष्णुपदे निविष्टे
जीवे च तस्मिन्नमृते च संस्थे ।
तस्मिंस्तदा याति मनो लयं चे-
न्मुक्तेः समीपं तदिति ब्रुवन्ति ॥ २८ ॥



समीरणे विष्णुपदे निविष्टे
विशुद्धबुद्धौ च तदात्मनिष्ठे ।
आनन्दमग्न + + + स्मि सत्यं
त्वं गार्गि ! पश्याऽद्य विशुद्धबुद्ध्या ॥ २९ ॥

एवं समभ्यस्य सुदीर्घकालं
यमादिभिर्युक्ततरं मिताशी ।
आत्मानमासाद्य गुहां प्रविष्टां
मुक्तिं व्रज ब्रह्मपुरे पुनस्त्वम् ॥ ३० ॥

भूतानि यस्मात् प्रभवन्ति गार्गि!
येनैव जीवन्ति चराचराणि ।
जातानि यस्मिन् विलयं प्रयान्ति
तद् ब्रह्म विद्धीति वदन्ति सर्वे ॥ ३१ ॥

हृत्पङ्कजे व्योम्नि यदेकरूपं
सत्यं सदानन्दमयं सुसूक्ष्मम् ।
तद् ब्रह्म निर्भासमयो गुहाया-
मिति श्रुतेश्चापि समामनन्ति ॥ ३२ ॥

अणोरणीयान् महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्य विशुद्धबुद्ध्या
प्रयाणकाले च विहीनशोका ॥ ३३ ॥

प्रभञ्जनं मूर्ध्निगतं सवह्निं
धिया समासाद्य गुरूपदेशात् ।

मूर्धानमुद्भिद्य पुनः समध्ये

प्राणं त्यजोङ्कारमनुस्मर त्वम् ॥ ३४ ॥

ईप्सया यदि शरीरविसर्गं

ज्ञातुमिच्छ(ति ? सि) सखे ! तव वक्ष्ये ।

व्याहर प्रणवमुन्नय मूर्ध्नि

भिद्य योजय सृजात्मनि कायम् ॥ ३५ ॥

इत्येवमुक्त्वा भगवान् रहस्ये

रहस्यजं मुक्तिकरं तु तस्याः ।

योगामृतं बन्धविनाशहेतुं

समाधिमास्ते रहसि द्विजेन्द्रः ॥ ३६ ॥

सा तं सुसम्पूज्य मुनिं महान्तं

विद्यामृतं ब्रह्मविदां वरिष्ठम् ।

गीर्भिः प्रणामैश्च सतां वरिष्ठा

सदा मुदं प्राप वरां विशुद्धाम् ॥ ३७ ॥

योगं सुसंगृह्य तदा रहस्ये

रहस्यजं मुक्तिकरं तु सा च ।

संसार + + + + दा मुदान्विता

वने रहस्यावसथे विवेश ॥ ३८ ॥

येन प्रपञ्चं परिपूर्णमेतद्

येनैव विश्वं प्रतिभाति सर्वम् ।

तं वासुदेवं श्रुतिमूर्ध्नि जातं

पश्यन् समास्ते हृदि मूर्ध्नि वाहम् ॥ ३९ ॥



यद्येकमव्यक्तमनन्तमच्युतं

प्रपञ्चजन्मादिकृदप्रमेयम् ।

तं वासुदेवं श्रुतिमूर्ध्नि जातं

पश्यन् समास्ते हृदि मूर्ध्नि वाहम् ॥ ४० ॥

एतत् पवित्रं परमं योगमष्टाङ्गसंयुतम् ॥ ४१ ॥

ज्ञानं पुण्यतमं गुह्यं कीर्तितं ते वरानने ।

य इदं शृणुयान्नित्यं योगाख्यानं नरोत्तमः ॥ ४२ ॥

सर्वपापविनिर्मुक्तः सम्यक् ज्ञानी भविष्यति ।

यस्त्वेतच्छ्रावयेद् विप्रान्नित्यं भक्तिसमन्वितः ॥ ४३ ॥

एकजन्मकृत पापं दिनैनैकेन नश्यति ।

शृणुयाद् यः सकृद्वापि योगाख्यानं नरोत्तमः ॥ ४४ ॥

अज्ञानजनितं पापं सर्वं तस्य प्रणश्यति ।

अनुतिष्ठन्ति ये नित्यमेतज्ज्ञानमतन्द्रिताः ॥ ४५ ॥

नित्यकर्माणि तं दृष्ट्वा देवाश्च प्रणमन्ति हि ।

तस्माद् ज्ञानेन देहान्तं नित्यकर्म यथाविधि ॥ ४६ ॥

कर्तव्यं देहिनां गार्गि ! योगश्च भवभीरुणा ॥ ४६½ ॥

इति योगयाज्ञवल्क्ये द्वादशोऽध्यायः ॥

समाप्तमिदं योगशास्त्रम् ॥

शुभं भूयात् ।

# Yoga-Yajnavalkya

Translated by

**A. G. Mohan**

(2000)

Edited by

**John. J. Ely Ph.D.**

**Ganesh & Co.**
**Madras**

# Table of Contents

# Translator's Introduction

In 1975, I began study of the Yoga Yajnavalkya, a very ancient, comprehensive, authentic and logical exposition of the practice of Yoga, with my teacher, Sri T. Krishnamacharya. Although there are many other, better-known texts on Yoga, such as the Hathayogapradipika, Gheranda Samhita, Siva Samhita, Yoga Kundalini Upanishad, and Yogatattvopanishad, he regarded this as one of the most important yoga text. This is partly because all of these later texts have borrowed slokas (verses) from the Yoga Yajnavalkya. As I studied this text, over years, reflecting on it, continuing to practice and teach yoga, the depths of its practical teachings began to unfold. For example, I have found the Pranayama techniques discussed in this text to be very useful in my teaching. I have translated this book primarily from the point of view of a yoga teacher and practitioner. Some sections of this text were not clear to me, especially in the area of Kundalini. However, my studies in the last decade on other areas of Vedic sciences like Ayurveda, Saktatantra etc. helped to clear some of these doubts. This translation is based on the BBRA Society Monograph, No.3, Bombay, 1954. The BBRA publication contains 506 verses and has been collated form 16 ancient manuscripts. (Refer Appendix I for other details)

Furthermore, as outlined later, there are several features which are unique to this text. From a practical point of view, the most striking feature of this text is the detailed explanation of the spiritual and the therapeutic applications of Pranayama, the science of controlling the vital currents by way of breath control. Western readers may find several aspects of the Vedic tradition implicitly assumed or explicitly discussed herein somewhat difficult to follow. For example, the chapter on meditation (Dhyana) describes the imaging of the Divine as "with form" (saguna) for meditative purposes. This practice is derived directly from the Vedic tradition, which prescribes meditation on a particular form of the Divine (saguna Brahman; for example, Siva or Vishnu) as a method to reach the transcendent, formless Deity (nirguna Brahman; or the Godhead, in Western theology). Also, the text places rather great importance on the Vedic concept of varnashramadharma, the division of labor in traditional Vedic society and the corresponding four stages of life. Although I have tried to briefly explain the significance of varnashramadharma and its centrality in the Vedic tradition, I realize that the fuller discussion necessary to do it justice is beyond the scope of this book. The reader should bear in mind, however, that the yoga teachings described herein can, then as now, only be fully appreciated and realized within the context of an entire way of live.

I have intended for a long time to translate this text. But it has only became a reality thanks to the efforts of my daughter, Nitya, and my son, Ganesh, an Ayurvedic medical student, both of whom assisted in the translation and tirelessly typed at the computer, proofreading and making corrections. I thank my wife, Indra, for the drawings and for her assistance and valuable suggestions as a yoga teacher. I also thank Sri R. Krishnamurthy Sastrigal, Principal of the Sanskrit College, Madras, India, for his assistance in the comparitive study of the various readings of the manuscripts before translation. Many thanks are also due to John J. Ely, whose patient editing of the English Introduction, Appendix, and chapter summaries in this text has helped make it possible for this classic work on yoga to reach a wider audience.

I humbly place this book at the feet of my acarya, Sri T. Krishnamacharya.

Do you direct the
?

lated to Himsa or
Non-violence does
love. It represents

is abode, it means
ve up their enmity

since we also find

e Mother Goddess
stage in the past a
ractices are called

in this text. Some
h the proximity of
practice distancing
our memories and
self control.



# Unique Features of this Text

1) The Yoga Yajnavalkya is an ancient text. It's origin has been traced to the period between the second century B.C.E. and fourth century C.E. Its very age lends credibility to the authenticity of the views on yoga expounded therein. Furthermore, it's high regard during Vedic times as an authentic yoga text is readily apparent from the fact that many well-known yoga texts of later times, including the well-known Hatayogapradapika of Svatmarama, the Yoga Kundali and Yoga Tattva Upanishads, and so on, either quote extensively or make frequent references to the Yoga Yajnavalkya. Clearly, the Yoga Yajnavalkya not only preceded those and many others later texts, but it was also either the original source or the inspiration for many concepts, practices and passages. (Detailed references of extensive later borrowings were compiled by Sri P. C. Divanji in his 1954 BBRA monograph, which has been abstracted and rewritten here as Appendix 1.)

2) The method of Yoga described in this text is both comprehensive and universally applicable. Age, sex, race, caste and occupation pose no hurdles for the sincere practitioner. Modifications to the basic yogic practices are suggested to suit various individual cases and are discussed in detail. For example, the Yoga Yajanvalkya clearly states in several places that "OM" is not a generic mantra meant for everyone. It was only prescribed for the first three divisions of Vedic society, while other mantras, like "Namah," were prescribed for the fourth division.

3) This text clearly establishes that Sanyasa, in the strictest sense of or becoming a renunciate monk, is not a prerequisite for the achievement of freedom (moksha). Indeed, it is well-known that many ancient Vedic rshis, including Yajnavalkya himself, were householders. In contrast to other Indian schools of spiritual liberation which both emphasized and were based upon an abstinent monastic class, the focus on house-holders is one of the most wonderful and unique facet of Vedic wisdom. The clear message, echoed in the Bhagavad Gita, is that one can attain freedom through the practice of Yoga while following the Varnashramadharma, that is, while living in society, maintaining a job, raising a family, and attending to numerous worldly responsibilities. The Yoga Yajnavalkya demonstrates that we do not need to give up the world. We can be in the world, but not of the world, by giving up our mind and its bundle of habits and karmic tendencies (Vasanas).

4) Partly as a consequence or illustration of the last point, the text takes the form of a conversation between a husband and wife. Yajnavalkya explains the principles and practice of Yoga, the path to freedom, to Gargi, his wife. This didactic structure itself dispels the false notion that, during Vedic times, Yoga and other spiritual practices were followed only by men and not by women. The Yoga Yajnavalkya demonstrates that Vedic culture provided women with equal opportunities and encouragement for their spiritual pursuits to attain freedom.

5) This book dispels much of the aura of mystery surrounding the concept of Kundalini, by explaining it logically and relating it to other terms and concepts in Vedic thought, such as Agni, Prana, the nadis, and so on.

6) Likewise, the various concepts and methods of yoga are presented in a coherent, orderly and very logical manner in this text. The eight limbs of Yoga are discussed in detail and in sequence, each in a separate chapter, with the preparation, performance and the results described in sequence. This orderly presentation facilitates the comprehension of these concepts and the application of the practices.

7) The concept of Prana and its various divisions and their functions are explained clearly. as are the origin, function, position and the connections between the primary Nadis.

8) A highly prominent feature of this text, which clearly sets it apart from other texts on yoga, is the comprehensive discussion of Pranayama. Up to a hundred slokas are devoted to elucidating the various techniques, applications and results of Pranayama. The text also discusses the use of Pranayama as a therapeutic tool, its role in Ayurveda, and methods for incorporating Pranayama with Pratyahara, Dharana and the other limbs of Patanjali yoga.

9) An important feature of the Yoga proposed here is that it takes the form of a "Samuccayam," that is, a combination of Karma (the actions prescribed according to the Varnasramadharma) and Jnana (Yoga). According to Yajnavalkya and the Vedic tradition, Yoga is to be practiced within the overall context of a proper lifestyle. The repeated emphasis on the performance of "nityakarma" (daily rituals) and "vaidika dharma" (actions as prescribed by the Vedas) is a closely related feature of the text. For example, each chapter concludes with Yajnavalkya advice to his wife, Gargi, to perform nityakarma and vaidika dharma along with the practice of Yoga.

10) This book provides insight into the various forms of meditation practiced during the Vedic period. Perhaps most importantly, it addresses the issue of how we can use form (Saguna Brahman, or God with form) to go beyond form (Nirguna Brahman, or the Godhead). The distinction between these two aspects of the Deity and their relationships is crucial because worship of a Deity with form (Sa-guna) was so often mistaken for mere idol worship. However, the voluntary limitation of God's omnipotence for purposes of worship and meditation by His believers, in order to realize the transcendent, is absolutely fundamental to Vedic thought and indeed forms the root of so-called "Hindu Polytheism."

litate the proper
/, action which is
t of passions and
uch actions were
generated. Even
begun, for when
other division?"
who is inclined
vho is brave and
inclined towards

1. Given a good
e to break these
and to individual
peaceful society

ıanges that have
ıgh 300 years of
ıt drive toward
amadharma has
"caste system,"
ıe reasons why
ı presented here
of labor and of



# Summary of the Text

## Chapter I

The text begins with a description of the qualities of Yajnavalkya and his wife Gargi, who live in a hermitage with many other great sages. In an assembly of such sages, Gargi requests Yajnavalkya to teach her the essence of Yoga. Yajnavalkya consents with happiness. He meditates on the Divine (Narayana), and then begins his discourse. He describes how he approached Bramha to learn the highest truth - the way to freedom. Bramha graciously explains to him the means to freedom. He says that doing one's duties, as prescribed in the Varnashramadharma, (Refer Vedic way of life) with knowledge and without desire, is the path to freedom. Doing the same actions, but with desire is sure to lead one to further bondage. Then Bramha goes on to describe the manner in which one should lead one's life according to the Varnashramadharma. Concluding with this, Bramha himself recedes into the state of Yoga. Gargi hears this exposition of the means to freedom as said by Bramha to Yajnavalkya, and then requests Yajnavalkya to elaborate upon it further. Yajnavalkya now explains the Yoga that one should practice, along with the actions prescribed by the Varnashramadharma, to attain freedom. He defines Yoga as the union of the Jivatma (self) and the Paramatma (Divine). This Yoga has eight limbs - Yama, Niyama, Asana, Pranayama, Pratyahara, Dharana, Dhyana, and Samadhi. Then Yajnavalkya lists the number of types of each limb, and explains in detail the first limb - Yama. The ten Yamas - ahimsa, satya, asteya, bramhacarya, daya, arjava, kshama, dhrti, mitahara, and souca - are then explained in detail. This concludes the first chapter.

## Chapter II

The second chapter deals with the observances (Niyamas), the second limb of Patanjali's astanga Yoga. The ten Niyamas are Tapas, Santosam, Astikyam, Danam, Iswarapujanam, Siddhantashravanam, Hri, Mati, Japam and Vratam. Yajnavalkya lists the ten Niyamas, and then defines each one of them. He explains in detail the various grades of recitation of mantra (Japam).

## Chapter III

Yajnavalkya describes certain selected asanas in this chapter. He begins with a list of the eight asanas which he is going to describe: Svastikasana, Gomukhasana, Padmasana, Virasana, Simhasana, Bhadrasana, Muktasana and Mayurasana. He then describes these asanas in the above mentioned order. He gives two variations of Svastikasana and Muktasana only. Then he says that all diseases are destroyed by the practice of Asanas along with Yama and Niyama. He concludes the chapter instructing Gargi to practice Pranayama, along with Yama, Niyama and Asana, after purifying the Nadis.

## Chapter IV

This chapter begins with Gargi requesting Yajnavalkya to explain in detail the method of purification of the nadis, along with their position, origin and termination, as well as the position, function and movement of the vayus. Yajnavalkya begins with the concept of dispersion of Prana and then emphasizes the importance of centering the Prana. Then the shape and position of the center of the body (dehamadhyam), and the kandasthanam in humans, animals and birds are given in order. Then follows a description of the abode of the jiva - the cakra at the navel (nabhicakra), the kundalini and their respective positions in the body. Then the awakening of the kundalini and the upward movement of the prana are described. Next, Yajnavalkya speaks of the nadis. He lists the fourteen important nadis, and describes the sushumna nadi as the most important one. Then he describes the ida and pingala nadis, and the relative position of the remaining eleven nadis. He gives further details

on the origin and termination of each of the nadis. Yajnavalkya then lists the ten life forces (vayus) and their functions. He describes the position of the most important vayu in the body, the prana vayu, then describes the location of the apana vayu, the other three important vayus (vyana, udana and samana vayus), as well as the remaining five vayus. Then he discusses the role of prana vayu in the digestion and assimilation of food. Finally, he describes clearly the principal function of each of the ten vayus. He concludes by instructing Gargi to perform Nadisodhana in the prescribed manner, after having understood everything explained so far.

## Chapter V

In this chapter, Yajnavalkya discusses the preparations and practice of purifying the Nadis (Nadishodana). He first describes the qualities that an ideal aspirant should possess before attempting to purify the Nadis. Then the ideal environment and daily routine for the practice are described. Following this, he describes an alternative opinion, proposed by some other great sages. The preparations for the practice of Nadishodana, the technique of the practice, and the daily routine and duration of the practice, in accordance with this second opinion, are given in detail. Yajnavalkya concludes the chapter describing the results of such a practice.

## Chapter VI

This chapter discusses in detail the various types of Pranayama, the procedures of practising them and their benefits. Yajnavalkya begins by defining Pranayama as balancing prana and apana. He relates the three components of Pranayama (inhalation, holding and exhalation) to the three syllables of Om, thus saying that Pranayama is simply another form of Om (Pranava). He proposes two procedures of pranayama, involving different ratios of inhalation, holding and exhalation. The first three divisions of society may use the Gayatri or the pranava, while the fourth division and women should use other mantras, such as Namah. Then three grades of Pranayama are described. Yajnavalkya describes the type of pranayama that leads to lightness of the body and absorption of the mind, as the best one. He then explains the concept and practice of kevala kumbhakam and sahita kumbhakam.

Then we are given another definition of Pranayama: pranayama means retaining the prana within the body. Yajnavalkya gives, in detail, two means to master the prana: one using the Shanmukhi mudra, and the other, an alternative involving asana and pranava. He also describes the results of focussing the prana at various places in the body, and how diseases are destroyed by such a practice, which illustrates the therapeutic applications of pranayama. Yajnavalkya also deals comprehensively with the mantras to be used by each of the four divisions of society during pranayama practice. He then goes on to describe the movement of the prana to the crown of the head (Brahmarandhram) and the sound (nada) that arises during the upward movement of the prana. The role of pranayama in the destruction of the kundalini and the removal of ignorance (avidya) is also described. The chapter concludes by stressing the importance of the practice of pranayama and daily rituals (nityakarma) to achieve the union of the self with the Divine.

## Chapter VII

The first four limbs of Yoga were described in the preceeding 6 chapters. Here, Yajnavalkya begins explanation of Pratyahara, the fifth limb of Yoga. Five different forms of Pratyahara are suggested. The fourth and perhaps most important form is defined as "Having drawn the prana from point to point, holding it in the 18 vital points (Marmasthanas)". These eighteen vital points are then listed and the distance between each of them is given in order. Following this, the method of drawing and focussing the prana in each of these points is explained in detail, and then the benefits of such a practice are also discussed. Finally, Yajnavalkya explains the fifth form of Pratyahara, and how one can reach freedom by focussing the prana in certain vital points.

